भवनवासिदेवदेवीनां तथा व्यन्तरदेवदेवीनां जघन्योत्कृष्टस्थितियंत्रमिदम्—

| दक्षिणस्यां दिशि | जघन्यायुः | उत्कृष्टायुः | उत्तरस्यां दिशि | जघन्यायुः | उत्कृष्टायुः |
| --- | --- | --- | --- | --- | --- |
| असुराणां देवानां | १०००० वर्ष | एकं सागरोपमं | असुराणां देवानां | १०००० वर्ष | एकं सागरोपमं साधिकं |
| असुरदेवीनां | १०००० वर्ष | सार्धं त्रिपल्योपमं | असुरदेवीनां | १०००० वर्ष | सार्धं चतुःपल्योपमं |
| नागादिनवदेवानां | १०००० वर्ष | सार्धं पल्योपमं | नागादिनवदेवानां | १०००० वर्ष | देशोनं द्विपल्योपमं |
| नागादिनवदेवीनां | १०००० वर्ष | अर्धपल्योपमं | नागादिनवदेवीनां | १०००० वर्ष | देशोनं एकपल्योपमं |
| व्यन्तरदेवानां | १०००० वर्ष | एकपल्योपमं | व्यन्तरदेवीनां | १०००० वर्ष | अर्धपल्योपमं |

ज्योतिष्कदेवदेवीनां जघन्योत्कृष्टायुःस्थितियंत्रमिदं ज्ञेयम्—

| ज्योतिष्कदेवानां | जघन्यायुः | उत्कृष्टायुः | ज्योतिष्कदेवीनां | जघन्यायुः | उत्कृष्टायुः |
| --- | --- | --- | --- | --- | --- |
| सर्वचन्द्राणां | पल्यचतुर्थांशः | लक्षाधिकैकपल्यं | चन्द्रदेवीनां | पल्यचतुर्थांशः | पञ्चाशत्सहस्रवर्षाधिकार्धपल्यं |
| सर्वसूर्यदेवानां | पल्यचतुर्थांशः | पल्याधिकैकसहस्रवर्षं | सूर्यदेवीनां | पल्यचतुर्थांशः | पञ्चशतवर्षाधिकार्धपल्यं |
| ग्रहदेवानां | पल्यचतुर्थांशः | एकपल्योपमं | ग्रहदेवीनां | पल्यचतुर्थांशः | अर्धपल्यं |
| नक्षत्रदेवानां | पल्यचतुर्थांशः | अर्धपल्योपमं | नक्षत्रदेवीनां | पल्यचतुर्थांशः | पल्यचतुर्थांशः साधिकः |
| तारकदेवानां | पल्याष्टमो भागः | पल्यचतुर्थांशः | तारकदेवीनां | पल्याष्टमो भागः | पल्याष्टमो भागः साधिकः |

तदेवमुक्ता ज्योतिष्काणामुत्कृष्टा जघन्या च स्थितिः । सम्प्रति वैमानिकानामुत्कृष्टां स्थितिमाह—

**दो साहि सत्त साहिय दस चउद्दस सत्तरेव अयराइं । सोहम्मा जा सुक्को तदुवरि इक्किक्कमारोवे ॥१२॥**

व्याख्या—सौधर्मात् सौधर्मकल्पात् यावत् शुक्रो महाशुक्राभिधः कल्पस्तावदनेन क्रमेणोत्कृष्टा स्थितिः प्रतिपत्तव्या, तद्यथा—सौधर्मे कल्पे देवानामुत्कृष्टा स्थितिर्द्वे अतरे इति संबध्यते, तरीतुमशक्यं प्रभूतकालतरणीयत्वात् अतरं सागरोपमं, द्वे सागरोपमे इत्यर्थः । ईशाने कल्पे ते एव द्वे सागरोपमे साधिके किञ्चित्समधिके उत्कृष्टा स्थितिः । सनत्कुमारे कल्पे उत्कृष्टा स्थितिः सप्त सागरोपमाणि । माहेन्द्रकल्पे तान्येव सप्त सागरोपमाणि साधिकानि । ब्रह्मलोके कल्पे दश सागरोपमाणि । लान्तके कल्पे चतुर्दश । महाशुक्रे कल्पे सप्तदश । "तदुवरि इक्किक्कमारोवे" इति तस्य महाशुक्रस्य कल्पस्योपरि प्रतिकल्पं प्रतिग्रैवेयकं च पूर्वस्मात् पूर्वस्मादधिकमेकैकं सागरोपममुत्कृष्टायुश्चिन्तायामारोपयेत् । तद्यथा—सहस्रारे कल्पेऽष्टादश सागरोपमाण्युत्कृष्टा स्थितिः । आनतकल्पे एकोनविंशतिः । प्राणतकल्पे विंशतिः । आरणकल्प एकविंशतिः । अच्युते कल्पे द्वाविंशतिः । अधस्तनाधस्तनग्रैवेयके त्रयोविंशतिः । अधस्तनमध्यमग्रैवेयके चतुर्विंशतिः । अधस्तनोपरितनग्रैवेयके पञ्चविंशतिः । मध्यमाधस्तनग्रैवेयके षड्विंशतिः । मध्यममध्यमग्रैवेयके सप्तविंशतिः । मध्यमोपरितनग्रैवेयकेऽष्टाविंशतिः । उपरितनाधस्तनग्रैवेयके एकोनत्रिंशत् । उपरितनमध्यमग्रैवेयके त्रिंशत् । उपरितनोपरितनग्रैवेयक एकात्रिंशत् । विजयवैजयन्तजयन्तापराजितविमानेषु पुनरुत्कृष्टा स्थितिस्त्रयस्त्रिंशत्सागरोपमाणि । सर्वार्थसिद्धे तु महाविमाने त्रयस्त्रिंशत्सागोपमाणि अजघन्योत्कृष्टा स्थितिः ॥ १२ ॥

तथा चाह—

एस ठिई उक्कोसा तित्तीसं जाव हुंति सव्वट्ठे ।

व्याख्या—एषाऽनन्तरोक्ता द्विसागरोपमप्रभृतिका स्थितिरुत्कृष्टा प्रतिपत्तव्या । सा च "तदुवरि इक्किक्कमारोवे" इति वचनतस्तावत् प्रतिपत्तव्या यावत्सर्वार्थे, चशब्दस्यानुक्तसमुच्चयार्थस्य गम्यमानत्वात् विजयादिषु च त्रयस्त्रिंशत्सागरोपमाणि भवन्ति । आह—कथमेतदवगम्यते चशब्दस्यानुक्तसमुच्चयार्थस्य गम्यमानत्वात् विजयादिषु त्रयस्त्रिंशत्सागरोपमाण्युत्कृष्टा स्थितिर्यावता "तदुवरि इक्किक्कमारोवे" इतिवचनप्रामाण्यबलतस्तेषु द्वात्रिंशत्सागरोपमाण्युत्कृष्टा स्थितिरिति किं न भवति ? । नैतदेवं, प्रज्ञापनादिषु विजयादीनां त्रयस्त्रिंशत्सागरोपमप्रमाणाया उत्कृष्टस्थितेरभिधानात् । तथा च प्रज्ञापनाग्रन्थः—"विजयवेजयंतजयंतापराजियविमाणेसु णं भंते देवाणं केवइयं कालं ठिई पन्नत्ता ? गोयमा जहन्नेणं इक्कतीसं सागरोवमाइं, उक्कोसेणं तित्तीसं सागरोवमाइं" इति । तथा प्रज्ञापनाग्रन्थप्रामाण्यबलादेव च सर्वार्थसिद्धे महाविमाने त्रयस्त्रिंशत्सागरोपमप्रमाणा स्थितिरजघन्योत्कृष्टा प्राग्व्यावर्णिता । तथा चोक्तं प्रज्ञापनायां—"सव्वट्ठसिद्धे णं भंते महाविमाणे केवइयं कालं ठिई पन्नत्ता ? गोयमा अजहन्नमणुक्कोसेणं तित्तीसं सागरोवमाइं ठिई पन्नत्ता" इति ॥

तदेवमुक्ता वैमानिकदेवानामुत्कृष्टा स्थितिः । सम्प्रति जघन्यां विवक्षुराह—

इत्तो य जहन्नठिई वुच्छामि अहाणुपुव्वीए ॥ १२ ॥

व्याख्या—इत ऊर्ध्वं वैमानिकदेवानां जघन्यां स्थितिमानुपूर्व्या सौधर्मादिपरिपाट्या वक्ष्यामि ॥ १२ ॥

प्रतिज्ञातमेव निर्वाहयति—

**पलियं अहियं दो सार साहियं सत्तदस य चउद्दस य। सत्तरस सहस्सारे तडुवरि इक्किक्कमारोवे ॥ १४ ॥**

व्याख्या—सौधर्मे कल्पे जघन्या स्थितिः "पलिअं ति" एकं पल्योपमं। ईशाने कल्पे "अहियं ति" तदेव पल्योपमं किञ्चित्समधिकं जघन्या स्थितिः। सनत्कुमारे कल्पे द्वे सागरोपमे जघन्या स्थितिः। साहिय त्ति" ते एव द्वे सागरोपमे किञ्चित्समधिके माहेन्द्रकल्पे जघन्या स्थितिः। सप्त सागरोपमाणि ब्रह्मलोके। दश लान्तके। चतुर्दश महाशुक्रे। सप्तदश सहस्रारे। ततस्तस्य सहस्रारकल्पस्योपरि प्रतिकल्पं प्रतिग्रैवेयकं विजयादिचतुष्टये चैकैकं सागरोपममधिकं जघन्यस्थितिचिन्तायामारोपयेत्। तद्यथा—आनतकल्पेऽष्टादश सागरोपमाणि जघन्या स्थितिः। प्राणतकल्प एकोनविंशतिः। आरणकल्पे विंशतिः। अच्युतकल्प एकविंशतिः। अधस्तनाधस्तनग्रैवेयके द्वाविंशतिः। अधस्तनमध्यमग्रैवेयके त्रयोविंशतिः। अधस्तनोपरितनग्रैवेयके चतुर्विंशतिः। मध्यमाधस्तनग्रैवेयके पञ्चविंशतिः। मध्यममध्यमग्रैवेयके षड्विंशतिः। मध्यमोपरितनग्रैवेयके सप्तविंशतिः। उपरितनाधस्तनग्रैवेयकेऽष्टाविंशतिः। उपरितनमध्यमग्रैवेयक एकोनत्रिंशत्। उपरितनोपरितनग्रैवेयके त्रिंशत्। विजयवैजयन्तजयन्तापराजितविमानेष्वेकत्रिंशत् ॥ १४ ॥

तथा चानुत्तरविमानेषु जघन्योत्कृष्टस्थितिप्रतिपादकमिदमन्यकर्तृकं गाथाद्वयम्—

**तित्तीससागराइं उक्कोसेणं ठिई भवे चउसु। विजयाइसु विन्नेया जहन्नयं एगतीसं तु ॥ १५ ॥**

**तित्तीससागराइं सव्वट्ठविमाण आउयं जाण। अजहन्नमणुक्कोसा ठिई एसा वियाहिया ॥ १६ ॥**

व्याख्या—इदं गाथाद्वयमपि पाठसिद्धं ॥ १५–१६ ॥

सौधर्मादिदेवलोके जघन्योत्कृष्टस्थितियंत्रम्—

| देवलोके | जघन्यायुः | उत्कृष्टायुः |
|---|---|---|
| ५ सर्वार्थसिद्धे | ० | सागरोपमाणि ३३ |
| ४ अपराजिते | सागरोपमाणि ३१ | सागरोपमाणि ३३ |
| ३ जयन्ते | सागरो० ३१ | सागरो० ३३ |
| २ वैजयन्ते | सागरो० ३१ | सागरो० ३३ |
| १ विजये | सागरो० ३१ | सागरो० ३३ |
| ९ आदित्ये | सागरो० ३० | सागरो० ३१ |
| ८ प्रीतिकरे | सागरो० २९ | सागरो० ३० |
| ७ सौमनस्ये | सागरो० २८ | सागरो० २९ |
| ६ सुमनसे | सागरो० २७ | सागरो० २८ |
| ५ विशाले | सागरो० २६ | सागरो० २७ |
| ४ सर्वतोभद्रे | सागरो० २५ | सागरो० २६ |
| ३ मनोरमे | सागरो० २४ | सागरो० २५ |
| २ सुप्रतिबद्धे | सागरो० २३ | सागरो० २४ |

१ पठ्यमानपाठापेक्षया तु गाथात्रयमस्ति । तत्र प्रथमगाथायामेवं पाठनिका कर्तव्या—यदि सर्वार्थसिद्धौ उत्कृष्टा स्थितिस्त्रयस्त्रिंशत्सागरोपमाणि तर्हि विजयादिषु उत्कृष्टा जघन्या च स्थितिः कियतीत्याशङ्कायामाह—"तित्तीसेत्यादि" । ननु विजयादिषु त्रयस्त्रिंशत्कथमुक्ता यावता "तदुवरि इक्किक्कमारोवे" इतिवचनात् द्वात्रिंशत्सागरोपमाणि किं न भवन्तीत्याशङ्क्याह—"दो वारा विजयाइसु" इत्यादि, अनया उत्कर्षतः षट्षष्टिः ६६ सागरोपमाणि सम्यक्त्वकालः प्रतिपादितोऽतस्त्रयस्त्रिंशदेव लभ्यन्ते । तर्हि सर्वार्थे जघन्या स्थितिः कियतीत्याह, एवं गाथात्रयमपि व्याख्येयम् ॥ क्वचित्पुस्तके एवैतद्दरीदृश्यते ।

| | | |
|---|---|---|
| १ सुदर्शने | सागरो० २२ | सागरो० २३ |
| १२ अच्युते | सागरो० २१ | सागरो० २२ |
| ११ आरणे | सागरो० २० | सागरो० २१ |
| १० प्राणते | सागरो० १९ | सागरो० २० |
| ९ आणते | सागरो० १८ | सागरो० १९ |
| ८ सहस्रारे | सागरो० १७ | सागरो० १८ |
| ७ शुक्रे | सागरो० १४ | सागरो० १७ |

| | | |
|---|---|---|
| ६ लांतके | सागरो० १० | सागरो० १४ |
| ५ ब्रह्मलोके | सागरो० ७ | सागरो० १० |
| ४ माहेन्द्रे | सागरोपमे २ साधिके | सागरोपमाणि ७ साधिकानि |
| ३ सनत्कुमारे | सागरोपमे २ | सागरोपमाणि ७ —— |
| २ ईशाने | पल्योपमं १ साधिकं | सागरोपमे २ साधिके |
| १ सौधर्मे | पल्योपमं १ | सागरोपमे २ |

सम्प्रति वैमानिकदेवीनां जघन्योत्कृष्टस्थितिप्रतिपादनार्थमाह—

**सपरिग्गहेयराणं सोहम्मीसाण पलिय साहीयं । उक्कोस सत्त पन्ना नव पणपन्ना य देवीणं ॥ १७॥**

व्याख्या—इह वैमानिकदेवीनामुत्पत्तिः सौधर्मकल्पे ईशानकल्पे च । ताश्च द्विधा परिगृहीता अपरिगृहीताश्च । परिगृहीताः कुलाङ्गनाकल्पाः, अपरिगृहीता गणिकासमानाः । तत्र सपरिग्रहाणां परिगृहीतानामितरासामपरिगृहीतानां जघन्या स्थितिः सौधर्मे कल्पे ईशाने कल्पे च यथासङ्ख्यं पल्यं पल्योपमं साधिकं च, । किमुक्तं भवति? सौधर्मे कल्पे परिगृहीतानामपरिगृहीतानां च देवीनां जघन्यमायुः पल्योपमं, ईशाने कल्पे परिगृहीतानामपरिगृहीतानां च देवीनां साधिकं पल्योपममिति । तथा सौधर्मे कल्पे परिगृहीतानामपरिगृहीतानां चोत्कृष्टमायुर्यथाक्रमं सप्त पञ्चाशच्च पल्योपमानि, ईशाने

कल्पे परिगृहीतानामपरिगृहीतानां च नव पञ्चपञ्चाशच्च, इयमत्र भावना—सौधर्मे कल्पे परिगृहीतानामुत्कृष्टमायुः सप्त पल्योपमानि, अपरिगृहीतानां पञ्चाशत्पल्योपमानि. ईशाने कल्पे परिगृहीतानामुत्कृष्टमायुः नव पल्योपमानि, अपरिगृहीतानां पञ्चपञ्चाशदिति ॥ १७ ॥

सौधर्मेशानदेवीनां जघन्योत्कृष्टायुर्यंत्रकमिदम्—

| देवलोके | देवीनां | जघन्यायुः | उत्कृष्टायुः |
|---|---|---|---|
| सौधर्मदेवलोके | परिगृहीतानां | एकपल्योपमं | सप्त पल्योपमानि |
| सौधर्मदेवलोके | अपरिगृहीतानां | एकपल्योपमं | पंचाशत्पल्योपमानि |
| ईशानदेवलोके | परिगृहीतानां | साधिकैकपल्योपमं | नव पल्योपमानि |
| ईशानदेवलोके | अपरिगृहीतानां | साधिकैकपल्योपमं | पंचपंचाशत्पल्योपमानि |

तदेवमुक्ता सौधर्मादिषु प्रतिकल्पं वैमानिकदेवानां जघन्योत्कृष्टभेदभिन्ना स्थितिः, सम्प्रति प्रतिप्रस्तटं तां विवक्षुः प्रथमतः सौधर्मादिषु प्रस्तटसङ्ख्यामाह—

**दुसु तेरस दुसु बारस छ प्पण चउ चउ दुगे दुगे य चऊ। गेविज्जाइसु दसगं बावट्ठी उड्ढलोगम्मि॥१८॥**

व्याख्या—द्वयोः सौधर्मेशानकल्पयोः समभूमिकयोरेकवलयाकारतया व्यवस्थितयोस्त्रयोदश प्रस्तटाः। प्रस्तटा नाम वेश्मभूमिकाकल्पाः समानभूमिकविमानश्रेणयः। इह यद्यपि सौधर्मे ईशाने च कल्पे प्रत्येकं त्रयोदश प्रस्तटास्तथाप्येतौ

सौधर्मेशानकल्पावेकवलयाकारतया व्यवस्थिताविति तयोर्द्वयोः समुदितयोस्त्रयोदश प्रस्तटा विवक्षिताः । एवमुत्तरत्रापि सनत्कुमारमाहेन्द्रादावेकवलयाकाररूपे परिभावनीयं । तथा द्वयोः सनत्कुमारमाहेन्द्रयोः प्रायः समानभूमिकयोरेकवलयाकारतया व्यवस्थितयोर्द्वादश प्रस्तटाः । ब्रह्मलोके षट् । लान्तके पञ्च । महाशुक्रकल्पे चत्वारः । सहस्रारे चत्वारः । आनतप्राणतयोः कल्पयोः प्रायः समभूमिकयोरेकवलयाकारतया व्यवस्थितयोर्द्विके चत्वारः । तथा आरणाच्युतयोरपि प्रायः समानभूमिकयोरेकवलयाकारतया व्यवस्थितयोर्द्विके चत्वारः । "गेविज्जाइसु दसगं ति" ग्रैवेयकेषु नवसु नव प्रस्तटाः । पञ्चस्वनुत्तरेषु विमानेष्वेकः प्रस्तट इति ग्रैवेयकादिषु दश । तदेवं सर्वसङ्ख्यया ऊर्ध्वलोके द्वाषष्टिः प्रस्तटा भवन्ति ॥१८॥

सम्प्रति प्रतिप्रस्तटमायुर्विशेषपरिज्ञापनाय प्रथमं सौधर्मे कल्पे करणमाह—

**सोहम्मुक्कोसठिई सग पयर विहत्त इच्छ संगुणिया । पयरुक्कोसठिई उ जहन्न पलिओवमं पढमे ॥ १९ ॥**

व्याख्या—सौधर्मे कल्पे योत्कृष्टा स्थितिः सागरोपमद्वयलक्षणा प्राक् प्रतिपादिता सा स्वकैः स्वकीयैः प्रतरैर्विभज्यते । विभक्तायां चैतस्यां यल्लभ्यते तत् इच्छया यत्सङ्ख्ये प्रस्तटे उत्कृष्टा स्थितिर्ज्ञातुमिष्यते तत्सङ्ख्यया एकद्व्यादिकया गुण्यते, ततः प्रतरेष्वीप्सितप्रस्तटेषु यथावस्थिता उत्कृष्टाः स्थितय आगच्छन्ति । इदं सौधर्मकल्पे प्रस्तटेपूत्कृष्टस्थितिपरिज्ञापनाय करणं । जघन्यस्थितिपरिज्ञानोपायश्चायं—तत्रैवं स्थिते प्रथमे प्रस्तटे जघन्या स्थितिः कियतीति न ज्ञायते ततस्तां साक्षात् प्रतिपादयति—"जहन्नपलिओवमं पढमे" सौधर्मे कल्पे प्रथमे प्रस्तटे जघन्या स्थितिः पल्योपमं पल्योपमप्रमाणा ॥ १९ ॥

सम्प्रति करणवशलब्धामेव सौधर्मे कल्पे प्रतिप्रस्तटमुत्कृष्टां स्थितिं साक्षादुपदर्शयति—

**पलिओवमं जहन्ना दो तेरसभागा उदहिनामस्स । उक्कोसठिई भणिया सोहम्मे पत्थडे पढमे ॥ २० ॥**
**एवं डुगवुड्ढीए नेअव्वं जाव अंतिमं पयरं । भागेहिं तओ करणं जा तेरसमे डुवे अयरा ॥ २१ ॥**

व्याख्या—सौधर्मे कल्पे प्रथमे प्रस्तटे जघन्यास्थितिः पल्योपमं, उत्कृष्टा द्वौ त्रयोदशभागावुदधिनाम्नः सागरोपमस्य । तथाहि—सौधर्मे कल्पे द्वे सागरोपमे उत्कृष्टा स्थितिस्ततो द्विको ध्रियते, सौधर्मे च कल्पे प्रस्तटास्त्रयोदश, ततो द्विकस्य त्रयोदशभिर्भागो ह्रियते, स च भागं न प्रयच्छतीति लब्धौ द्वौ सागरोपमस्य त्रयोदशभागौ । तत्र किल प्रथमे प्रस्तटे उत्कृष्टा स्थितिर्ज्ञातुमिष्यते ततस्तावेकेन गुण्येते, एकेन च गुणितं तदेव भवतीत्यागता प्रथमे प्रस्तटे उत्कृष्टा स्थितिः द्वौ सागरोपमस्य त्रयोदशभागौ । यदा तु द्वितीये प्रस्तटे उत्कृष्टा स्थितिर्ज्ञातुमिष्यते तदा तौ द्वौ सागरोपमस्य त्रयोदशभागौ द्वाभ्यां गुण्येते, जाताश्चत्वारस्त्रयोदश भागाः सागरोपमस्य, एतावती द्वितीये प्रस्तटे उत्कृष्टा स्थितिः । यदा तु तृतीये प्रस्तटे उत्कृष्टा स्थितिर्ज्ञातुमिष्यते तदा तौ द्वौ सागरोपमस्य त्रयोदशभागौ त्रिभिर्गुण्येते, जाताः षट् सागरोपमस्य त्रयोदशभागाः, एतावती तृतीयप्रस्तटे उत्कृष्टा स्थितिः । एवं प्रतिप्रस्तटं द्विकवृद्ध्या सागरोपमसत्कत्रयोदशभागद्विकवृद्ध्या तावन्नेतव्यं यावत्सप्तमं प्रस्तटं, तस्मिंश्च सप्तमे प्रस्तटे तौ द्वौ सागरोपमस्य त्रयोदशभागौ सप्तभिर्गुण्येते, जाताश्चतुर्दश त्रयोदशभागाः । 'भागेहिं तओ करणं ति' ततो भागैः करणं कर्तव्यं सागरोपमं कर्तव्यमित्यर्थः तद्यथा—चतुर्दशानां सागरोपमानयनाय त्रयोदशभिर्भागो ह्रियते, लब्धमेकं सागरोपममेकश्च त्रयोदशभागः सागरोपमस्य, एतावती सप्तमे

प्रस्तटे उत्कृष्टा स्थितिः । एवमष्टमादिष्वपि प्रस्तटेषु प्रतिप्रस्तटं सागरोपमसत्कत्रयोदशभागद्विकं वर्धयता भागैश्च सागरोपमं कुर्वता तावद्गन्तव्यं यावत्त्रयोदशे प्रस्तटे शुभकान्तशुभवर्णशुभगन्धशुभलेश्यशुभस्पर्शसौधर्मावतंसकप्रभृतिषु विमानेषु द्वे परिपूर्णे सागरोपमे उत्कृष्टा स्थितिः । तथाहि—तौ द्वौ सागरोपमस्य त्रयोदशभागौ त्रयोदशभिर्गुण्येते, जाता षड्विंशतिः सागरोपमस्य त्रयोदशभागाः, तेषां सागरोपमानयनाय त्रयोदशभिर्भागो ह्रियते, लब्धे द्वे सागरोपमे इति । स्थापना—

सौधर्मेशानदेवलोकत्रयोदशप्रतरयंत्रम्—

| प्रतर | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | १३ |
| --- | --- | --- | --- | --- | --- | --- | --- | --- | --- | --- | --- | --- | --- |
| सागरोपम | ० | ० | ० | ० | ० | ० | १ | १ | १ | १ | १ | १ | २ |
| भाग | २ | ४ | ६ | ८ | १० | १२ | १ | ३ | ५ | ७ | ९ | ११ | ० |
| छेद | १३ | १३ | १३ | १३ | १३ | १३ | १३ | १३ | १३ | १३ | १३ | १३ | १३ |

जघन्या तु स्थितिर्या प्रथमे प्रस्तटे पल्योपमप्रमाणोक्ता सा सर्वेष्वपि द्रष्टव्या, न तु या पूर्वपूर्वप्रस्तटेषूत्कृष्टा सा उत्तरोत्तरप्रस्तटेषु जघन्येत्येवंरूपा, कुत इति चेत् एवंविधविशेषस्य सूत्रेऽनभिधानात् । अपि च सर्वस्यापि कल्पेन्द्रस्य लोकपालानां स्वस्वकल्पान्तिमप्रतरे विमानानि भवन्ति । वक्ष्यति च—"कप्पस्स अंतपयरे नियकप्पवडिंसया विमाणाउ । इंदनिवासा तेसिं चउद्दिसिं लोगपालाणं ॥ १ ॥" ततः सौधर्मे कल्पे लोकपालानां विमानानि त्रयोदशे प्रस्तटे, तेषां च लोकपालानां स्वस्वविमानाधिपतीनामपि स्थितिः सत्रिभागपल्योपमादिका, तद्यथा—पूर्वदक्षिणदिग्वर्तिनोर्यथाक्रमं सोम-

यमनाम्नोर्लोकपालयोः प्रत्येकं सत्रिभागं पल्योपमं, वरुणस्य पश्चिमदिग्भाविनो देशोने द्वे पल्योपमे, वैश्रम ( व ) णस्योत्तरदिग्भाविनः परिपूर्णे द्वे पल्योपमे । इत्थं चैषां स्थितिपरिमाणं पञ्चमाङ्गे तृतीये शतेऽष्टमोद्देशकेऽभिहितं । तत्र यदि या पूर्वपूर्वप्रस्तटेषूत्कृष्टा सा उत्तरोत्तरप्रस्तटेषु जघन्येत्येवं जघन्या परिकल्प्येत ततस्त्रयोदशे प्रस्तटे जघन्या प्राप्नोति सागरोपममेकमेकादश सागरोपमस्य त्रयोदशभागाः । अथ च त्रयोदशेऽपि प्रस्तटे वर्तमानानां लोकपालानां स्थितिः सत्रिभागपल्योपमादिका ततः सिद्धान्तविरोध इति सर्वत्रापि जघन्या स्थितिः पल्योपमप्रमाणाऽवसेया । लोकपालानां तु मध्यमा । तथा च सति न कश्चिद्विरोधः । एवमीशानकल्पेऽपि भावनीयं । नवरं तत्र त्रयोदशस्वपि प्रस्तटेषु जघन्यायामुत्कृष्टायां च स्थितौ किञ्चित्समधिकत्वं वेदितव्यमिति ॥ २०–२१ ॥

सम्प्रत्युत्तरकल्पेषु प्रतिप्रस्तटं स्थितिविशेषपरिज्ञानाय करणमाह—

सुरकप्पठिईविसेसो सगपयरविहत्त इच्छ संगुणिओ । हिट्ठिल्लठिईसहिओ इच्छियपयरम्मि उक्कोसा ॥२२॥

व्याख्या—सुरकल्पयोर्वैमानिकदेवकल्पयोः पूर्वोत्तरयोर्ये उत्कृष्टे स्थिती तयोर्विश्लेषोऽन्तरं क्रियते, किमुक्तं भवति ? या पूर्वकल्पसत्का उत्कृष्टा स्थितिः सा उत्तरकल्पगताया उत्कृष्टस्थितेरपनीयते, अपनीतायां च सत्यां यदवशिष्यते तद्विश्लेषे सति लब्धमिति सुरकल्पस्थितिविश्लेष उच्यते । ततः स्वकप्रतरैः स्वस्वकल्पगतैः प्रतरैर्विभज्यते, विभक्ते च सति यल्लभ्यते स इच्छया यत्सङ्ख्ये प्रतरे उत्कृष्टा स्थितिर्ज्ञातुमिष्यते तत्सङ्ख्यया गुण्यते । गुणिते च सति यद्भवति तदधस्तनस्थितिसहितमधस्तनकल्पसत्कोत्कृष्टस्थितिसमन्वितमीप्सिते प्रतरे उत्कृष्टस्थितिपरिमाणं भवति ॥ २२ ॥

तदेवमुक्तं करणं। सम्प्रति करणवशाल्लब्धमागतं सनत्कुमारे प्रतिपादयति—

**दो अयरा य जहन्ना पढमे पयरे सणंकुमारस्स। दो अयरा उक्कोसा बारस भागा य पंचन्ने ॥ २३ ॥**

**पंचुत्तरिया वुड्ढी नेयव्वा जाव अंतिमं पयरं। तो बारसम्मि पयरे संपुन्ना सायरा सत्त ॥ २४ ॥**

व्याख्या—सनत्कुमारस्य प्रथमे प्रस्तटे जघन्या स्थितिर्द्वे सागरोपमे। तथाहि—या पूर्वस्मिन् कल्पे उत्कृष्टा स्थितिः सा उत्तरस्मिन् कल्पे जघन्या। सौधर्मे च कल्पे त्रयोदशे प्रस्तटे उत्कृष्टा स्थितिर्द्वे सागरोपमे ततोऽत्र सनत्कुमारसत्के प्रथमे प्रस्तटे द्वे सागरोपमे जघन्या स्थितिः, उत्कृष्टा तु स्थितिस्तस्मिन् सनत्कुमारस्य प्रथमे प्रस्तटे द्वे सागरोपमे, पञ्च चान्ये सागरोपमस्य द्वादश भागाः। तथाहि—सौधर्मे कल्पे उत्कृष्टा स्थितिर्द्वे सागरोपमे, सनत्कुमारे कल्पे सप्त सागरोपमाणि, ततः सप्तभ्यो द्वे अपनीयेते, स्थितानि शेषाणि पञ्च सागरोपमाणि, सनत्कुमारे च कल्पे प्रस्तटा द्वादश, ततः पञ्चानां द्वादशभिर्भागो ह्रियते, तत्र भागहार्यो राशिरल्पत्वाद्भागं न प्रयच्छतीति लब्धाः पञ्च द्वादशभागाः, ते एकेन गुण्यन्ते, एकेन च गुणितं तदेव भवतीति जातास्त एव पञ्च द्वादशभागाः, तेऽधस्तनसौधर्माख्यकल्पगतद्विसागरोपमप्रमाणोत्कृष्टस्थितिसहिताः क्रियन्ते, आगताः सनत्कुमारे कल्पे प्रथमे प्रस्तटे उत्कृष्टा स्थितिर्द्वे सागरोपमे पञ्च सागरोपमस्य द्वादशभागाः। यदा तु द्वितीये प्रस्तटे उत्कृष्टा स्थितिर्ज्ञातुमिष्यते तदा ते पञ्च सागरोपमस्य द्वादशभागा द्वाभ्यां गुण्यन्ते, जाता दश, ते सागरोपमद्विकसहिताः क्रियन्ते, लब्धा द्वितीये प्रस्तटे उत्कृष्टा स्थितिर्द्वे सागरोपमे दश च द्वादशभागाः सागरोपमस्य। यदा तु तृतीये प्रस्तटे उत्कृष्टा स्थितिर्ज्ञातुमिष्यते तदा ते पञ्च सागरोपमस्य द्वादश भागास्त्रिभिर्गुण्यन्ते,

जाताः पञ्चदश द्वादशभागाः, ततः सागरोपमानयनाय तेषां द्वादशभिर्भागो ह्रियते, लब्धमेकं सागरोपमं शेषास्त्रयो द्वादशभागास्तिष्ठन्ति, सौधर्मकल्पगतं च सागरोपमद्विकं तत्र प्रक्षिप्यते, आगता तृतीये प्रस्तटे उत्कृष्टा स्थितिस्त्रीणि सागरोपमाणि त्रयः सागरोपमस्य द्वादशभागाः। एवं शेषेष्वपि प्रस्तटेषु भावनीयं। तत्र चतुर्थे प्रस्तटे उत्कृष्टा स्थितिः त्रीणि सागरोपमाणि अष्टौ सागरोपमस्य द्वादशभागाः। पञ्चमे प्रस्तटे चत्वारि सागरोपमाणि एकः सागरोपमस्य द्वादशभागः। षष्ठे प्रस्तटे चत्वारि सागरोपमाणि षट् सागरोपमस्य द्वादशभागाः। सप्तमे प्रस्तटे चत्वारि सागरोपमाणि एकादश सागरोपमस्य द्वादशभागाः। अष्टमे प्रस्तटे पञ्च सागरोपमाणि चत्वारः सागरोपमस्य द्वादशभागाः। नवमे पञ्च सागरोपमाणि नव सागरोपमस्य द्वादशभागाः। दशमे षट् सागरोपमाणि द्वौ सागरोपमस्य द्वादशभागौ। एकादशे प्रस्तटे षट् सागरोपमाणि सप्त सागरोपमस्य द्वादशभागाः। द्वादशे प्रस्तटे परिपूर्णानि सप्त सागरोपमाणि। तथा चाह—'पंचुत्तरिया' इत्यादि, प्रतिप्रस्तटं पञ्चोत्तरिका सागरोपमस्य द्वादशभागपञ्चकोत्तरा वृद्धिस्तावन्नेतव्या यावदन्तिमं द्वादशं प्रतरं। ततो द्वादशे प्रतरे संपूर्णानि सप्त सागरोपमाणि उत्कृष्टा स्थितिः। तानि च समसमप्रभप्रभासभास्वरविमलकाञ्चनकूटसनत्कुमारावतंसकप्रभृतिविमानेषु द्रष्टव्यानि। उक्तं च—"जे देवा समं समप्पभं पभासं भासुरं विमलं कंचणकूडं सणंकुमारवडिंसगविमाणं देवत्ताए उववन्ना तेसिणं देवाणं उक्कोसेणं सत्त सागरोवमाइं ठिई पन्नत्ता" इति। जघन्या तु सर्वत्रापि सागरोपमद्विकप्रमाणा। एवं माहेन्द्रे कल्पे प्रतिप्रस्तटमुत्कृष्टा जघन्या च स्थितिः परिभावनीया। नवरं सर्वत्र समधिकत्वं वाच्यमिति ॥ २३–२४ ॥

सनत्कुमार ३ माहेन्द्र ४ देवलोके द्वादशप्रतरयन्त्रमिदम्—

| | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| प्रतरे | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ |
| सागरोपमाणि | २ | २ | ३ | ३ | ४ | ४ | ४ | ५ | ५ | ६ | ६ | ७ |
| भागाः | ५ | १० | ३ | ८ | १ | ६ | ११ | ४ | ९ | २ | ७ | ० |
| छेदः | १२ | १२ | १२ | १२ | १२ | १२ | १२ | १२ | १२ | १२ | १२ | १२ |

सम्प्रति ब्रह्मलोके करणवशलब्धं प्रतिप्रस्तटं स्थितिमानमाह—

सत्तयराइं जहन्ना पढमे पयरम्मि बंभलोयस्स । उक्कोसा सत्तयरा तिन्निय छन्भाग निद्दिठा ॥ २५ ॥

एवं तिगवुड्ढीए बीयाउ आरभित्तु भागेहिं । करणं ता नेयव्वं दस अयरा जाव छट्ठम्मि ॥ २६ ॥

व्याख्या—ब्रह्मलोकस्य कल्पस्य सत्के प्रथमे प्रस्तटे जघन्या स्थितिः सप्त सागरोपमाणि "या पूर्वस्मिन् कल्पे उत्कृष्टा सा उत्तरस्मिन् जघन्या" इतिवचनप्रामाण्यात् उत्कृष्टा सप्त सागरोपमाणि त्रयश्चान्ये सागरोपमस्य षड्भागाः । तथाहि—सनत्कुमारे कल्पे उत्कृष्टा स्थितिः सप्त सागरोपमाणि, ब्रह्मलोके कल्पे दश, ततो दशभ्यः सप्तापनीयन्ते, अपनीतेषु च तेषु स्थितानि शेषाणि त्रीणि सागरोपमाणि, ब्रह्मलोके च कल्पे प्रस्तटाः षट्, ततस्त्रयाणां षड्भिर्भागो ह्रियते, भागहार्यश्च त्रिकरूपो राशिरल्पत्वाद्भागं न प्रयच्छतीति लब्धास्त्रयः सागरोपमस्य षड्भागाः तत्र किल प्रथमे प्रस्तटे उत्कृष्टा स्थितिर्ज्ञातुमिष्यते, ततस्ते त्रयः षड्भागा एकेन गुण्यन्ते, एकेन च गुणितं तदेव भवतीति जातास्त एव त्रयः षड्भागाः सागरोपमस्य, तेऽधस्तनसनत्कुमाराख्यकल्पगतसप्तसागरोपमलक्षणोत्कृष्टस्थितिसहिताः क्रियन्ते, आगता ब्रह्मलोके प्रथमे प्रस्तटे

उत्कृष्टा स्थितिः सप्त सागरोपमाणि त्रयः सागरोपमस्य षड्भागाः । यदा तु द्वितीये प्रस्तटे उत्कृष्टा स्थितिर्ज्ञातुमिष्यते तदा ते त्रयः षड्भागा द्वाभ्यां गुण्यंते. जाताः षट्. तेषां सागरोपमानयनाय षड्भिर्भागो ह्रियते. लब्धमेकं सागरोपमं. तत्साग-रोपमसप्तकसहितं क्रियते. आगता द्वितीये प्रस्तटे उत्कृष्टा स्थितिरष्टौ सागरोपमाणि । तानि अर्चिरर्चिमालिवैरोचनप्र-भङ्करचन्द्राभसूर्याभरिष्टाभारुणाभानुत्तरावतंसकप्रभृतिषु विमानेषु । एवं शेषेष्वपि प्रस्तटेषु करणभावना कर्तव्या । तत्र तृतीये प्रस्तटे उत्कृष्टा स्थितिरष्टौ सागरोपमाणि त्रयः सागरोपमस्य षड्भागाः । चतुर्थे प्रस्तटे नव सागरोपमाणि । तानि ब्रह्मसुब्रह्मब्रह्मावर्तब्रह्मप्रभब्रह्मकान्तब्रह्मवर्णब्रह्मलेश्यब्रह्मोत्तरावतंसकसूर्यसूर्यावर्तसूर्यप्रभसूर्यकान्तसूर्योत्तरावतंसकप्रभृतिषु विमानेषु । पञ्चमे प्रस्तटे नव सागरोपमाणि त्रयः सागरोपमस्य षड्भागाः । षष्ठे प्रस्तटे दश सागरोपमाणि । तथा चाह—"एवं तिगेत्यादि" एवमुक्तेन प्रकारेण त्रिकवृद्ध्या प्रतिप्रस्तटं सागरोपमसत्कषड्भागत्रयवृद्ध्या द्वितीयाच्च प्रस्तटादारभ्य भागैः करणं सागरोपमं च कुर्वता तावन्नेतव्यं यावत् षष्ठे प्रतरे दश अतराणि सागरोपमाणि । तानि च घोषसुघोषमहाघोषनन्दि-घोषसुस्वरमनोरमरम्यरम्यकरमणीयब्रह्मलोकावतंसकादिषु विमानेषु । जघन्या तु सर्वत्रापि सप्तसागरोपमप्रमाणा ॥२५–२६॥

ब्रह्मदेवलोके षट्प्रतरयंत्रमिदम्—

| प्रतर | १ | २ | ३ | ४ | ५ | ६ |
|---|---|---|---|---|---|---|
| सागरोपम | ७ | ८ | ८ | ९ | ९ | १० |
| भाग | ३ | ० | ३ | ० | ३ | ० |
| छेद | ६ | ६ | ६ | ६ | ६ | ६ |

सम्प्रति करणवशलब्धं लान्तके प्रतिप्रस्तटं स्थितिमानमाह—

दस अयराइं जहन्ना पढमे पयरम्मि लंतगस्स ठिई ।
उक्कोसा दस अयरा चत्तारि य पंचभागा उ ॥ २७ ॥

चउरुत्तरिया वुड्ढी बीयाउ आरब्भित्तु भागेहिं । करणं ता नेयव्वं चोद्दस अयराइं पंचमए ॥ ४७ ॥

व्याख्या—लान्तकस्य कल्पस्य सम्बन्धिनि प्रथमे प्रस्तटे जघन्या स्थितिर्दश अतराणि सागरोपमाणि उत्कृष्टा दश सागरोपमाणि चत्वारश्च पञ्चभागाः सागरोपमस्य । तथाहि—ब्रह्मलोके कल्पे उत्कृष्टा स्थितिर्दश सागरोपमाणि, लान्तके कल्पे चतुर्दश, ततश्च चतुर्दशभ्यो दश अपनीयन्ते, स्थितानि शेषाणि चत्वारि सागरोपमाणि, लान्तके पञ्च, ततश्चतुर्णां पञ्चभिर्भागो ह्रियते, भागं च भागहार्यो राशिर्न प्रयच्छतीति लब्धाश्चत्वारः पञ्चभागाः सागरोपमस्य, ते एकेन गुण्यन्ते, एकेन च गुणितं तदेव भवतीति जातास्त एव चत्वारः सागरोपमस्य पञ्चभागाः, तेऽधस्तनब्रह्मलोका-ख्यकल्पसत्कदशसागरोपमप्रमाणोत्कृष्टस्थितिसहिताः क्रियन्ते, आगता लान्तके कल्पे प्रथमे प्रस्तटे उत्कृष्टा स्थितिर्दश साग-रोपमाणि चत्वारश्च पञ्चभागाः सागरोपमस्य । यदा तु द्वितीये प्रस्तटे उत्कृष्टा स्थितिर्ज्ञातुमिष्यते तदा ते चत्वारः पञ्च-भागा द्वाभ्यां गुण्यन्ते, जाता अष्टौ, तेषां सागरोपमानयनाय पञ्चभिर्भागो ह्रियते, लब्धमेकं सागरोपमं, शेषास्त्रयः सागरोपमस्य पञ्चभागाः । एतत्सर्व सागरोपमदशकसहितं क्रियते, तत आगता द्वितीये प्रस्तटे उत्कृष्टा स्थितिरेकादश सागरोपमाणि त्रयः सागरोपमस्य पञ्चभागाः, एवं तृतीयादिष्वपि प्रस्तटेषु करणभावना कर्तव्या । ततस्तृतीये प्रस्तटे उत्कृष्टा स्थितिर्द्वादश सागरोपमाणि द्वौ सागरोपमस्य पञ्चभागौ । चतुर्थे प्रस्तटे त्रयोदश सागरोपमाणि एकः सागरो-पमस्य पञ्चभागः । पञ्चमे प्रस्तटे परिपूर्णानि चतुर्दश सागरोपमाणि । तथा चाह—"चउरुत्तरिया" इत्यादि, उक्तप्र-कारेण प्रतिप्रस्तटं चतुरुत्तरिका सागरोपमसत्कपञ्चभागचतुष्टयोत्तरा वृद्धिः, तथा द्वितीयात्तु प्रस्तटादारभ्य भागैः करणं

सागरोपमकरणं च कुर्वता तावन्नेतव्यं यावत्पञ्चमे प्रस्तटे परिपूर्णानि चतुर्दश सागरोपमाणि भवन्ति। जघन्या तु सर्वत्र दशसागरोपमप्रमाणा ॥ २७–२८ ॥

सम्प्रति महाशुक्रे कल्पे करणवशाल्लब्धं प्रतिप्रस्तटं स्थितिमानमाह—

**चोद्दस अयर जहन्ना पढमे पयरम्मि ठिई महासुक्के। ते चेव य उक्कोसा तिन्नि य चउभाग अन्नेउ ॥२९॥**
**एवं तिगवुड्ढीए बिइयाउ आरभित्तु भागेहिं। करणं ता नेयव्वं सतरस अयरा चउत्थम्मि ॥ ३० ॥**

व्याख्या—महाशुक्रे कल्पे प्रथमे प्रस्तटे जघन्या स्थितिश्चतुर्दश सागरोपमाणि। युक्तिरत्र प्रागुक्तैवानुसरणीया। उत्कृष्टा तान्येव चतुर्दश सागरोपमाणि त्रयश्चान्ये सागरोपमस्य चतुर्भागाः। तथाहि—लान्तके कल्पे उत्कृष्टा स्थितिश्चतुर्दश सागरोपमाणि, महाशुक्रे कल्पे सप्तदश, ततः सप्तदशभ्यश्चतुर्दशापनीयन्ते, अपनीतेषु च तेषु शेषाणि तिष्ठन्ति त्रीणि सागरोपमाणि, महाशुक्रे च कल्पे प्रस्तटाश्चत्वारः, ततस्त्रयाणां चतुर्भिर्भागो ह्रियते, तत्र भागहार्यो राशिरल्पत्वाद्भागं न प्रयच्छतीति लब्धास्त्रयः सागरोपमस्य चतुर्भागाः, ते एकेन गुण्यन्ते, एकेन च गुणितं तदेव भवतीति जातास्त्रयश्चतुर्भागाः सागरोपमस्य, तेऽधस्तनलान्तकाख्यकल्पसत्कचतुर्दशसागरोपमप्रमाणोत्कृष्टस्थितिसहिताः क्रियन्ते, आगता महाशुक्रे कल्पे प्रथमे प्रस्तटे उत्कृष्टा स्थितिश्चतुर्दश सागरोपमाणि त्रयः सागरोपमस्य चतुर्भागाः। यदा तु द्वितीये प्रस्तटे स्थितिरुत्कृष्टा ज्ञातुमिष्यते तदा ते त्रयश्चतुर्भागा द्वाभ्यां गुण्यन्ते, जाताः षट्, तेषां सागरोपमानयनाय चतुर्भिर्भागो ह्रियते, लब्धमेकं सागरोपमं, शेषौ द्वौ सागरोपमस्य चतुर्भागौ तिष्ठतः, एतत्सागरोपमचतुर्दशकसहितं क्रियते, तत आग-

ता द्वितीये प्रस्तटे उत्कृष्टा स्थितिः पञ्चदश सागरोपमाणि द्वौ च सागरोपमस्य चतुर्भागौ। एवं तृतीयचतुर्थयोरपि प्रस्तटयोः करणमनुसर्तव्यं। तत्र तृतीये प्रस्तटे उत्कृष्टा स्थितिः षोडश सागरोपमाणि एकश्च सागरोपमस्य चतुर्भागः। चतुर्थे प्रस्तटे परिपूर्णानि सप्तदश सागरोपमाणि। तथा चाह—"एवं तिगवुड्ढीए" इत्यादि, एवमुक्तेन प्रकारेण प्रतिप्रस्तटं त्रिकवृद्ध्या सागरोपमसत्कचतुर्भागत्रिकवृद्ध्या तथा द्वितीयात्प्रस्तटादारभ्य भागैः करणं सागरोपमकरणं च कुर्वता तावन्नेतव्यं यावच्चतुर्थे प्रतरे परिपूर्णानि सप्तदश अतराणि सागरोपमाणि भवन्ति। जघन्या तु सर्वत्र चतुर्दश सागरोपमप्रमाणा ॥२९–३०॥

सम्प्रति करणवशलब्धं सहस्रारे कल्पे प्रतिप्रस्तटं स्थितिमानमाह—

**सतरस अयर जहन्नाइं पढमे पयरम्मि ठिई सहस्सारे। ताइं चिय उक्कोसा चउत्थभागेण सहियाइं॥३१॥**
**एगुत्तरवुड्ढीए नेयव्वं जाव चउत्थयं पयरं। अट्ठारस अयराइं ठिई उक्कोसा चउत्थम्मि ॥ ३२ ॥**

व्याख्या—सहस्रारे कल्पे प्रथमे प्रतरे जघन्या स्थितिः सप्तदश सागरोपमाणि। करणमत्र प्रागुक्तमनुसरणीयं। उत्कृष्टा तु तत्र स्थितिस्तान्येव सप्तदश सागरोपमाणि चतुर्थेन भागेन सागरोपमसत्केन चतुर्थेनांशेन सहितानि। तथाहि—महाशुक्रे कल्पे उत्कृष्टा स्थितिः सप्तदश सागरोपमाणि, सहस्रारेऽष्टादश, ततोऽष्टादशभ्यः सप्तदशापनीयन्ते, अपनीतेषु च तेषु तिष्ठति शेषमेकं सागरोपमं. सहस्रारे च कल्पे प्रस्तटाश्चत्वारः, तत एकस्य चतुर्भिर्भागे हृते लब्ध एकश्चतुर्थांशः, स एकेन गुण्यते. एकेन च गुणितं तदेव भवतीति जातः स एव सागरोपमस्य चतुर्थांशः, सोऽधस्तनमहाशुक्राख्यकल्पसत्कसप्तदशसागरोपमप्रमाणोत्कृष्टस्थितिसहितः क्रियते, आगता सहस्रारे कल्पे प्रथमे प्रस्तटे उत्कृष्टा स्थितिः सप्तदश

सागरोपमाणि एकश्च सागरोपमस्य चतुर्थो भागः। यदा तु द्वितीये प्रस्तटे उत्कृष्टा स्थितिर्ज्ञातुमिष्यते तदा स एकश्चतुर्भागो द्वाभ्यां गुण्यते, जातौ द्वौ सागरोपमस्य चतुर्थभागौ, तौ सागरोपमसप्तदशसहितौ क्रियेते, तत आगता द्वितीये प्रस्तटे उत्कृष्टा स्थितिः सप्तदश सागरोपमाणि द्वौ सागरोपमस्य चतुर्थभागौ। एवं तृतीयचतुर्थप्रस्तटयोरपि करणं भावनीयं। तत्र तृतीये प्रस्तटे उत्कृष्टा स्थितिः सप्तदश सागरोपमाणि त्रयः सागरोपमस्य चतुर्भागाः। चतुर्थे प्रस्तटे परिपूर्णान्यष्टादश सागरोपमाणि। तथा चाह—"एगुत्तरेत्यादि" एकोत्तरया प्रतिप्रस्तटमेकैकचतुर्भागाधिकया वृद्ध्या तावन्नेतव्यं यावच्चतुर्थं प्रतरं। तस्मिंश्च चतुर्थे प्रतरे उत्कृष्टा स्थितिरष्टादश सागरोपमाणि। जघन्या तु सर्वत्र सप्तदश सागरोपमप्रमाणा ॥ ३१–३२ ॥

सम्प्रति करणवशलब्धमानतादिषु प्रतिप्रस्तटं स्थितिमानमाह—

**चउ चउ पयरा उवरिं कप्पा चत्तारि आणयाईआ। अठारस जहन्नाइं एगुत्तरिया य वुड्ढीए ॥ ३३ ॥**
**जा वावीसं अयरा अंतिमपयरम्मि अच्चुए कप्पे। नव पयरा अयरुत्तरवुड्ढी जा उवरि गेविज्जा ॥ ३४ ॥**

व्याख्या—सहस्रारस्य कल्पस्योपरि ये आनतादयश्चत्वारः कल्पास्ते चतुश्चतुःप्रतराः प्रत्येकं चतुःप्रस्तटसमन्विता एकैकसागरोपमाधिकोत्कृष्टस्थितयश्च, ततस्तत्रापि सहस्रारकल्प इव प्रतिप्रस्तटमेकैकः सागरोपमस्य चतुर्थो भागोऽधिकः प्राप्यते। तत आनतकल्पे प्रथमे प्रस्तटे जघन्यां स्थितिमष्टादश सागरोपमाणि आदिं कृत्वा एकोत्तरया एकैकसागरोपमसत्कचतुर्थभागाधिकया वृद्ध्या भागैश्च करणं कुर्वता तावन्नेयं यावदच्युते कल्पेऽन्तिमे प्रतरे परिपूर्णानि द्वाविंशतिःसागरो-

पमाणि भवन्ति । इयमत्र भावना—इदं करणं सहस्रारकल्प इव स्वयं परिभावनीयं । तत्रानते कल्पे प्रथमे प्रस्तटे उत्कृष्टा स्थितिरष्टादश सागरोपमाणि एकः सागरोपमस्य चतुर्थो भागः । द्वितीये प्रस्तटेऽष्टादश सागरोपमाणि द्वौ सागरोपमस्य चतुर्भागौ । तृतीये प्रस्तटेऽष्टादश सागरोपमाणि त्रयः सागरोपमस्य चतुर्भागाः । चतुर्थे प्रस्तटे परिपूर्णान्येकोनविंशतिः सागरोपमाणि । जघन्या तु सर्वत्राप्यानते कल्पेऽष्टादश सागरोपमाणि । तथा प्राणतकल्पे प्रथमे प्रस्तटे उत्कृष्टा स्थितिरेकोनविंशतिः सागरोपमाणि एकः सागरोपमस्य चतुर्भागः । द्वितीये प्रस्तटे एकोनविंशतिः सागरोपमाणि द्वौ सागरोपमस्य चतुर्भागौ । तृतीये प्रस्तटे एकोनविंशतिः सागरोपमाणि त्रयः सागरोपमस्य चतुर्भागाः । चतुर्थे प्रस्तटे परिपूर्णानि विंशतिः सागरोपमाणि । जघन्या तु सर्वत्रापि प्राणतकल्पे एकोनविंशतिः सागरोपमाणि । तथाऽऽरणकल्पे प्रथमे प्रस्तटे उत्कृष्टा स्थितिर्विंशतिः सागरोपमाणि एकः सागरोपमस्य चतुर्भागः । द्वितीये प्रस्तटे विंशतिः सागरोपमाणि द्वौ च सागरोपमस्य चतुर्भागौ । तृतीये प्रस्तटे विंशतिः सागरोपमाणि त्रयः सागरोपमस्य चतुर्भागाः । चतुर्थे प्रस्तटे परिपूर्णान्येकविंशतिः सागरोपमाणि । जघन्या त्वारणे कल्पे सर्वत्रापि स्थितिर्विंशतिः सागरोपमाणि । तथाऽच्युते कल्पे प्रथमे प्रस्तटे उत्कृष्टा स्थितिरेकविंशतिः सागरोपमाणि एकः सागरोपमस्य चतुर्भागः । द्वितीये प्रस्तटे एकविंशतिः सागरोपमाणि द्वौ सागरोपमस्य चतुर्भागौ । तृतीये प्रस्तटे एकविंशतिः सागरोपमाणि त्रयः सागरोपमस्य चतुर्भागाः । चतुर्थे प्रस्तटे परिपूर्णानि द्वाविंशतिः सागरोपमाणि । जघन्या तु सर्वत्राप्यच्युतकल्पे एकविंशतिः सागरोपमाणि । “नव पयरा अयरुत्तर-

वुड्डीए जा उवरि गेविज्जा" यावदुपरितनोपरितन ग्रैवेयकस्तावन्नव प्रतरा नव प्रस्तटा भवन्ति। तेषु च यथाक्रममुत्तरोत्तरा एकैकसागरोपमोत्तरा वृद्धिर्वक्तव्या, सा च प्रागेवोक्तेति न भूयो दर्श्यते ॥ ३३–३४ ॥

तदेवमुक्ता सुराणां स्थितिः, सम्प्रति भवनानि वक्तव्यानि । तत्र प्रथमतो भवनवासिनां भवनसङ्ख्यामाह—

**सत्तेव य कोडीओ हवंति बावत्तरि सयसहस्सा । एसो भवणसमासो भवणवईणं वियाणिज्जा ॥ ३५ ॥**

व्याख्या—सप्त भवनानां कोटयो द्विसप्ततिश्च शतसहस्राणि लक्षाः ७७२०००००० एष भवनपतीनां भवनसमासो भवनसर्वसङ्ख्या इति विजानीयात् ॥ ३५ ॥

सम्प्रति भवनवासिनामेव प्रतिनिकायं भवनसङ्ख्यामाह—

**चउसट्ठी असुराणं नागकुमाराण होइ चुलसीए(ई) । बावत्तरि कणगाणं वाउकुमाराणं छन्नउई ॥३६॥**
**दीवदिसाउदहीणं विज्जुकुमारथणियअग्गीणं । छण्हं पि जुयलयाणं छावत्तरिमो सयसहस्सा ॥ ३७ ॥**

व्याख्या—असुराणामसुरकुमाराणां दक्षिणोत्तरदिग्भाविनां सम्बन्धीनि सर्वसङ्ख्यया भवनानि चतुःषष्टिशतसहस्राणि भवन्ति ६४००००० । नागकुमाराणां दक्षिणोत्तरदिग्भाविनां चतुरशीतिशतसहस्राणि ८४००००० । कनकानां सुवर्णकुमाराणां दक्षिणोत्तरदिग्भाविनां द्विसप्ततिशतसहस्राणि ७२००००० । वायुकुमाराणां दक्षिणोत्तरदिग्भाविनां षण्णवतिशतसहस्राणि ९६००००० । द्वीपकुमारदिक्कुमारोदधिकुमारविद्युत्कुमारस्तनितकुमाराग्निकुमाराणां षण्णां युगलानां

दक्षिणोत्तरदिग्वर्तिलक्षणयुग्मरूपाणां प्रत्येकं षट्सप्ततिशतसहस्राणि भवनानि भवन्ति ७६०००००। एषां च सर्वेषामप्येकत्र मीलने सर्वसङ्ख्यया प्रागुक्ताः सप्त कोटयो द्विसप्ततिलक्षाणि सङ्ख्या भवन्ति ७७२०००००॥ ३६–३७॥

अधुना दक्षिणोत्तरदिग्विभागेन भवनसङ्ख्यामाह—

चउतीसा चउचत्ता अठ्ठत्तीसं च सयसहस्साइं। पन्ना चत्तालीसा दाहिणउ हुंति भवणाइं॥ ३८॥

तीसा चत्तालीसा चउतीसं चेव सयसहस्साइं। छायाला छत्तीसा उत्तरउ हुंति भवणाइं॥ ३९॥

व्याख्या—असुरकुमाराणां दक्षिणतो भवनानि चतुस्त्रिंशच्छतसहस्राणि ३४००००० नागकुमाराणां चतुश्चत्वारिंशच्छतसहस्राणि ४४०००००। सुवर्णकुमाराणामष्टात्रिंशच्छतसहस्राणि ३८०००००। वायुकुमाराणां पञ्चाशच्छतसहस्राणि ५००००००। द्वीपकुमारादीनां षण्णां प्रत्येकं चत्वारिंशच्छतसहस्राणि ४००००००। तथाऽसुरकुमाराणामुत्तरतो भवनानि त्रिंशच्छतसहस्राणि ३००००००। नागकुमाराणां चत्वारिंशच्छतसहस्राणि ४००००००। सुवर्णकुमाराणां चतुस्त्रिंशच्छतसहस्राणि ३४००००० वायुकुमाराणां षट्चत्वारिंशच्छतसहस्राणि ४६०००००। द्वीपकुमारादीनां षण्णां, प्रत्येकं षट्त्रिंशच्छतसहस्राणि ३६०००००। उभयमीलने च प्रागुक्ता चतुःषष्टिलक्षादिकाऽसुरकुमारादीनां भवनसङ्ख्या भवति॥ ३८–३९॥

सम्प्रति भवनप्रमाणप्रतिपादनार्थमाह—

जंबूदीवसमा खलु भवणा जे हुंति सव्वखुड्डागा। संखिज्जवित्थडा मज्झिमा उ सेसा असंखिज्जा॥ ४०॥

व्याख्या—यानि सर्वक्षुल्लकानि सर्वलघूनि भवनानि तान्यपि भवन्ति जम्बूद्वीपसमानि लक्षयोजनप्रमाणानीत्यर्थः।

मध्यमानि मध्यमप्रमाणोपेतानि सङ्ख्येयविस्तृतानि सङ्ख्येययोजनकोटीकोटीप्रमाणविस्तराणि । शेषाणि सर्वोत्कृष्टप्रमाणानि असङ्ख्येयानि असङ्ख्येययोजनकोटीकोटीप्रमाणानि ॥ ४० ॥

क्व पुनरेतानि भवनानि सन्तीत्यत आह—

**रयणप्पहपुढवीए उवरिं हिट्ठा य जोयणसहस्सं । मुत्तूण मज्झभाए भवणाइं भवणवासीणं ॥ ४१ ॥**

व्याख्या—अस्या रत्नप्रभायाः पृथिव्या अशीतिसहस्राधिकयोजनलक्षप्रमाणबाहल्याया उपर्यधश्च प्रत्येकं योजनसहस्रमपहाय शेषे मध्यभागेऽष्टसप्ततिसहस्राधिकयोजनलक्षप्रमाणे भवनवासिनां भवनानि भवन्ति । अपरे पुनराहुः—रत्नप्रभाया अशीतिसहस्राधिकलक्षयोजनप्रमाणबाहल्याया नवतियोजनसहस्राण्यधोभागेनावगाह्य अत्रान्तरे भवनवासिनां भवनानि विद्यन्ते । अन्यत्र चोपर्यधश्च प्रत्येकं योजनसहस्रमपहाय शेषेषु स्थानेषु सर्वेष्वपि यथायोगमावासाः । आवासा नाम कायमानस्थानीया महामण्डपा विचित्रमणिरत्नप्रभाभासितसकलदिक्चक्रवाला इति । भवनानि च बहिर्वृत्तान्यन्तः समचतुरस्राण्यधः पुष्करकर्णिकासंस्थानसंस्थितानि । उक्तं च—"बाहिं वट्टा अंतो चउरंस अहो य कण्णियायारा । भवणवईणं तह वंतराण भवणा उ नायव्वा ॥ १ ॥" इति ॥ ४१ ॥

सम्प्रति दशविधानामपि भवनवासिनिकायानां नामान्याह—

**असुरा नागा विज्जू सुवण्ण अग्गी य वाउ थणिया य । उदही दीव दिसा वि य दसभेया भवणवासीणं ४२**

व्याख्या—भवनवासिनां भवनवासिनिकायानामवान्तरजातिभेदमधिकृत्य दश भेदा भवन्ति । तद्यथा—"असुरा

इति" असुरकुमाराः, पदैकदेशे पदसमुदायोपचारात् । ते च भवप्रत्ययनिबन्धनतया तथाविधनामकर्मोदयात् निचित-
शरीरावयवाः सर्वाङ्गोपाङ्गविषयपरमलावण्यसमन्विताः कृष्णरुचयो महाकाया रत्नोत्कटमुकुटभास्वराः । "नागा इति"
नागकुमाराः, ते च शिरोमुखेष्वधिकप्रतिरूपकाः श्वेतकायरुचयो मृदुललितगतयः । "विज्जु त्ति" विद्युत्कुमाराः, ते च
स्निग्धशरीरच्छवयो जिष्णुस्वभावा उत्तप्तकनकवर्णाः । "सुवन्न त्ति" सुवर्णकुमाराः, ते चाधिकप्रतिरूपकग्रीवोरस्काः ।
"अग्गि त्ति" अग्निकुमाराः, ते च विशेषतः सर्वाङ्गोपाङ्गविषयमानोन्मानप्रमाणोपपन्ना विविधाभरणरुचा भास्वन्त उत्त-
प्तकनकवर्णाः । "वाउ त्ति" वायुकुमाराः, ते च स्थिरपीनवृत्तगात्रा निम्नोदराः पियंगुवदवदातश्यामवर्णाः । "थणिअ
त्ति" स्तनितकुमाराः, ते च स्निग्धशरीरच्छवयः स्निग्धगम्भीरानुनादिमहास्वनाः सुविशुद्धवरजात्यकनकगौराः । "उयहि
त्ति" उदधिकुमाराः, ते च विशेषत ऊरुकटिष्वधिकप्रतिरूपा अवदातश्वेतशरीरवर्णाः । "दीव इति" द्वीपकुमाराः, ते
च स्कन्धवक्षःस्थलबाह्वग्रहस्तेष्वधिकशोभा उत्तप्तवरकनकवर्णाः । "दिशा वि य त्ति" दिक्कुमाराः, ते च जङ्घाग्रपादेष्व-
धिकप्रतिरूपा जात्यतप्तसुवर्णाः । सर्वेऽपि चामी दशप्रकारा भवननासिनो विविधैर्वस्त्रैराभरणैः प्रहरणैश्चातितरां
विराजमानाः प्रतिपत्तव्याः ॥ ४२ ॥

सम्प्रति दशानामपि भवनवासिनिकायानां क्रमेण चिह्नान्याह—

**चूडामणि फणि वज्जे गरुडे घड मयर वद्धमाणे य । अस्से सीहे हत्थी असुराईण मुणसु चिंधे ॥ ४३ ॥**

व्याख्या—असुरादीनामसुरकुमारादीनां दशानामपि निकायानां यथाक्रमं चूडामणिप्रभृतीनि चिह्नानि जानीहि । तद्यथा-

असुरकुमाराः शिरस्सु मुकुटेषु चूडामणिचिह्नाः। नागकुमारा भूषणेषु फणिचिह्ना एवं विद्युत्कुमारा वज्रचिह्नाः। सुवर्णकुमारा गरुडचिह्नाः। अग्निकुमारा मुकुटेषु घटचिह्नाः। वायुकुमारा मकरचिह्नाः। स्तनितकुमारा वर्धमानकचिह्नाः वर्धमानकं शरावसंपुटं। उदधिकुमारा भूषणेषु अश्वचिह्नाः। द्वीपकुमाराः सिंहचिह्नाः। दिक्कुमारा हस्तिचिह्नाः। उक्तं च प्रज्ञापनायां—"असुरा नागसुवन्ना विज्जू अग्गी य दीवउदहीउं। दिसि पवणथणियनामा दसहासुरभवणवासी य ॥ १ ॥ चूडामणिमउडरयणाभूसण नागफडगरुडवइरपुन्नकलसंकियउप्फोससीहहयवरगयंक मगरवद्धमाणनिजुत्तचित्तचिंधगयाइ त्ति"। औपपातिकग्रन्थेऽप्युक्तं—"नागसुवन्नविज्जूअग्गी य दीवउदहिदिसाकुमाराय पवणथणिया य भवणवासी य। नागफडागरुडवइरपुन्नकलसंकिउप्फोससीहहयवरगयंकमगरमउडवद्धमाणनिजुत्तचित्तचिंधगयाइत्ति"। उभयत्रापि यथासङ्ख्येन पदघटना। उप्फोसो मुकुटः। यस्तु पाठः—"चूडामणिफणिवज्जे गरुडे घड य अस्स वद्धमाणे य। मयरे सीहे हत्थी" इति, सोऽपपाठः, उक्तरूपप्रज्ञप्त्यादिग्रन्थविरोधात् ॥ ४३ ॥

साम्प्रतमेषामेवासुरकुमारादीनां वर्णविभागमाह—

काला असुरकुमारा नागा उदही य पंडुरा दोऽवि। वरकणयतविय गोरा हुंति सुवन्ना दिसा थणिया ॥४४॥

उत्तत्तकणयवन्ना विज्जू अग्गी य हुंति दीवा य। सामा पियंगुवन्ना वायुकुमारा मुणेयव्वा ॥ ४५ ॥

व्याख्या—इदं गाथाद्वयमपि निगदसिद्धं। नवरमुत्तप्तं कनकं किञ्चिद्रक्तमवसेयम् ॥ ४४–४५ ॥

सम्प्रत्यमीषामेव वस्त्रविषयवर्णविभागमाह—

असुरेसु हुंति रत्ता सिलिंधपुप्फप्पभा य नागुदही।आसासगवसणधरा हुंति सुवन्ना दिसा थणिया॥४६॥
नीलाणुरागवसणा विज्जू अग्गी य हुंति दीवा य। संझाणुरागवसणा वाउकुमारा मुणेयव्वा ॥ ४७ ॥

व्याख्या—इह प्राकृतत्वाद्विभक्तिव्यत्ययो लिङ्गव्यत्ययश्च यथायोगमवसेयः। तत्रासुरेष्वसुराणां प्राचुर्येण वस्त्राणि रक्तानि भवन्ति। नागकुमाराणामुदधिकुमाराणां च सिलिन्ध्रपुष्पप्रभाणि नीलवर्णानीत्यर्थः। सुवर्णकुमारा दिक्कुमाराः स्तनितकुमाराश्च प्रत्येकमश्वास्यगवसनधरा अश्वस्यास्यं मुखं अश्वास्यं तत्र गतो यः फेनः सोऽश्वास्यगस्तद्धवलं यद्वसनं वस्त्रं तद्धरन्तीत्यश्वास्यगवसनधरा भूयसा श्वेतवस्त्रपरिधानशीला इत्यर्थः। अपरे पुनराहुः—"आसासगो बीयक" इति। तथा विद्युत्कुमारा अग्निकुमारा द्वीपकुमाराश्च नीलानुरागवसनाः। वायुकुमाराः सन्ध्यानुरागवसनाः ॥ ४६—४७ ॥

सम्प्रति दशानामपि भवनवासिनिकायानां दक्षिणोत्तरदिग्विभागेन यौ द्वौ द्वाविन्द्रौ तेषां नामान्याह—

चमरे बली य धरणे भूआणंदे य वेणुदेवे य। तत्तो य वेणुदाली हरिकंत हरिस्सहे चेव ॥ ४८ ॥
अग्गिसिह अग्गिमाणव पुन्न वसिठे तहेव जलकंते। जलपह तह अमिअगई बीए मिअवाहणे इंदे॥४९॥
वेलंबे अ पभंजण घोसे चेव य तहा महाघोसे। भवणवई इंदाणं नामाइं हवंति एयाइं ॥ ५० ॥

व्याख्या—दक्षिणदिग्भाविनामुत्तरदिग्भाविनामसुरकुमाराणां यथाक्रममिन्द्रश्चमरो बलिः। नागकुमाराणां धरणो

भूतानन्दः । सुवर्णकुमाराणां वेणुदेवो वेणुदाली । विद्युत्कुमाराणां हरिकान्तो हरिस्सहः । अग्निकुमाराणामग्निशिखो ग्निमाणवः । द्वीपकुमाराणां पुण्यो वशिष्ठः । उदधिकुमाराणां जलकान्तो जलप्रभः । दिक्कुमाराणाममितगतिरमितवाहनः । वायुकुमाराणां वेलम्बः प्रभञ्जनः । स्तनितकुमाराणां घोषो महाघोषः । तथा चोक्तं देवेन्द्रस्तवे—"दो भवणवई इंदा चमरो वइरोयणे असुराणं । दो नागकुमारिंदा धरणे तह भूआणंदे अ ॥ १ ॥ दो सुअणु सुवर्णिंदा वेणुदेवे य वेणुदाली य । दो दीवकुमारिंदा पुन्ने य तहा वसिठे अ ॥ २ ॥ दो उयहिकुमारिंदा जलकंतजलप्पभे य नामेणं । अमियगइ अमियवाहण दिसाकुमाराण दो इंदा ॥ ३ ॥ दो वायुकुमारिंदा वेलंबपभंजणे य नामेणं । दो थणियकुमारिंदा घोसे य तहा महाघोसे ॥ ४ ॥ दो विज्जुकुमारिंदा हरिकंतहरिस्सहे अ नामेणं । अग्गिसिह अग्गिमाणव हुयासणवइवि दो इंदा ॥ ५ ॥" इति । एताः पञ्चापि गाथाः सुगमाः । नवरं "सुअणु त्ति" श्रावकस्य देवेन्द्रस्तवग्रन्थोक्तस्य स्वभार्यां प्रति सम्बोधनवचनं । अथ कस्येन्द्रस्य किं विषया कियती शक्तिः ? उच्यते—चमरोऽसुरराज आ जम्बूद्वीपाच्चमरचञ्चाराजधानीं अभिव्याप्य यावदवकाशान्तरमेतावद्वैक्रियशक्तिनिष्पादितैरसुरकुमारैरसुरकुमारिकाभिश्च सततमापूरयितुं समर्थः । धरणो नागकुमाराधिपतिरेकया वैक्रियशक्तिनिष्पादितया स्फटया सकलमपि जम्बूद्वीपमाच्छादयितुमलं । गरुडोऽपि सुवर्णकुमाराधिपतिर्वेणुदेवो यदि शक्तिमात्मनः स्फोरयितुमुत्सहते तदा वैक्रियशक्तिनिष्पादितस्य गरुडस्यैकेनैव पक्षेण सकलं जम्बूद्वीपं स्थगयितुमलं । पूर्ण ( पुण्य ) स्यापि द्वीपकुमारराजस्य वैक्रियशक्तिविस्तारितेन निजपाणि-

---

१ हुउरा भवणवईवि दो इंदा—प्रत्यंतरे.

तलेन समस्तं जम्बूद्वीपमाछादयितुं शक्तिः। उदधिकुमारराजो जलकान्तः स्वशक्तिनिष्पादितया एकया जललहर्या जम्बूद्वीपं प्लावयितुं प्रभुः। अमितगतेर्दिक्कुमारेन्द्रस्य एकेनपादपार्ष्णिप्रहारेण निरवशेषं जम्बूद्वीपं कम्पयितुमीशिता। निर्न्नर्ति एकया वातगुञ्जया सकलं जम्बूद्वीपं वायुकुमारराजो वेलम्बनामा। बधिरीकरोति समस्तं जम्बूद्वीपमेकेन स्तनितशब्देन घोषनामा स्तनितकुमारराजः। एकया विद्युल्लतया जम्बूद्वीपमिमं समस्तमपि प्रकाशयितुमीशो हरिकान्तनामा विद्युत्कुमाराधिपतिः। समर्थो दग्धुमेकयाऽग्निज्वालया जम्बूद्वीपमग्निशिखोऽग्निकुमाराधीशः। एतदेव सामर्थ्यं किञ्चित्समधिकमुत्तरदिग्भाविनां बलिभूतानन्दवेणुदालिवशिष्ठजलप्रभामितवाहनप्रभञ्जनमहाघोषहरिस्सहाग्निमाणवकनाम्नां क्रमेणावसेयं। अथवाऽन्यथा शक्तिभावना—विंशतिसङ्ख्यानाममीषामिन्द्राणामेकतरोपीन्द्रस्तिर्यक् सङ्ख्यातान् द्वीपसमुद्रान् स्ववैक्रियशक्तिनिष्पादितैः कुमारकुमारिकारूपैः सततमवगाढान् कर्तुमीशः, यदि वाऽन्यतर एकोऽपीन्द्रो जम्बूद्वीपं छत्रं विधाय मेरुं च तस्य दण्डं परिकल्प्य वामहस्तेन धारयेत् न च कश्चित्तस्य शरीरायासः। उक्तं च देवेन्द्रस्तवे—"जाव य जंबुद्दीवो जाव य चमरस्स चमरचंचाउ। असुरेहिं असुरकन्नाहिं अत्थि विसउ भरेउं जे ॥ १ ॥ तं चेव समइरेगं बलिस्स वइरोअणस्स बोधवं। असुरेहिं असुरकन्नाहिं तस्स विसउ भरेउं जे ॥ २ ॥ धरणोऽवि नागराया जंबुद्दीवं फणाए छाएजा। तं चेव समइरेगं भूआणंदे वि बोधवं ॥ ३ ॥ गरुलोऽवि वेणुदेवो जंबुद्दीवं छइज पक्खेणं। तं चेव समइरेगं वेणुदालिम्मि बोधवं ॥ ४ ॥ पुन्नोऽवि जंबुद्दीवं पाणितलेणं छइज एक्केणं। तं चेव समइरेगं हवइ वसिठेऽवि बोधवं ॥ ५ ॥ इक्काए जलुम्मीए जंबुद्दीवं भरिज जलकंतो। तं चेव समइरेगं जलप्पभे होइ बोधवं ॥ ६ ॥ अमि-

यगइस्स वि विसउं जंबुद्दीवं तु पायपण्हीए । कंपिज्ज निरवसेसं इयरो पुण तं समइरेगं ॥ ७ ॥ एक्काए वायगुंजाए जंबुद्दीवं जरेज्ज वेंछवो । तं चेव समइरेगं पज्जंजणे होइ बोधवं ॥ ८ ॥ घोसोऽवि जंबुद्दीवं सुंदरि! इक्केण थणिअसद्देणं । वहिरीकरिज्ज सवं इयरो पुण तं समइरेगं ॥ ९ ॥ एक्काए विज्जुआए जंबुद्दीवं हरी पगासिज्जा । तं चेव समइरेगं हरिस्सहे होइ बोधवं ॥ १० ॥ एक्काए अग्गिजालाए जंबुद्दीवं रुहिज्ज अग्गिसिहो । तं चेव समइरेगं माणवगे होइ बोधवं ॥ ११ ॥ तिरिअं तु असंखिज्जा दीवसमुद्दा सएहिं रूवेहिं । अवगाढाउ करिज्जा सुंदरि एएसिमेगयरो ॥ १२ ॥ जंबुद्दीवं काऊण छत्तयं मंदरं च से दंडं । पहु अन्नयरो इंदो एसो तेसिं बलविसेसो ॥ १३ ॥" अथ कस्येन्द्रस्यास्मिंस्तिर्यग्लोके क्व द्वीपे समुद्रे वाऽऽवासाः ? उच्यते—विद्युत्कुमारेन्द्रयोर्हरिकान्तहरिस्सहनाम्नोरस्मिन् जम्बूद्वीपे यथाक्रमं विद्युत्प्रभमाल्यवद्वक्षस्कारपर्वतयोः । वातकुमारराजसुवर्णकुमारराजरूपाणां चतुर्णामिन्द्राणां पुष्करवरद्वीपे मानुषोत्तरे पर्वते । द्वीपकुमारदिक्कुमाराग्निकुमारस्तनितकुमारराजरूपाणामष्टानामिन्द्राणामरुणवरे द्वीपे । असुरकुमारनागकुमारोदधिकुमारराजरूपाणां षण्णामिन्द्राणामरुणवरे समुद्रे । उक्तं च—"दो चेव जंबुद्दीवे चत्तारि अ माणुसुत्तरे सेले । छच्चारुणे समुद्दे अट्ठ य अरुणम्मि दीवम्मि ॥ १ ॥ असुराणं नागाणं उदहीकुमाराण हुंति आवासा । अरुणवरम्मि समुद्दे तत्थेव य तेसिमुप्पाया ॥ २ ॥ दीवदिसाअग्गीणं थणिअकुमाराण हुंति आवासा । अरुणवरे दीवम्मि य तत्थेव य तेसिमुप्पाया ॥ ३ ॥ वाउसुवण्णिंदाणं एएसिं माणुसुत्तरे सेले । हरिणो हरिस्सहस्स य विज्जुप्पभमालवंतेसु ॥ ४ ॥ " इति ॥ ४८–४९–५० ॥

सम्प्रति भुवनपतीन्द्राणां सामानिकात्मरक्षप्रमाणमाह—

**चउसठी सठी खलु छच्च सहस्सा उ असुरवज्जाणं। सामाणिआ उ एए चउग्गुणा आयरक्खाउ ॥ ५१ ॥**

व्याख्या—असुराधिपतेश्चमरेन्द्रस्य खलु निश्चितं चतुःषष्टिः सामानिकदेवानां सहस्राणि ६४००० । बलीन्द्रस्य षष्टिः ६०००० । शेषाणामसुरवर्जानामसुरकुमारव्यतिरिक्तानां धरणप्रभृतीनामष्टादशानामिन्द्राणां प्रत्येकं षट् षट् सहस्राणि सामानिकदेवाः ६००० । "सामाणिया उ एए त्ति" एते चतुःषष्ट्यादिसङ्ख्या गाथापूर्वार्धनिर्दिष्टाः सामानिकाः सामानिकदेवा वेदितव्याः । आत्मरक्षाः स्वाङ्गरक्षकल्पा देवाः सर्वेषामपि सामानिकदेवापेक्षया चतुर्गुणाः । तद्यथा—असुरकुमाराधिपतेश्चमरस्यात्मरक्षकदेवानां द्वे लक्षे षट्पञ्चाशत्सहस्राणि २५६००० । बलेर्द्वे लक्षे चत्वारिंशत्सहस्राणि२४०००० । शेषाणां त्वष्टादशानामपि धरणप्रभृतीनामिन्द्राणां प्रत्येकं चतुर्विंशतिश्चतुर्विंशतिः सहस्राण्यात्मरक्षकदेवाः २४००० ॥ ५१ ॥

सम्प्रति सामानिकात्मरक्षप्रस्तावमुपजीव्य व्यन्तरेषु ज्योतिष्केषु च सामानिकात्मरक्षपरिमाणमाह—

**सामाणिआण चउरो सहस्स सोलस य आयरक्खाणं । पत्तेयं सव्वेसिं वंतरवइससिरवीणं च ॥ ५२ ॥**

व्याख्या—व्यन्तरपतीनां व्यन्तरेन्द्राणां दक्षिणोत्तरदिग्वर्त्तिनां सर्वेषामपि तथा सर्वेषामप्यसङ्ख्येयद्वीपसमुद्रभाविनां शशिनां रवीणां च ज्योतिष्कराजानां प्रत्येकं सामानिकदेवानां चत्वारिसहस्राणि ४००० । षोडश सहस्राण्यात्मरक्षदेवानां १६००० ॥ ५२ ॥

अधुना वैमानिकदेवाधिपतीनां सामानिकात्मरक्षसङ्ख्यामाह—

**चउरासीई असीई बावत्तरि सत्तरी य सट्ठी य। पन्ना चत्तालीसा तीसा वीसा दससहस्सा ॥ ५३ ॥**

व्याख्या—सौधर्मकल्पाधिपतेः शक्रस्य सामानिकदेवाश्चतुरशीतिः सहस्राणि ८४००० । ईशानकल्पाधिपतेरीशानेन्द्रस्याशीतिः ८०००० । सनत्कुमारकल्पस्वामिनः सनत्कुमारेन्द्रस्य द्विसप्ततिः ७२००० । माहेन्द्रकल्पाधिपतेर्माहेन्द्रस्य सप्ततिः ७०००० । ब्रह्मलोकेन्द्रस्य षष्टिः ६०००० । लान्तकेन्द्रस्य पञ्चाशत् ५०००० । महाशुक्रकल्पेन्द्रस्य चत्वारिंशत् ४०००० । सहस्रारेन्द्रस्य त्रिंशत् ३०००० । आनतप्राणतेन्द्रस्य विंशतिः २०००० । आरणाच्युतेन्द्रस्य दश १०००० । सर्वत्रापि चात्मरक्षका देवाः सामानिकेभ्यश्चतुर्गुणाः ॥ ५३ ॥

साम्प्रतमिन्द्राणामग्रमहिषीपरिमाणमाह—

**पंच य छप्पिय चउ चउ अट्ठेव कमेण अग्गमहिसीउ। असुरनागाइवंतरजोइसकप्पदुगिंदाणं ॥ ५४ ॥**

व्याख्या—इह पूर्वार्धपदोत्तरार्धपदानां यथासङ्ख्येन योजना, सा चैवं—असुराणामधिपतेश्चमरस्य बलेश्च प्रत्येकं पञ्च पञ्चाग्रमहिष्यः । शेषाणां नागकुमारादिनिकायेन्द्राणां धरणप्रभृतीनामष्टादशानामपि प्रत्येकमग्रमहिष्यः षट् षट् । व्यन्तराधिपतीनां ज्योतिष्कराजानां च सूर्याचन्द्रमसां प्रत्येकं चतस्रश्चतस्रः । कल्पद्विकेन्द्रयोः शक्रेशानयोः प्रत्येकमष्टावष्टाविति । उपरितनेषु तु कल्पेषु न देव्य उत्पद्यन्ते, नापि काश्चित् परिगृहीता उपरितनवासिनामिन्द्राणां देव्यः,

केवलं प्रवीचारणाभिप्रायोत्पत्तौ यथायोगं सौधर्मेशानवास्तव्या अपरिगृहीता गणिकाकल्पा देव्य उपभोगायोपतिष्ठन्ते इति न तेषामग्रमहिषीसंभवः ॥ ५४ ॥

तदेवमुक्तं प्रसक्तानुप्रसक्तं, सम्प्रति प्रस्तुतमनुसंधीयते । तत्रोक्ता भवनवासिभवनवक्तव्यता, सम्प्रति व्यन्तराश्रयवक्तव्यतामाह—

**तिरिउववाइयाणं रम्मा भोमनगरा असंखेज्जा । तत्तो संखेज्जगुणा जोइसियाणं विमाणाउ ॥ ५५ ॥**

व्याख्या—तिर्यग्लोके उपपातो जन्म तिर्यग्लोकोपपातः, स एषामस्तीति तिर्यग्लोकोपपातिका व्यन्तराः । "अतोऽनेकस्वरात्" इति मत्वर्थीय इकप्रत्ययः । तेषां यानि नगराणि भौमानि भूम्यन्तर्वर्तीनि तान्यसङ्ख्येयानि भवन्ति । तानि च रम्याणि रमणीयानि । येषु केचिदुपचितजन्मान्तरपुण्यप्राग्भारव्यन्तरदेवा वरतरुणव्यन्तरीजनगीतवादित्रपटुरवैश्चाकृष्टचेतसो नित्यं प्रमुदिता गतमपि कालं न वेदयन्ते । तथा चोक्तं—"जहिं देवा वंतरिया वरतरुणीगीयवाइयरवेणं । निच्चं सुहिया पमुइया गयं पि कालं न याणंति ॥ १ ॥" तेभ्योऽपि व्यन्तरसत्केभ्यो नगरेभ्यः सङ्ख्येयगुणानि ज्योतिष्काणां ज्योतिष्कदेवानां विमानानि । एतच्चानधिकारपतितमपि प्रस्तावादुक्तम् ॥ ५५ ॥

सम्प्रति व्यन्तरनगराणां परिमाणमाह—

**जंबुद्दीवसमा खलु उक्कोसेणं हवंति ते नगरा । खुड्डा खित्तसमा खलु विदेहसमगा उ मज्झिमगा ॥५६॥**

व्याख्या—इह प्राकृतत्वाल्लिङ्गव्यत्ययः, यदाह पाणिनिः स्वप्राकृतलक्षणे "लिङ्गं व्यभिचार्यपि" इति, ततस्ते इति

तानीति द्रष्टव्यं, तानि व्यन्तरनगराणि भूम्यन्तर्वर्तीनि खलु निश्चितं उत्कर्षत उत्कृष्टप्रमाणानि जम्बूद्वीपसमानि भवन्ति लक्षयोजनप्रमाणानि भवन्तीत्यर्थः। क्षुल्लानि सर्वलघूनि नगराणि क्षेत्रसमानि भरतक्षेत्रसमानि भवन्ति। मध्यमानि मध्यमप्रमाणोपपन्नानि विदेहतुल्यानि महाविदेहक्षेत्रतुल्यानि ॥ ७४ ॥

क्व पुनरेतानि भूम्यन्तर्वर्तीनि नगराणि सन्तीत्यत आह—

**हिट्ठोवरि जोयणसयरहिए रयणाए जोयणसहस्से। पढमे वंतरियाणं भोमाइं हुंति नगराइं ॥ ५७ ॥**

व्याख्या—भौमानि भूम्यन्तर्वर्तीनि यानि नगराणि तानि रत्नप्रभायाः प्रथमे उपरितने योजनसहस्रे रत्नकाण्डे इत्यर्थः, अध उपरि च प्रत्येकं योजनशतरहिते। किमुक्तं भवति ? अष्टयोजनशतप्रमाणरत्नकाण्डमध्यभागे भवन्ति भौमानि भूम्यन्तर्वर्तीनि नगराणि। यास्तु मनुष्यक्षेत्राद्बहिर्द्वीपेषु समुद्रेषु वा व्यन्तराणां नगर्यस्ता जीवाभिगमादिशास्त्रेभ्यः प्रतिपत्तव्याः ॥ ५७ ॥

सम्प्रति व्यन्तरनिकायानामष्टानामपि नामान्याह—

**पिसायभूआ जक्खा य रक्खसा किंनरा य किंपुरिसा। महोरगा य गंधव्वा अट्ठविहा वाणमंतरिया ॥५८॥**

व्याख्या—वनानामन्तराणि वनान्तराणि तेषु भवा वानमन्तरा व्यन्तराः, "पृषोदरादयः" इति वनान्तरशब्दयोरपान्तराले मकारवर्णागमः। तेऽष्टविधा अष्टप्रकाराः। तद्यथा—पिशाचाः १, भूताः २, यक्षाः ३, राक्षसाः ४. किंनराः ५, किंपुरुषाः ६, महोरगाः ७, गन्धर्वाः ८। पिशाचाः स्वभावतः प्राचुर्येण सुरूपाः सौम्यदर्शना हस्तग्रीवासु मणिरत्नः

मयविभूषणाः, ते च पञ्चदश[1]विधाः, तद्यथा—कूष्माण्डाः १, पाटकाः २, जोषाः ३, आह्निकाः ४, कालाः ५, महाकालाः ६, चोक्षाः ७, अचोक्षाः ८, तालपिशाचाः ९, मुखरपिशाचाः १०, अधस्तारकाः ११, देहाः १२, महादेहाः १३, तूष्णीकाः १४, वनपिशाचाः १५, इति । भूताः सुरूपाः सौम्या नानाभक्तिविलेपनाः, ते च नवविधाः, तद्यथा—सुरूपाः १, प्रतिरूपाः २, अतिरूपाः ३, भूतोत्तमाः ४, स्कन्दिकाः ५, महास्कन्दिकाः ६, महावेगाः ७, प्रतिच्छन्नाः ८, आकाशगाः ९, इति । यक्षा गम्भीराः प्रियदर्शना विशेषतो मानोन्मानप्रमाणोपपन्ना रक्तपाणिपादतलनखताल्वुजिह्वौष्ठा भास्वरकिरीटधारिणो नानारत्नात्मकविभूषणाः, ते च त्रयोदशविधाः, तद्यथा—पूर्णभद्राः १, माणिभद्राः २, श्वेतभद्राः ३, हरिभद्राः ४, सुमनोभद्राः ५, व्यतिपाकभद्राः ६, सुभद्राः ७, सर्वतोभद्राः ८, मनुष्ययक्षाः ९, धनाधिपतयः १०, धनाहाराः ११, रूपयक्षाः १२, यक्षोत्तमाः १३, इति । राक्षसा भीमा भीमदर्शनाः करालरक्तलम्बोष्ठास्तपनीयविभूषणा नानाभक्तिविलेपनाः, ते च सप्तविधाः, तद्यथा—भीमाः १, महाभीमाः २, विघ्नाः ३, विनायकाः ४, जलराक्षसाः ५, राक्षसराक्षसाः ६, ब्रह्मराक्षसाः ७, इति । किन्नराः सौम्यदर्शना मुखेष्वधिकरूपशोभा मुकुटमौलिभूषणाः, ते च दशविधाः, तद्यथा—किन्नराः १, किंपुरुषाः २, किंपुरुषोत्तमाः ३, हृदयंगमाः ४, रूपशालिनः ५, अनिन्दिताः ६ किन्नरोत्तमाः ७, मनोरमाः ८, रतिप्रियाः ९ रतिश्रेष्ठाः १०, इति । किंपुरुषा ऊरुबाहुष्वधिकरूपशोभा मुखेष्वधिकभास्वरा विविधाभरणविभूषणाश्चित्रस्रगनुलेपनाः, ते च दशविधाः, तद्यथा—पुरुषाः १, सत्पुरुषाः २, महापुरुषाः ३, पुरुषवृषभा-

---

१ षोडशविधाः प्रज्ञापनावृत्तौ.

४, पुरुषोत्तमाः ५, अतिपुरुषाः ६, महादेवाः ७, मरुतः ८, मेरुप्रभाः ( मरुत्प्रभाः ) ९, यशस्वन्तः १०, इति। महोरगा महावेगाः सौम्याः सौम्यदर्शना महाकायाः पृथुपीनस्कन्धग्रीवा विविधानुलेपना विचित्राभरणभूषणाः, ते च दशविधाः, तद्यथा—भुजङ्गाः १, भोगशालिनः २, महाकायाः ३, अतिकायाः ४, स्कन्धशालिनः ५, मनोरमाः ६, महावेगाः ७, महेष्वक्षाः ८, मेरुकान्ताः ९, भास्वन्तः ( भास्वराः ) १०, इति। गन्धर्वाः प्रियदर्शनाः सुरूपाः सुमुखाकाराः सुस्वरा मौलिमुकुटधरा हारविभूषणाः, ते च द्वादशविधाः, तद्यथा—हाहाः १, हूहूः २, तुम्बुरवः ३, नारदाः ४, ऋषिवादकाः ५, भूतवादकाः ६, कादम्बाः ७, महाकादम्बाः ८, रैवताः ९, विश्वावसवः १०, गीतरतयः ११, गीतयशसः १२, इति ॥ ५८ ॥

सम्प्रत्येषामेवाष्टानां प्रत्येकं दक्षिणोत्तरदिग्भागेन यौ द्वौ द्वाविन्द्रौ तन्नामान्याह—

काले य महाकाले सुरूवपडिरूवपुन्नभद्दे य। अमरवइमाणिभद्दे भीमे य तहा महाभीमे ॥ ५९ ॥
किन्नरकिंपुरिसे खलु सप्पुरिसे चेव तहा महापुरिसे। अइकायमहाकाए गीयरई चेव गीयजसे ॥ ६० ॥

व्याख्या—दक्षिणदिग्भाविनां पिशाचानामधिपतिः कालः, उत्तरदिग्भाविनां महाकालः। तथा दक्षिणदिग्भाविनां भूतानामधिपतिः सुरूपः, उत्तरदिग्भाविनां प्रतिरूपः। एवं यक्षाणां पूर्णभद्रमाणिभद्रौ, राक्षसानां भीममहाभीमौ, किन्नराणां किन्नरकिंपुरुषौ, किंपुरुषाणां सत्पुरुषमहापुरुषौ, महोरगाणामतिकायमहाकायौ, गन्धर्वाणां गीतरतिगीतयशसौ ॥ ५९–६० ॥

सम्प्रत्येषामेव पिशाचादिनिकायानां चिह्नान्याह—

चिंधाइं कलंब झए सुलसवडे तहय होइ खट्टंगे । असोय चंपए वि य नागे तह तुंबरू चेव ॥ ६१ ॥

व्याख्या—क्रमेणामूनि पिशाचादीनां चिह्नानि, तद्यथा—पिशाचानां ध्वजे कदम्बः कदम्बवृक्षचिह्नं । भूतानां सुलसा वनस्पतिविशेषः । यक्षाणां -वटवृक्षः । राक्षसानां खट्वाङ्गः । किन्नराणामशोकवृक्षः । किंपुरुषाणां चम्पकतरुः । महोरगाणां नागवृक्षः । गन्धर्वाणां तुम्बरुनामा तरुरिति ॥ ६१ ॥

अधुना पिशाचादीनां वर्णविभागमाह—

सामावदायजक्खा सव्वे वि य महोरगा सगंधव्वा । अवदाया किंपुरिसा सरक्खा हुंति वन्नेणं ॥ ६२ ॥
काला भूया सामा य पिसाया किन्नरा पियंगुनिभा । एसो वन्नविभागो वंतरिआणं सुरवराणं ॥६३॥

व्याख्या—श्यामाः सन्तोऽवदाता निर्मलाः श्यामावदाताः वर्णेन सर्वे यक्षाः सर्वे महोरगाः सगान्धर्वाः सर्वे गान्धर्वाश्च । तथाऽवदाताः शुभ्रा वर्णेन भवन्ति किंपुरुषाः सराक्षसा राक्षसाश्चेत्यर्थः । तथा भूताः कालाः कृष्णवर्णाः, पिशाचाः श्यामाः, किन्नराः प्रियङ्गुनिभाः । एष वर्णविभागो व्यन्तराणां सुरवराणामिति ॥ ६२–६३ ॥

उक्ता व्यन्तरनगरवक्तव्यता, सम्प्रति ज्योतिष्कविमानवक्तव्यता वक्तव्या, तत्र सामान्यतो विमानसङ्ख्या प्रागेव कृता यथा "तत्तो संखिज्जगुणा जोइसिआणं विमाणाउ" । सम्प्रति प्रतिद्वीपं प्रतिसमुद्रं च चन्द्रादिसङ्ख्याप्रतिपादनार्थमाह—

दो चंदा इह दीवे चत्तारि य सायरे लवणतोये । धायइसंडे दीवे बारस चंदा य सूरा य ॥ ६४ ॥

व्याख्या—इहास्मिन् प्रत्यक्षत उपलभ्यमाने द्वीपे जम्बूद्वीपे द्वौ चन्द्रौ । अन्ते "बारस चंदा य सूरा य" इति चन्द्रसमानसङ्ख्यानां सूर्याणामभिधानात्सर्वत्रानुक्ता अपि चन्द्रतुल्याः सूर्याः प्रतिपत्तव्याः ततो न केवलमस्मिन् जम्बूद्वीपे द्वौ चन्द्रौ, किंतु सूर्यावपि द्वौ । तयोश्च द्वयोश्चन्द्रमसोर्द्वयोश्च सूर्ययोर्यथा चारोऽस्मिन् जम्बूद्वीपे वर्तते तथा सप्रपञ्चं प्रायः क्षेत्रसमासटीकायामभिहित इति न भूयोऽभिधीयते, किंतु तत एवावधार्यः । तथा चत्वारश्चन्द्रमसः, चशब्दाच्चत्वारश्च सूर्याः सागरे समुद्रे लवणतोये लवणं लवणात्मकं तोयं जलं यस्मिंस्तत्र । तथा धातकीखण्डे द्वीपे द्वादश चन्द्रा द्वादश सूर्याश्च ॥ ६४ ॥

सम्प्रति कालोदसमुद्रादिषु चन्द्रादित्यप्रमाणानयनाय करणमाह—

धायइसंडप्पभिई उद्दिट्ठा तिगुणिया भवे चंदा । आइल्लचंदसहिआ अणंतराणंतरे खित्ते ॥ ६५ ॥

व्याख्या—धातकीखण्डप्रभृतिरादिर्येषां ते धातकीखण्डप्रभृतयः तेषु धातकीखण्डप्रभृतिषु द्वीपसमुद्रेषु ये उद्दिष्टाश्चन्द्रा द्वादशादयः, उपलक्षणमेतत्, ( तेन ) चन्द्राः सूर्या वा, ते त्रिगुणितास्त्रिगुणीकृताः सन्तः "आइल्लचंदसहिय त्ति" उद्दिष्टचन्द्रयुक्तात् द्वीपात्समुद्राद्वा प्राग् जम्बूद्वीपमादिं कृत्वा ये प्राक्तनाश्चन्द्रास्ते आदिमाश्चन्द्रास्तैः सहिता यावन्तो भवन्ति तावत्प्रमाणा अनन्तरे कालोदादौ भवन्ति । तत्र धातकीखण्डे द्वीपे उद्दिष्टाश्चन्द्रा द्वादश ते त्रिगुणाः क्रियन्ते, जाताः षट्त्रिंशत्, आदिमाश्चन्द्राः षट् तद्यथा—द्वौ जम्बूद्वीपे चत्वारो लवणसमुद्रे, एतैरादिमचन्द्रैः सहिता जाता द्विचत्वारिंशत्, एतावन्तः कालोदसमुद्रे चन्द्राः । एष एव करणविधिः सूर्याणामपि, तेन सूर्या अपि तत्रैतावन्तो

वेदितव्याः । तथा कालोदसमुद्रे द्विचत्वारिंशच्चन्द्रमस उद्दिष्टास्ते त्रिगुणाः क्रियन्ते, जातं षड्विंशं शतं, आदिमचन्द्रा अष्टादश, तद्यथा—द्वौ जम्बूद्वीपे चत्वारो लवणसमुद्रे द्वादश धातकीखण्डे, एतैरादिमचन्द्रैः सहितं षड्विंशं शतं जातं चतुश्चत्वारिंशं शतं, एतावन्तः पुष्करवरद्वीपे चन्द्रा एतावन्त एव च सूर्याः । एवं शेषेष्वपि द्वीपसमुद्रेष्वेतत्करणवशाच्चन्द्रसूर्यसङ्ख्या प्रतिपत्तव्या । तथा चास्या एव सङ्ग्रहणेर्मूलटीकाकारो हरिभद्रसूरिराह—"एवं अणंतराणंतरे खित्ते पुक्खरवरदीवे चोयालं चंदसयं हवइ" । एवं शेषेष्वपि अमुनोपायेन चन्द्रादिसङ्ख्या विज्ञेयेति, युक्तं चैतद्व्याख्यानं, यतश्चन्द्रप्रज्ञप्तौ सूर्यप्रज्ञप्तौ जीवाभिगमे च सकलपुष्करवरद्वीपमधिकृत्येदं चन्द्रादिसङ्ख्याविषयं प्रश्ननिर्वचनसूत्रमुपलभ्यते—"पुक्खरवरे णं भंते दीवे केवइया चंदा पभासिंसु पभासंति पभासिस्संति वा ? गोयमा चोयालं चंदसयं पभासिंसु पभासंति पभासिस्संति वा, चोयालं सूरिआण सयं तविंसु तवंति तविस्संति वा, चत्तारि सहस्साइं बत्तीसं च नक्खत्ता जोगं जोइंसु जोइंति जोइस्संति वा, बारसहस्साइं छच्च बावत्तरमहागहसया चारिं चरिंसु चरंति चरिस्संति वा, छन्नउइसयसहस्साइं चोयालीसं सहस्साइं चत्तारि सयाइं तारागणकोडाकोडीणं सोभिंसु सोभंति सोभिस्संति वा" । तथा चात्रैवार्थे सूर्यप्रज्ञप्तौ सङ्ग्रहणिगाथा—"चोआलं चंदसयं चोआलं चेव सूरिआण सयं । पुक्खरवरम्मि दीवे चरंति एए पभासिंता ॥१॥ चत्तारि सहस्साइं बत्तीसं चेव हुंति नक्खत्ता । छच्चसया बावत्तर महागहा बारससहस्सा ॥ २ ॥ छन्नउइ सयसहस्सा चोआलीसं भवे सहस्साइं । चत्तारिं च सयाइं तारागणकोडिकोडीणं ॥ ३ ॥" तत एवंरूपस्य सकलं पुष्करवरद्वीपमधिकृत्य चन्द्रसूर्यग्रहनक्षत्रतारासङ्ख्याप्रतिपादकस्य सूत्रालापकस्य दर्शनादवसीयते सर्वेष्वपि द्वीपसमुद्रेषु विवक्षितं करणं व्यापकमिति ।

ज्योतिष्करण्डकसूत्रकाराभिप्रायोऽप्येवमेव व्यवस्थितः, तथा च तद्ग्रन्थः—"धायइसंरुप्पभिई उद्दिट्ठा तिगुणिआ भवे चंदा। आइल्लचंदसहिआ ते हुंति अणंतरं परतो ॥ १ ॥ आइच्चाणं पि भवे एसेव विही अणेण कायव्वो। दीवेसु समुद्देसु य एमेव परंपरं जाण ॥ २ ॥" किं चास्यां सङ्ग्रहण्यां क्षेत्रसमासे चैतावदेव सकलद्वीपसमुद्रगतचन्द्रादि-सङ्ख्याप्रतिपत्त्यर्थं सूत्रकृता करणमुक्तं। यदि पुनरन्यथा मनुष्यक्षेत्राद्बहिश्चन्द्रादिसङ्ख्या भवेत्तत आचार्यान्तरैरिव तत्प्रतिपत्त्यर्थं करणान्तरमभिधीयते, न चाभिहितं. तस्मादवगम्यते सर्वेष्वपि द्वीपसमुद्रेष्वेतत्करणमनुसर्त्तव्यमिति। केवलं मनुष्यक्षेत्राद्बहिः सूर्याश्चन्द्रमसः कथं व्यवस्थिता इति चन्द्रप्रज्ञप्त्यादौ नोक्तं. एतावदुक्तं—"चंदाओ सूरस्स य सूरा चंदस्स अंतरं होइ। पन्नाससहस्साइं जोयणाइं अणूणाइं ॥१॥ सूरस्स य सूरस्स य ससिणो ससिणो य अंतरं होइ। बहियाउ माणुसनगस्स जोअणाणं सयसहस्सं ॥ २ ॥ सूरंतरिआ चंदा चंदंतरिआ य दिणयराऽऽदित्ता। चित्तंतरलेसागा सुह-लेसा मंदलेसा य ॥ ३ ॥" ततः सम्भाव्यते सूचीश्रेण्या व्यवस्थिता न परिरयश्रेण्येति। अन्यथा वा बहुश्रुतेभ्य आगमं परिभावनीयमिति ॥ ६५ ॥

सम्प्रति मनुष्यक्षेत्रे जम्बूद्वीपादारभ्य क्रमेण चन्द्रादिसङ्ख्यामाह—

**दुन्नि य चउरो बारस बायालीसा बिसत्तरी चेव। एगंतरदीवुदहीण चंदसंखा मुणेयव्वा ॥ ६६ ॥**

व्याख्या—मनुष्यक्षेत्रे एकोत्तरद्वीपोदधीनां द्वीपः समुद्रो द्वीपः समुद्र इत्येवमेकान्तरितद्वीपसमुद्राणामियं चन्द्रसङ्ख्या,

उपलक्षणमेतत् ( तेन ) सूर्यसङ्ख्या च ज्ञातव्या। तद्यथा—द्वौ जम्बूद्वीपे, चत्वारो लवणसमुद्रे, द्वादश धातकीखण्डे, द्विचत्वारिंशत्कालोदसमुद्रे, द्विसप्ततिः पुष्करवरद्वीपार्धे इति ॥ ६६ ॥

अधुना मनुष्यक्षेत्र एव चन्द्रसूर्यपरंपराश्रेणिपरिमाणमाह—

**चत्तारि य पंतीओ चंदाइच्चाण मणुयलोगम्मि। छावट्ठी छावट्ठी होइ य इक्किक्कपंतीए ॥ ६७ ॥**

व्याख्या—मनुष्यलोके चतस्रश्चन्द्रसूर्याणां पङ्क्तयो भवन्ति। तद्यथा—द्वे चन्द्राणां, द्वे सूर्याणां। इयमत्र भावना—इह यदा जम्बूद्वीपे मेरोर्दक्षिणत एकः सूर्यश्चारं चरति तदा द्वितीय उत्तरतश्चारं चरति, तदैव च दक्षिणभागे दक्षिणसूर्यस्य समश्रेण्या प्रतिबद्धौ द्वौ सूर्यौ लवणसमुद्रे, षड् धातकीखण्डे, एकविंशतिः कालोदे, षट्त्रिंशत् पुष्करवरद्वीपार्धे चारं चरन्ति। एवमेवोत्तरत उत्तरसूर्यस्य समश्रेण्या प्रतिबद्धा लवणोदादिसूर्या इति द्वे सूर्याणां पङ्क्ती, एवमेव द्वे चन्द्रपङ्क्ती अपि। एकैकस्यां च पङ्क्तौ चन्द्राः सूर्याश्च प्रत्येकं षट्षष्टिर्भवन्ति, तद्यथा—मेरोर्दक्षिणतः सूर्यपङ्क्तावेको जम्बूद्वीपे, द्वौ लवणसमुद्रे, षट् धातकीखण्डे, एकविंशतिः कालोदसमुद्रे, षट्त्रिंशत् पुष्करवरद्वीपार्धे इति सर्वसङ्ख्यया षट्षष्टिः, एवमुत्तरतोऽपि सूर्यपङ्क्तौ षट्षष्टिर्भावनीया। एवं पृथक् पृथक् चन्द्रपङ्क्त्योरपि ॥ ६७ ॥

नक्षत्रग्रहपङ्क्तिप्रतिपादकं चेदं सूर्यप्रज्ञप्तिगतं गाथाद्वयं—

**छप्पन्नं पंतीओ नक्खत्ताणं तु मणुयलोगम्मि। छावट्ठी छावट्ठी य होइ इक्किक्किया पंती ॥ ६८ ॥**

**छावत्तरी गहाणं पंतिसयं होइ मणुयलोगम्मि। छावट्ठी छावट्ठी य होइ इक्किक्किया पंती ॥ ६९ ॥**

व्याख्या—इदं गाथाद्वयमपि सुगमं ॥ ६८–६९ ॥

इह जम्बूद्वीपे सूर्ययोर्दक्षिणोत्तरायणे कुर्वतोः प्रतिदिवसपरिभ्रमिक्षेत्रलक्षणानि निजबिम्बप्रमाणविष्कम्भाणि मण्डलानि भवन्ति । तानि च चतुरशीत्यधिकशतसङ्ख्यानि, तत्र सर्वाभ्यन्तरान्मण्डलात्परतः सर्वबहिर्वर्तिमण्डलमभिव्याप्य यद्वर्तते क्षेत्रं तस्य सम्प्रति प्रमाणमाह—

**सव्वेसिं सूराणं अब्भिंतरमंडला उ बाहिरियं । होइ अबाहा नियमा पंचेव दसुत्तरसयाइं ॥ ७० ॥**

व्याख्या—सर्वेषां सूर्याणां, सूर्यग्रहणाच्चन्द्रमसामपि ग्रहणं, अन्यथा जम्बूद्वीपे द्वावेव सूर्याविति सर्वेषां सूर्याणामिति वचनानुपपत्तिः, ततः सर्वेषां जम्बूद्वीपे चन्द्रसूर्याणां सर्वाभ्यन्तरान्मण्डलात् परतो बाह्यं सर्वबाह्यं मण्डलमभिव्याप्य यद्भवति क्षेत्रमबाधारूपं तन्नियमात् पञ्चैव दशोत्तराणि योजनशतानि । यत्तु सर्वाभ्यन्तरमण्डले क्षेत्रविष्कम्भमानं तदधिकं । किमुक्तं भवति ? जम्बूद्वीपगतयोश्चन्द्रमसोः सूर्ययोश्च सामस्त्येन मण्डलक्षेत्रपरिमाणं पञ्चयोजनशतानि दशोत्तराणि अष्टचत्वारिंशच्चैकषष्टिभागा योजनस्य ५१० $\frac{48}{61}$ ॥ ७० ॥

सम्प्रति चन्द्रः सूर्यो वा कियज्जम्बूद्वीपे प्रविशति कियद्वा लवणसमुद्रे इत्येतन्निरूपयति—

**पविसेइ य उयहिम्मी तिन्नेव सयाइं तीसअहियाइं । असियं च जोयणसयं जंबुद्दीवम्मि पविसेइ ॥७१॥**

व्याख्या—चन्द्रः सूर्यो वोदधौ लवणसमुद्रे प्रविशति त्रीणि योजनशतानि त्रिंशदधिकानि ३३० । किमुक्तं भवति ? त्रीणि योजनशतानि त्रिंशदधिकानि लवणसमुद्रमवगाह्य परतोऽनन्तरं सर्वबाह्यं मण्डलं परिभ्रमतीति । तथा 'असियं' अमशी-

त्यधिकं योजनशतं जम्बूद्वीपे प्रविशति । एतदुक्तं भवति—अशीत्यधिकं योजनशतं जम्बूद्वीपे प्रविश्याशीत्यधिकयोजनशतपर्यन्ते सर्वाभ्यन्तरमण्डलमुपसङ्क्रम्य चारं चरतीति । सूर्यस्य च निजविम्बप्रमाणविष्कम्भाणि मण्डलानि चतुरशीत्यधिकशतसङ्ख्यानि भवन्ति, मण्डलान्तराणि तु द्वियोजनप्रमाणविष्कम्भाणि त्र्यशीत्यधिकशतसङ्ख्यानि । चन्द्रस्य निजबिम्बप्रमाणविष्कम्भाणि मण्डलानि पञ्चदश, चतुर्दश मण्डलान्तराणि एकैकस्य च मण्डलान्तरस्य विष्कम्भपरिमाणं पञ्चत्रिंशद्योजनानि त्रिंशदेकषष्टिभागा योजनस्य एकं चैकषष्टिभागं सप्तधा छित्त्वा तस्य सत्काश्चत्वारो भागाः । तथा चोक्तं चन्द्रप्रज्ञप्तौ—"चंदमंडलस्स णं भंते! चंदमंडलस्स केवइए अबाहाए अंतरे पन्नत्ते? गोयमा! पणतीसं जोयणाइं तीसं च एगसट्ठिभागा जोअणस्स एगं च एगसट्ठिभागं सत्तहा छित्ता चत्तारि चुण्णिया भागा चंदमंडलस्स चंदमंडलस्स अबाहाए अंतरे पन्नत्ते" इति । एतदर्थप्रतिपादिकाश्चेमाः शास्त्रान्तरगाथाः—"पन्नरस मंडलाइं चंदस्स महेसिणो बवइ संति । चुलसी य मंडलसयं अणूणगं बिंति सूरस्स ॥ १ ॥ जोअणसयं असीअं अंतो ओगाहिऊण दीवम्मि । तस्सुवरिं तु सपरिद्धिं अब्भिंतरमंडलं रविणो ॥ २ ॥ तीसाणि तिन्नि जोअण सयाणि ओगाहिऊण जलहिम्मि । तस्सुवरिं तु सपरिद्धि बाहिरगं मंडलं रविणो ॥ ३ ॥ दो जोअणाणि सूरस्स मंडलाणं हवंति अंतरए । चंदस्स वि पणतीसं साहिआ जोअणा हुंति ॥ ४ ॥" तथा जम्बूद्वीपे सूर्यस्य पञ्चषष्टिर्मण्डलानि भवन्ति, लवणसमुद्रे एकोनविंशं मण्डलशतं । तथा चोक्तं जम्बूद्वीपप्रज्ञप्तौ—"जंबुद्दीवे णं भंते! दीवे केवइअं ओगाहित्ता केवइआ सूरमंडला पन्नत्ता? गोयमा! जंबुद्दीवे णं दीवे असीअं जोयणसयं ओगाहित्ता इत्थ णं पन्नट्ठी सूरमंडला पन्नत्ता" । अत्रापि च वृद्धवादः—मेरोः पूर्वतो निषधपर्वतशिरस उपरि

त्रिषष्टिमण्डलानि, द्वे मण्डले हरिवर्षजीवाकोट्या उपरि, तथा मेरोरपरतो नीलपर्वतशिरस उपरि त्रिषष्टिमण्डलानि, द्वे च मण्डले रम्यकक्षेत्रजीवाकोट्या उपरीति। तथा "लवणे णं भंते! समुद्दे केवइअं ओगाहित्ता केवइआ सूरमंडला पन्नत्ता? गोयमा! लवणसमुद्दे तिन्नितीसाइं जोअणसयाइं ओगाहित्ता इत्थ णं एगूणवीसं मंडलसयं पन्नत्तं" इति। तथा चन्द्रमसो जम्बूद्वीपे पञ्च मण्डलानि, लवणसमुद्रे दश। तथा चोक्तं जम्बूद्वीपप्रज्ञप्तावेव—"जंबुद्दीवे णं भंते! दीवे केवइअं ओगाहित्ता केवइआ चंदमंडला पन्नत्ता? गोयमा! जंबुद्दीवे णं दीवे असीअं जोअणसयं ओगाहित्ता इत्थ णं पंच चंदमंडला पन्नत्ता। लवणे णं भंते! समुद्दे केवइअं ओगाहित्ता केवइआ चंदमंडला पन्नत्ता? गोयमा लवणसमुद्दे तिन्नितीसाइं जोअणसयाइं ओगाहित्ता इत्थ णं दस चंदमंडला पन्नत्ता। एवमेव सपुव्वावरे णं जंबुद्दीवे य लवणे अ पंचदस मंडला भवंतीति मक्खायं" इति। नक्षत्राणां तारकाणां च पुनः प्रत्येकमेकैकं सदावस्थितमेव मण्डलं, न दक्षिणायनमुत्तरायणं वा तेषां भवतीति ॥ ९१ ॥

सम्प्रति चन्द्रादीनां भ्रमिस्वरूपं व्याचिख्यासुः सूर्यप्रज्ञप्तिगाथां पठति—

**ते मेरुपरियडंता पयाहिणावत्तमंडला सव्वे। अणवट्ठियजोगजुआ चंदा सूरा गहगणा य ॥ ९२ ॥**

व्याख्या—ते चन्द्रादित्यग्रहगणाः सर्वेऽपि जम्बूद्वीपगतमेरुं मध्ये कृत्वा पर्यटन्तः। कथंभूताः सन्तः पर्यटन्त इत्याह—"अणवट्ठियजोगजुआ त्ति" अनवस्थितो नक्षत्रैः सार्धं यो योगस्तेन युता अनवस्थितयोगयुताः, तथाहि—चन्द्रः सूर्यो ग्रहो वा कदापि केनापि नक्षत्रेण सह योगमायातीति प्रसिद्धमेतत्, इत्थंभूताः सन्तः पर्यटन्तो मेरुदक्षिणावर्तम-

क्षिप, तस्य वृत्तत्वात्, तत इष्टे प्रतरे घनं–त्र्यस्रादीनां संख्या भवति। तथ प्रतराणां त्रयोदशादीनां घनमेकत्र मीलितं सत् निवक्षिते सौधर्म्मेशानादिके कल्पे घनं भवति। तत्र सौधर्म्मेशानवलये प्रथमे प्रतरे एकस्यां दिशि द्वाषष्टिर्विमानानि, तेषां त्रिभिर्भागे लब्धानि त्र्यस्रचतुरस्रवृत्तानि प्रत्येकं विंशतिः, शेषे द्वे विमाने, तन्मध्यादेकं त्र्यस्रेषु द्वितीयं चतुरस्रेषु क्षिप्यते, तत एकस्यां पङ्क्तौ जातानि त्र्यस्राण्येकविंशतिः, चतुरस्राण्येकविंशतिः, वृत्तानि विंशतिः, ततो राशित्रयमपि चतुर्गुणं कृत्वा वृत्तेष्विन्द्रकः प्रक्षिप्यते, ततः प्रथमे प्रतरे जातानि त्र्यस्राणि चतुरशीतिः, चतुरस्राणि चतुरशीतिः, वृत्तान्येकाशीतिः। ततो द्वितीये प्रतरे एकस्यां दिशि एकषष्टेस्त्रिभिर्भागे लब्धानि त्र्यस्रादीनि प्रत्येकं विंशतिः, शेषमेकं त्र्यस्रेषु क्षिप्यते, ततो राशित्रयस्य चतुर्गुणने इन्द्रकस्य च वृत्तेषु प्रक्षेपे जातानि द्वितीये प्रतरे त्र्यस्राणि चतुरशीतिः, चतुरस्राण्यशीतिः, वृत्तान्येकाशीतिः। तृतीये तु प्रतरे एकस्यां दिशि षष्टेस्त्रिभिर्भागे लब्धानि त्र्यस्रादीनि प्रत्येकं विंशतिः, तेषां चतुर्गुणने इन्द्रकस्य च वृत्तेषु प्रक्षेपे जातानि त्र्यस्राण्यशीतिः, चतुरस्राण्यशीतिः, वृत्तान्येकाशीतिः। एवं शेषप्रतरेष्वपि भावनीयम्। त्रयोदशस्वपि च प्रतरेषु त्र्यस्रादिसंख्यामीलनेन जातानि सौधर्म्मेशानवलये त्र्यस्राण्यष्टाशीत्यधिकानि नव शतानि, चतुरस्राणि द्वासप्तत्यधिकानि नव शतानि, वृत्तानि पञ्चषष्ट्यधिकानि नव शतानि, एवं शेषकल्पेष्वपि भावना कार्या। केवलं सौधर्म्मेशानयुग्मादिषु त्रयोदशसु स्थानेष्वावलिकासु वृत्तत्र्यस्रचतुरस्राणां विमानानां पृथक्संख्यानिरूपणाय यन्त्रकस्थापना।

पान्तरालानामेकान्तरितचन्द्रसूर्याणां प्रत्येकं पञ्चचत्वारिंशं शतमवतिष्ठते । "तेण परं पंतीउ छगसत्तगवुड्ढिउ नेआ" इति। ततः परं चन्द्रार्काणां पङ्क्तयः षट्सप्तकवृद्ध्या ज्ञेयाः । किमुक्तं भवति ? प्रथमपङ्क्तेरनन्तरमेका पङ्क्तिः षट्कवृद्ध्या, ततो द्वितीया सप्तकवृद्ध्या, तदनन्तरं पङ्क्तिद्वयं षट्कवृद्ध्या, तत एका पङ्क्तिः सप्तकवृद्ध्येत्येवं पङ्क्तयः प्रवर्धमानाः प्रतिद्वीपं प्रतिसमुद्रं च वेदितव्याः । इयमत्र भावना—पुष्करवरद्वीपस्योत्तरार्धे प्रथमायां पङ्क्तौ पञ्चचत्वारिंशं शतं चन्द्राणां पञ्चचत्वारिंशं शतं सूर्याणां । द्वितीयस्यां च पङ्क्तौ तदेव षड्भिरधिकं । किमुक्तं भवति ? एकपञ्चाशदधिकं चन्द्राणां शतं एकपञ्चाशदधिकं सूर्याणां शतमिति । तृतीयस्यां पङ्क्तौ तदेव प्रत्येकं सप्तभिरधिकमष्टपञ्चाशदधिकं शतमित्यर्थः । चतुर्थ्यां पङ्क्तौ तदेव प्रत्येकं षड्भिरधिकं चतुःषष्ट्यधिकं शतमित्यर्थः । पञ्चम्यां पङ्क्तौ तदपि प्रत्येकं षड्भिरधिकं सप्तत्यधिकं शतमित्यर्थः । षष्ठ्यां पङ्क्तौ तदपि प्रत्येकं सप्तभिरधिकं सप्तसप्तत्यधिकं शतमित्यर्थः । सप्तम्यां पङ्क्तौ तदपि प्रत्येकं षड्भिरधिकं त्र्यशीत्यधिकं शतमित्यर्थः । अष्टम्यां पङ्क्तौ तदपि प्रत्येकं षड्भिरधिकं एकोननवत्यधिकं शतमित्यर्थः । सर्वसङ्ख्यया पुष्करवरद्वीपोत्तरार्धे चन्द्राणां सूर्याणां च प्रत्येकं त्रयोदश शतानि सप्तत्रिंशदधिकानि भवन्ति ॥ ७४ ॥

तथा चाह—

चंदाण सव्वसंखा सत्ततीसाइं तेरससयाइं । पुक्खरदीविअरद्धे सूराण वि तत्तिआ जाण ॥ ७५ ॥

व्याख्या—सुगमा । नवरं "पुक्खरदीविअरद्धे" पुष्करद्वीपस्येतरार्धे मानुषक्षेत्रात् परत इत्यर्थः । तदनन्तरं च पुष्करवरोदे समुद्रे प्रथमपङ्क्तौ चन्द्राणां च प्रत्येकं द्वे शते नवत्यधिके २९० । किमुक्तं भवति ? यत्पाश्चात्ये पुष्करवरद्वीपोत्त-

रार्धे चन्द्राणां सूर्याणां च प्रथमपङ्क्तौ परिमाणमुक्तं तत्पुष्करवरोदसमुद्रे प्रथमपङ्क्तौ द्विगुणमवमेयमिति । एवमुत्तरेष्वपि द्वीपसमुद्रेषु यद्यत् पाश्चात्ये द्वीपे समुद्रे वा प्रथमपङ्क्तौ चन्द्राणां सूर्याणां च परिमाणं तत्तदनन्तरे उत्तरस्मिन् द्वीपे समुद्रे वा प्रथमपङ्क्तौ द्विगुणमवसातव्यं । ततः सर्वत्रापि द्वितीयपङ्क्तौ षड्वृद्धिः, तृतीयपङ्क्तौ सप्तकवृद्धिः, ततः पङ्क्तिद्वयं षड्वृद्धिः, पुनरेकस्यां सप्तकवृद्धिः, ततः पुनरपि पङ्क्तिद्वये षड्वृद्धिरित्येवं तावद्यावत्तस्य द्वीपस्य समुद्रस्य वा चरमा पङ्क्तिरिति । इदं तु मतमाशाम्बरीयमवसेयं, तत्संमत एव कर्मप्रकृतिप्राभृतेऽस्य मतस्य दर्शनादिति ॥ ३५ ॥

अस्य करणविभावनायां यत्प्रसिद्धं मतान्तरं तत्प्रतिपादिकेयं प्रक्षेपगाथा—

चोआलसयं पढमिल्लुआए पंतीए चंदसूराणं । तेण परं पंतीओ चउरुत्तरिआ य वुड्ढीए ॥ ३६ ॥

व्याख्या—मानुषात् क्षेत्रात् परतः पञ्चाशद्योजनसहस्राण्यवगाह्यात्रान्तरे चन्द्रसूर्याणां प्रथमा परिरयपङ्क्तिः, तस्यां च पङ्क्तौ द्विसप्ततिश्चन्द्रमसो द्विसप्ततिः सूर्याः । तथा च तद्ग्रन्थः—"ताहे माणुसुत्तराओ नगाओ पन्नासं जोअणसहस्साइं गंतूणं इत्थ पढमिल्लुआ चंदसूराणं पंती बावत्तरिं चंदा बावत्तरिं सूरा" इति । तस्यां च प्रथमायां पङ्क्तौ चन्द्रस्य सूर्यस्य च परस्परमन्तरमेकं लक्षमेकं सहस्रं सप्तदशोत्तरं सप्त च षट्त्रिंशद्भागा योजनस्य । कथमेतदवसीयत इति चेदुच्यते—इह प्रथमा पङ्क्तिर्मानुषात्क्षेत्रात् परतः पञ्चाशद्योजनसहस्रेषु, तत एकतोऽपि पञ्चाशद्योजनसहस्राण्यपरतोऽपीति जातमेकं लक्षं, लक्षस्य च परिरयस्त्रीणि शतसहस्राणि षोडश सहस्राणि द्वे शते सप्तविंशत्यधिके ३१६२२७, शेषं न विवक्षितमित्युक्तं । एतन्मनुष्यक्षेत्रपरिरयमध्ये प्रक्षिप्यते । मनुष्यक्षेत्रपरिरयश्चायं—एका योजनकोटी द्विचत्वारिंशल्लक्षास्त्रिंशत्सहस्राणि

द्वे शते एकोनपञ्चाशदधिके १४२३०२४९ । उक्तं च—"एगा ओयणकोडी लक्खा बायाल तीसइसहस्सा । समयखित्त-परिरउ दो चेव सया अउणपन्ना ॥ १ ॥" उत्तयमीलने जातमिदमेका योजनकोटी पञ्चचत्वारिंशल्लक्षाः षट्चत्वारिंशत्सहस्राणि चत्वारि शतानि षट्सप्तत्यधिकानि १४५४६४७६ । एतस्य राशेश्चतुश्चत्वारिंशेन शतेन १४४ भागो ह्रियते, लब्धमेकं शतसहस्रं दश शतानि सप्तदशोत्तराणि १०१०१७, शेषमवतिष्ठतेऽष्टाविंशतिः २८ । ततो भागहार्यराशेः शेषराशेश्च चतुष्केणापवर्तना क्रियते, लब्धाः सप्त षट्त्रिंशद्भागा योजनस्य ७/३६ । एतावत्प्रमाणं प्रथमपङ्क्तौ चन्द्रस्य सूर्यस्य च परस्परमन्तरं, एतद्द्विगुणं च चन्द्रस्य चन्द्रस्य परस्परमन्तरम् ॥ ७६ ॥

तथा चाह—

बावत्तरि चंदाणं बावत्तरि सूरिआण पंतीए । पढमाए अंतरं पुण चंदा चंदस्स लक्खदुगं ॥ ७७ ॥

व्याख्या—सुगमा । नवरं लक्षद्विकं विंशतिशतैश्चतुस्त्रिंशदधिकैः समधिकमवगन्तव्यं । एवं सर्वस्यामपि पङ्क्तौ परिरयपरिमाणं परिभाव्य तस्य च विवक्षितपङ्क्तिगतचन्द्रसूर्यसङ्ख्यया भागहारं दत्त्वा चन्द्रसूर्याणां चन्द्राणां सूर्याणां च परस्परमन्तरं परिभावनीयं । यश्च द्वीपः समुद्रो वा यावन्ति योजनशतसहस्राणि विस्तृतस्तत्र तावत्यश्चन्द्रसूर्याणां पङ्क्तयः प्रतिपत्तव्याः ॥ ७७ ॥

तथा चाह—

जो जाइं सयसहस्साइं विच्छरो सागरो अ दीवो वा । तावइयाउ तहिअं पंतीउ चंदसूराणं ॥ ७८ ॥

व्याख्या—सुगमा ॥ ७८ ॥

सम्प्रत्येतन्मतेन प्रतिद्वीपं प्रतिसमुद्रं च चन्द्रसूर्यपरिमाणकरणाय करणमुच्यते—

**गच्छोत्तरसंवग्गो उत्तरहीणम्मि पक्खिवे आइं । अंतिमधणमाइजुअं गच्छद्धगुणं तु सव्वधणं ॥ ७९ ॥**

व्याख्या—यत्र द्वीपे समुद्रे वा यावत्यः पङ्क्तयस्तत्र तावान् गच्छ उत्तरं चतुष्क उत्तरोत्तरपङ्क्तौ चतुष्कस्य प्रवर्धमानत्वात्, तत्र गच्छस्योत्तरेण चतुष्केण संवर्गो गुणना क्रियते, ततः स उत्तरेण चतुष्केण हीन उत्तरहीनो विधीयते, तस्मिन् गच्छोत्तरसंवर्गे उत्तरहीने आदिं प्रथमपङ्क्तिपरिमाणं प्रक्षिपेत् । ततोऽन्तिमधनमन्तिमपङ्क्तिपरिमाणमागच्छति । ततस्तदेवान्तिमधनमादिना युतं कृत्वा गच्छार्धेन गुण्यते, ततः सर्वधनं विवक्षिते द्वीपे समुद्रे वा सर्वपङ्क्तिगतचन्द्रसूर्यपरिमाणमायातीति । तत्र पुष्करवरद्वीपोत्तरार्धेऽष्टौ पङ्क्तय इति अष्टको गच्छः, स उत्तरेण चतुष्केण गुण्यते, जाता द्वात्रिंशत् ३२, सा उत्तरेण चतुष्केण हीना क्रियते, शेषा स्थिताऽष्टाविंशतिः २८, तत्र प्रथमपङ्क्तिपरिमाणं चतुश्चत्वारिंशं शतं प्रक्षिप्यते, जातं द्विसप्तत्यधिकं शतं १७२, एतावन्तः पुष्करवरद्वीपोत्तरार्धेऽष्टमपङ्क्तौ चन्द्रसूर्याः समुदिता इति, तदेतदादिना प्रथमपङ्क्तिपरिमाणेन चतुश्चत्वारिंशेन शतेन युतं क्रियते, जातानि त्रीणि शतानि षोडशोत्तराणि ३१६, एतानि गच्छस्याष्टकरूपस्यार्धेन चतुष्केण गुण्यन्ते, जातानि द्वादश शतानि चतुःषष्ट्यधिकानि १२६४, एतावन्तः पुष्करवरद्वीपोत्तरार्धे सर्वसङ्ख्यया समुदिताः सूर्याश्चन्द्रमसः । तथा पुष्करवरोदे समुद्रे द्वात्रिंशल्लक्षप्रमाणविष्कम्भे द्वात्रिंशत्पङ्क्तय इति द्वात्रिंशद्गच्छः, स उत्तरेण चतुष्केण गुण्यते. जातमष्टाविंशं शतं १२८, तत उत्तरेण चतुष्केण हीनं क्रियते, जातं चतुर्विंशं शतं १२४,

तत्रादिं प्रथमपङ्क्तिपरिमाणं षट्सप्तत्यधिकशतरूपं १७६ प्रक्षिप्यते, तस्मिंश्च प्रक्षिप्ते जातानि त्रीणि शतानि ३००, एतावन्तः पुष्करवरोदे समुद्रे द्वात्रिंशत्तमायां पङ्क्तौ समुदिताश्चन्द्रसूर्याः, एतत् आदिना षट्सप्तत्यधिकेन शतेन १७६ युतं क्रियते, जातानि चत्वारि शतानि षट्सप्तत्यधिकानि ४७६, एतानि गच्छार्धेन षोडशकलक्षणेन गुण्यन्ते, जातानि षट्सप्ततिशतानि षोडशाधिकानि ७६१६, एतावन्तः पुष्करवरोदे समुद्रे सर्वसङ्ख्यया समुदिताश्चन्द्रसूर्याः। एवं सर्वेष्वपि द्वीपसमुद्रेषु चन्द्रसूर्यपरिमाणं परिभावनीयमिति ॥ ७९ ॥

तदेवं व्याख्याता मतान्तरप्रतिपादिकाः प्रक्षेपगाथाः, सम्प्रति प्रस्तुतमनुसंधीयते, तत्र द्वीपसमुद्रेषु चन्द्रादिसङ्ख्यानयनाय करणं "धायइसंरूप्पजिर्ड" इत्यादिकं प्रागेवोक्तं, अधुना द्वीपसमुद्रपरिमाणज्ञापनार्थमाह—

**उद्धारसागराणं अड्ढाइज्जाण जत्तिआ समया। दुगुणा दुगुणपवित्थरदीवोदहि हुंति एवइया ॥ ८० ॥**

व्याख्या—अर्धं तृतीयं येषां तान्यर्धतृतीयानि द्वे अर्धे चेत्यर्थः, तेषामुद्धारसागरोपमाणां प्राङ्निर्दिष्टस्वरूपाणां यावन्तः समया एतावत्प्रमाणा द्वीपोदधयः। कथंभूता इत्याह—द्विगुणद्विगुणप्रविस्तराः पूर्वस्मात् पूर्वस्मात् द्विगुणो द्विगुणश्च विस्तरो येषां ते तथा। तथा ( हि )—जम्बूद्वीपविस्तारो योजनलक्षं, इह योजनं प्रमाणाङ्गुलेन वेदितव्यं "नगपुढविविमाणाइं मिणसु पमाणंगुलेण" इतिवचनप्रामाण्यात्। ततो द्वे लक्षे विष्कम्भो लवणसमुद्रस्य, चत्वारि लक्षाणि धातकीखण्डस्य, अष्टौ कालोदसमुद्रस्य, षोडश पुष्करवरद्वीपस्य, द्वात्रिंशत् पुष्करवरोदसमुद्रस्य। एवं पूर्वस्मात् पूर्वस्मात् द्विगुणद्विगुण-

विष्कम्भा द्वीपसमुद्रास्तावदवगन्तव्या यावदसङ्ख्येययोजनकोटीकोटीप्रमाणात् स्वयम्भूरमणात् द्वीपात् स्वयम्भूरमणः समुद्रो द्विगुणविष्कम्भ इति ॥ ८० ॥

उक्तं द्वीपसमुद्रपरिमाणं, अथ कियद्वीपसमुद्रपरिमाणं मनुष्यक्षेत्रमित्येतन्निरूपयति—

**अड्ढाइज्जा दीवा दुन्नि समुद्दा य माणुसं खित्तं। पणयालसयसहस्सा विक्खंभायामओ भणिअं ॥ ८१ ॥**

व्याख्या—अर्धतृतीया द्वीपास्तद्यथा—जम्बूद्वीपो धातकीखण्डः पुष्करद्वीपस्य चार्धं । द्वौ समुद्रौ, तद्यथा—लवणसमुद्रः कालोदसमुद्रश्च । एते सर्वेऽपि समुदिता मानुषं मनुष्याणां सम्बन्धि क्षेत्रं, अत्र मनुष्याणां जन्मनो मरणस्य च सम्भवात् । तत्र भरतादिषु पञ्चचत्वारिंशत्सङ्ख्येषु क्षेत्रेषु अन्तरद्वीपेषु च षट्पञ्चाशत्सङ्ख्येषु मनुष्याणां जन्म मरणं च सुप्रतीतं । समुद्रवर्षधरपर्वतादिषु पुनः प्रायो जन्म न घटते, मरणं पुनः संहरणतो विद्यालब्धिवशतो वा तत्र स्वयं गतानां भवति । मनुष्यक्षेत्रात्तु बहिर्जन्मतो मनुष्या न भूता न भवन्ति न भविष्यन्ति च । तथा यदि नाम केनचिद्देवेन दानवेन विद्याधरेण वा पूर्वानुबद्धवैरनिर्यातनार्थमेवंरूपा बुद्धिः क्रियते, यथाऽयं मनुष्योऽस्मात् स्थानादुत्पाट्य मनुष्यक्षेत्रस्य बहिः प्रक्षिप्यते तेनोर्ध्वशोषं शुष्यति म्रियते चेति, तथापि लोकानुभावादेव सा काचनापि बुद्धिर्भूयः परावर्त्तते यथा संहरणमेव न भवति संहृत्य वा समानयति, तेन संहरणतोऽपि मनुष्यक्षेत्राद्बहिर्मनुष्या मरणमधिकृत्य न भूता न भवन्ति न भविष्यन्ति च । येऽपि जङ्घाचारिणो विद्याचारिणो वा नन्दीश्वरादीनपि यावद्गच्छन्ति तेऽपि तत्र गता न मरणमश्नुवते, किं तु मनुष्यक्षेत्रमागता एव, तेनार्धतृतीयद्वीपसमुद्रपरिमाणं मनुष्यक्षेत्रं न शेषमिति । तच्च किं प्रमाणमित्यत आह—

"पणयालेत्यादि" अर्धतृतीयद्वीपसमुद्रपरिमाणं मानुषक्षेत्रं विष्कम्भायामतो विष्कम्भत आयामतश्च भणितं तीर्थंकरगणधरैः पञ्चचत्वारिंशच्छतसहस्राणि ४५००००० । कथमिति चेदुच्यते—इह जम्बूद्वीपस्तैलापूपसंस्थानो लवणोदादयस्तु द्विगुणद्विगुणविष्कम्भा वलयाकृतयः । ततश्चैकस्यां दिशि पुष्करवरद्वीपस्यार्धमष्टौ योजनानां शतसहस्राणि विष्कम्भतः, अष्टौ कालोदसमुद्रः, चत्वारि धातकीखण्डः, द्वे लवणसमुद्रः, सर्वसङ्ख्यया द्वाविंशतिर्लक्षाः, एता एव च लक्षा अपरस्यामपि दिशि, ततो मिलिताश्चतुश्चत्वारिंशत्, एकलक्षो जम्बूद्वीप इति भवन्ति पञ्चचत्वारिंशल्लक्षाः प्रमाणं मानुषं क्षेत्रम् ८१

सम्प्रति कियतां द्वीपानां साक्षान्नामानि गाथाद्वयेनाह—

जंबुद्दीवो धायइ पुक्खरदीवो य वारुणिवरो य । खीरवरो वि य दीवो घयवरदीवो य खोयवरो ॥ ८२ ॥
नंदीसरो य अरुणो अरुणवाओ अ कुंडलवरो य । तह संखरुयगभुय(ग)वरकुसकुंचवरो तओ दीवो ॥ ८३ ॥

व्याख्या—प्रथमो द्वीपो जम्बूद्वीपः, ततो द्वितीयो धातकीखण्डः, तृतीयः पुष्करवरो द्वीपः, चतुर्थो वारुणीवरः, पञ्चमः क्षीरवरः, षष्ठो घृतवरः, सप्तम इक्षुवरः, अष्टमो नन्दीश्वरः, नवमोऽरुणः, ततोऽरुणोपपात इति अरुणस्यारुणशब्दस्योपसामीप्येन पृष्ठतः पातो नाम्नि यस्य सोऽरुणोपपातः, तद्यथा—दशमोऽरुणवरः, एकादशोऽरुणवरावभासः । यथा चारुणशब्दस्य त्रिप्रत्यवतारतोक्ता तथा कुण्डलादिशब्दानामपि वक्तव्या, सूत्रस्य सूचामात्रकारित्वात् । सा चैवं—द्वादशः कुण्डलः, त्रयोदशः कुण्डलवरः, चतुर्दशः कुण्डलवरावभासः । एतानि जम्बूद्वीपादारभ्य द्वीपानां क्रमेण नामानि, अत ऊर्ध्वं तु यानि शङ्खादीनि नामानि तानि यथाकथञ्चित् परं तान्यपि त्रिप्रत्यवताराणि, तद्यथा—शङ्खः शङ्ख-

वरः शङ्खवरावभासः, रुचको रुचकवरो रुचकवरावभासः, भुजगो भुजगवरो भुजगवरावभासः, कुशः कुशवरो कुशवरावभासः, क्रौञ्चः क्रौञ्चवरः क्रौञ्चवरावभासः, एवं त्रिप्रत्यवतारनामानस्तावद्द्रष्टव्या यावद्देवद्वीपादर्वाक्तनः सूर्यवरावभासो द्वीपः ॥ ७२–७३ ॥

एते च सर्वेऽपि प्रत्येकमेकैकेन वलयाकारेण समुद्रेण वेष्टितास्ततस्तन्नामप्रतिपादनार्थमाह—

**जंबुद्दीवे लवणो धायइसंडे अ होइ कालोउ । सेसाणं दीवाणं हवंति सरिसनामया उदही ॥ ७४ ॥**

व्याख्या—जम्बूद्वीपे जम्बूद्वीपस्य वलयाकारेण परिक्षिप्तः समुद्रो लवणोदनामा, धातकीखण्डे कालोदः. शेषाणां पुष्करवरप्रभृतीनां द्वीपानां परिवेष्टका उदधयः सर्वेऽपि सदृशनामानो द्वीपसदृशनामानः, तद्यथा—पुष्करवरस्य द्वीपस्य वलयाकारेण वेष्टकः समुद्रः पुष्करवरोदः, वारुणिवरस्य द्वीपस्य वारुणिवरोदः, एवं यावत्स्वयम्भूरमणस्य द्वीपस्य स्वयम्भूरमणः समुद्रः ॥ ७४ ॥

एतदेवोपसंहरन्नाह—

**एवं दीवसमुद्दा दुगुणा दुगुणा भवे असंखेज्जा । भणिओ य तिरियलोए सयंभुरमणोदही जाव ॥ ७५ ॥**

व्याख्या—एवमुक्तप्रकारेण द्वीपाः समुद्राश्च पूर्वपूर्वद्वीपसमुद्रापेक्षया द्विगुणा द्विगुणा भवन्तोऽसङ्ख्याता भवन्ति, यावत्पर्यन्ते स्वयम्भूरमणोदधिः, एतावत्प्रमाणस्तिर्यग्लोकस्तीर्थकरगणधरैर्भणितः ॥ ७५ ॥

इह मनुष्यक्षेत्रं पञ्चचत्वारिंशल्लक्षप्रमाणमुक्तं, ततस्तत्प्रसङ्गतोऽपरमपि किञ्चिदाह—

**पणयालीसं लक्खा सीमंतयमाणुसं उडु सिवं च। अपइठ्ठाणो सव्वठ्ठसिद्धि दीवो इमो लक्खं ॥ ७६ ॥**

व्याख्या—रत्नप्रभायां पृथिव्यां प्रथमे नरकप्रस्तटे सर्वमध्यवर्ती यः सीमन्तकाख्यो नरकेन्द्रकः, यच्च मानुषं क्षेत्रं, यच्च सौधर्मेशानवलये प्रथमे प्रस्तटे सर्वमध्यवर्ती उडुनामा विमानेन्द्रको, यच्च शिवं सिद्धिक्षेत्रं, एतानि चत्वार्यपि प्रत्येकमायामतो विष्कम्भतश्च पञ्चचत्वारिंशल्लक्षाः। तथा यः सप्तमपृथिव्यां अप्रतिष्ठानाभिधानो नरकेन्द्रकः, यच्च पञ्चस्वनुत्तराख्येषु विमानेषु सर्वमध्यवर्ति सर्वार्थसिद्धं नाम महाविमानं, यश्चादिमः सर्वद्वीपसमुद्राणामभ्यन्तरवर्ती द्वीपो जम्बूद्वीपः, एते त्रयोऽपि प्रत्येकमायामतो विष्कम्भतश्च लक्षं लक्षप्रमाणा भवन्ति ॥ ७६ ॥

अथ समुद्रेषु जलस्वरूपमाह—

**पत्तेअरसा चत्तारि सायरा तिन्नि हुंति उदयरसा। अवसेसा य समुद्दा इक्खुरसा हुंति नायव्वा ॥ ७७ ॥**

व्याख्या—चत्वारः सागराः समुद्राः प्रत्येकरसा भिन्नभिन्नरसा भवन्ति, तद्यथा—एको वारुणीरसोऽपरः क्षीररसोऽपरो घृतरसोऽपरो लवणरस इति। त्रयः सागरा भवन्ति उदकरसा उदकस्येव मेघसमुत्थजलस्येव रस आस्वादो येषां ते तथा। अवशेषाश्च समुद्रा नन्दीश्वरसमुद्रादयो भूतसमुद्रपर्यवसानाः सर्वेऽपीक्षुरसा भवन्ति ज्ञातव्या इक्षुरसस्येव रस आस्वादो येषां ते तथा। "उष्ट्रमुखादय" इति शब्दनिष्पत्तिः, चतुर्जातकसन्मिश्रत्रिभागवर्तितेक्षुरसवन्मधुरतोया शेषाः समुद्रा इति भावः ७७

प्रत्येकरसाश्चत्वारः सागरास्त्रय उदकरसा इत्युक्तमतस्तान्नामत आह—

वारुणिवर खीरवरो घयवर लवणो अ हुंति पत्तेया। कालोअ पुक्करोदहि सयंभुरमणो अ उदयरसा ८८

व्याख्या—वारुणीवरः क्षीरवरो घृतवरो लवणो लवणोदश्चेत्येते चत्वारोऽपि समुद्राः प्रत्येकरसा भिन्नभिन्नरसाः, तद्यथा—वारुणीवरसमुद्रः सुजातपरमद्रव्यसन्मिश्रमदिरास्वादजलः। क्षीरवरश्चतुर्विभागखण्डादिसन्मिश्रगोक्षीरास्वाद-जलः। घृतवरः सुकथितसद्योविस्पन्दितगोघृतास्वादतोयः। लवणोदो लवणमयजल इति। तथा कालोदः पुष्करवरोदधिः स्वयंभूरमणश्चेत्येते त्रयः समुद्रा उदकरसाः, नवरं कालोदसमुद्रस्य जलं कृष्णं माषराशिवर्णाभं गुरुपरिमाणं। पुष्करोदस-मुद्रस्य हितं पथ्यं तनुपरिमाणं स्फटिकवर्णाभं इत्थंभूतमेव च स्वयम्भूरमणस्येति ॥ ८८ ॥

सम्प्रति समुद्रेषु मत्स्यशरीरप्रमाणमाह—

लवणे पंचसयाइं सत्तसयाइं तु हुंति कालोए। जोअणसहस्समेगं सयंभुरमणम्मि मच्छाणं ॥ ८९ ॥

व्याख्या—लवणे लवणोदधौ मत्स्यानामुत्कर्षतः शरीरप्रमाणं पञ्च योजनशतानि। कालोदे सप्त योजनशतानि। स्वय-म्भूरमणे योजनसहस्रमेकमिति। योजनं चात्रोत्सेधाङ्गुलप्रमितमवसेयं, शरीरमाने तस्यैवाधिकृतत्वात् ॥ ८९ ॥

सम्प्रति मत्स्यानां सम्भवमाह—

लवणे कालसमुद्दे सयंभुरमणे य हुंति मच्छाउ। अवसेससमुद्देसु नत्थि उ मच्छा य मयरा वा ॥ ९० ॥

व्याख्या—'लवणे' लवणोदसमुद्रे, 'कालसमुद्दे' कालोदसमुद्रे स्वयम्भूरमणसमुद्रे च प्राचुर्येण मत्स्या भवन्ति । उपलक्षणमेतत् तेन शेषा अपि मकरादयो जलचरजीवविशेषास्तत्र भूयांसो भवन्तीति प्रतिपत्तव्यं । अवशेषेषु तु समुद्रेषु प्रायो न भवन्ति मत्स्या वा मकरा वा, वाशब्दादन्येऽपि कच्छपादयः ॥ ९० ॥

प्राय इति कथं लब्धमिति चेदुच्यते यत आह—

नत्थि त्ति पउरभावं पडुच्च न उ सव्वमच्छपडिसेहो । अप्पा सेसेसु भवे न हु ते निम्मच्छया भणिआ ॥ ९१ ॥

व्याख्या—इह "नत्थि उ मच्छा य मयरा वा" इति यत्प्राग् नास्तित्वं मत्स्यानामुक्तं तत् प्रचुरभावं प्राचुर्यं प्रतीत्य वेदितव्यं, यथा प्राचुर्येणावशेषेषु समुद्रेषु मत्स्यादयो न भवन्तीति, न तु सर्वथा, तत्र मत्स्यानां उपलक्षणमेतत् ( तेन ) मकरादीनां च प्रतिषेधः, यतोऽल्पाः शेषेषु समुद्रेषु मत्स्यादयो नियमतः सम्भवन्ति, न खलु ते निर्मत्स्या सर्वथा जलचरजीवरहिता भणितास्तीर्थकरगणधरैः । तथा चात्रार्थे संस्कृतक्षेत्रसमाससूत्रं संवादि—"लवणकालोदस्वयम्भूरमणा बहुमत्स्यकच्छपा नेतरे" इति ॥ ९१ ॥

सम्प्रति सदृशविसदृशनामानि द्वीपसमुद्रयुगलान्याह—

जंबू लवणो धायई कालो य पुक्खराइ जुअलाइं । वारुणिखीरघयक्खू नंदीसरो अरुणदीवुदही ॥ ९२ ॥

व्याख्या—जम्बूद्वीपो लवण इति तथा धातकीखण्डः कालोद इति द्वे अपि द्वीपोदधियुगले विसदृशनामके, पुष्करादीनि पुष्करवरप्रभृतीनि युगलानि सदृशनामानि, तान्येव लेशतो दर्शयति—"वारुणीत्यादि" वारुणीवरो द्वीपो

समुद्रः, घृतवरो द्वीपो घृतवरः समुद्रः, इक्षुवरो द्वीप इक्षुवरः समुद्रः. नन्दी-
वारुणीवरः समुद्रः. क्षीरवरो द्वीपः क्षीरवरः समुद्रः, घृतवरो द्वीपो घृतवरः समुद्रः ॥ ८२ ॥
श्वरो द्वीपो नन्दीश्वरः समुद्रः, अरुणवरो द्वीपोऽरुणवरः समुद्रः ॥ ८२ ॥

इह प्राक् षोडशानामेव द्वीपानां समुद्राणां च नामानि साक्षादभिहितानि, सम्प्रति शेषाणामतिदेशेनाह—

**आभरणवत्थगंधे उप्पलतिलए अ पउमनिहिरयणे । वासहरदहनईओ विजया वक्खारकप्पिंदा ॥ ८३ ॥**

**कुरुमंदरआवासा कूडा नक्खत्तचंदसूरा य । देवे नागे जक्खे भूए अ सयंभुरमणे अ ॥ ८४ ॥**

व्याख्या—यानि कानिचिदाभरणनामानि हारार्धहारकनकावलीरत्नावलीप्रभृतीनि, यानि च वस्त्रनामानि कांशेयादीनि.
यानि च गन्धनामानि कोष्टपुटादीनि, यानि चोत्पलनामानि जलरुहचन्द्रोद्योतप्रमुखाणि, यानि च तिलकप्रभृतीनि वृक्षना-
मानि, यानि च पद्मनामानि शतपत्रसहस्रपत्रप्रभृतीनि, यानि च नवानां निधानानां, चतुर्दशानां चक्रवर्त्तिरत्नानां, क्षुल्लहिम-
वदादीनां वर्षधरपर्वतानां, पद्मादीनां ह्रदानां, गङ्गासिन्धुप्रभृतीनां नदीनां, कच्छादीनां विजयानां, माल्यवदादीनां वक्षस्कार-
पर्वतानां, सौधर्मादीनां कल्पानां शक्रादीनामिन्द्राणां, देवकुरूत्तरकुरुमन्दराणां, आवासानां शक्रादिसम्बन्धिनां मेरुप्रत्या-
सन्नादीनां, कूटानां क्षुल्लहिमवदादिसम्बन्धिनां, नक्षत्राणां कृत्तिकादीनां, चन्द्रसूर्याणां च, उपलक्षणमेतत्तेनान्येषामपि
यानि शुभानि नामानि, तन्नामत्रिप्रत्यवतारा द्वीपसमुद्रा विज्ञेयाः । तद्यथा—हारो द्वीपो हारः समुद्रो हारवरो द्वीपो
हारवरः समुद्रो हारवरावभासो द्वीपो हारवरावभासः समुद्रः । एवं त्रिप्रत्यवतारनामानस्तावद्वक्तव्या यावद्देवद्वीपादर्वाक्
सूर्यवरावभासः समुद्रः । उक्तं च जीवाभिगमचूर्णौ—"अरुणाईदीवसमुद्दा तिपडोयारा यावत्सूर्यवरावभासः समुद्र इति"।

ततो देवो नाम द्वीपः तदनन्तरं देवः समुद्रः, ततो नागो द्वीपस्ततो नागः समुद्रः, ततो यक्षो द्वीपो यक्षः समुद्रः, ततो भूतो द्वीपो भूतः समुद्रः, ततः स्वयम्भूरमणो द्वीपः स्वयम्भूरमणः समुद्र इति। एते च देवादयः पञ्च द्वीपा देवादयः पञ्च समुद्रा एकरूपाः, न पुनरेषां त्रिप्रत्यवतारः। उक्तं च जीवाभिगमे—"देवे नागे जक्खे भूए अ सयंभुरमणे अ। इक्किक्के चेव भाणियव्वे तिपडोआरया नत्थि ॥ १ ॥" इति। 'आभरणवत्थगंधे' इत्यादौ प्रथमा षष्ठ्यर्थे वेदितव्या प्राकृतत्वात्, प्राकृते हि व्यत्ययोऽपि विभक्तीनां भवति। इह जम्बूद्वीप इति नाम्नाऽसङ्ख्येया द्वीपा अवगन्तव्याः, लवण इति नाम्नाऽसङ्ख्येयाः समुद्राः समूह्याः। एवं तावद्वाच्यं यावत्सूर्यवरावभास इति नाम्नाऽसङ्ख्येयाः समुद्राः। ये तु पञ्च देवादयो द्वीपाः पञ्च देवादयः समुद्रास्ते एकप्रकाराः, नैतेषां नामभिरन्ये द्वीपसमुद्राः। उक्तं च जीवाभिगमे—"केवइआ णं भंते! जंबुद्दीवा दीवा पन्नत्ता? गोयमा! असंखिज्जा जंबुद्दीवा दीवा पन्नत्ता, एवं जाव सूरवरावभासा समुद्दा असंखिज्जा। केवइआ णं भंते देवदीवा? गोयमा एगे देवद्दीवे पन्नत्ते, दस वि एगागारा इति ॥ ९३–९४ ॥

तदेवमुक्ता प्रसङ्गतो द्वीपसमुद्रवक्तव्यता, सम्प्रति चन्द्रमसो नक्षत्रादिज्योतिष्कदेवाधिपतय इति तत्परिवारसङ्ख्यामाह—

अट्ठासीइं च गहा अट्ठावीसं च हुंति नक्खत्ता। एगससीपरिवारो एत्तो तारागणं वुच्छं ॥ ९५ ॥

व्याख्या—एकस्य शशिनः परिवारो ग्रहा मङ्गलादयोऽष्टाशीतिसङ्ख्या, नक्षत्राण्यभिजिदादीनि अष्टाविंशतिसङ्ख्यानि। अत ऊर्ध्वं तारागणं परिवारभूतं वक्ष्ये ॥ ९५ ॥

प्रतिज्ञातमेव निर्वाहयति—

**छावठिसहस्साइं नव चेव सयाइं पंचसयराइं। एगससीपरिवारो तारागणकोडिकोडीणं ॥ ए६ ॥**

व्याख्या—एकस्य शशिनस्तारागणरूपः परिवारस्तारागणकोटीकोटीनां षट्षष्टिसहस्राणि नव शतानि पञ्चसप्तत्यधिकानि। आह—यद्येकस्य शशिन एतावान् तारागणपरिवारस्ततो मनुष्यक्षेत्रे सर्वसङ्ख्यया द्वात्रिंशदधिकं चन्द्रशतं तस्य सामस्त्येन तारागणः परिभाव्यमानोऽतिभूयान् भवति, ज्योतिश्चक्रं च मनुष्यक्षेत्रे मेरुमेकादशभिर्योजनशतैरेकाविंशत्यधिकैरबाधया परिहृत्य चारं चरति, ततः कथमेतावत्सङ्ख्यानां तारकाणां मनुष्यलोकेऽवस्थानमिति? उच्यते—इह द्वे मते एके आहुः—कोटीकोटीति कोटीनामेव संज्ञा (ख्या) तथा पूर्वाचार्यप्रसिद्धेः, तेन षट्षष्टिसहस्राणि नव शतानि पञ्चसप्तत्यधिकानि तारागणकोटीनां प्रतिपत्तव्यानि न तु कोटीकोटीनामित्यदोषः। अपरे पुनराहुः—तारागणविमानानां स्वरूपेण कोटय एव, परं तारागणविमानप्रमाणं प्रमाणाङ्गुलेन "नगपुढविविमाणाइं मिणसु पमाणंगुलेण" इति वचनप्रामाण्यात्, ततः कोटय एव तारागणविमानानां, यदोत्सेधाङ्गुलेन सर्वतः परिमीयन्ते तदा कोटीकोटयो जायन्ते इति तदपेक्षया कोटीकोटीनामित्युक्तं। न चैतत्स्वमनीषिकाविजृम्भितं, यत उक्तमिदमाचार्येणैव स्वोपज्ञायां विशेषणवत्यां—"कोडाकोडी सन्नंतरं तु मन्नंति केइ थोवतया। अन्ने उस्सेहंगुलमाणं काऊण ताराणं ॥ १ ॥" इति ॥ ए६ ॥

सम्प्रति चन्द्रादिविमानानां संस्थानस्वरूपमियत्तां च प्रतिपादयति—

**अद्धकविठ्ठगसंठाणसंठिया फालिआमया रम्मा। जोइसिआण विमाणा तिरिअं लोए असंखिज्जा॥ए७॥**

व्याख्या—सर्वेषामपि ज्योतिष्काणां चन्द्रादीनां विमानानि अर्धकपित्थकसंस्थानसंस्थितानि अर्धाकृतकपित्थफल-संस्थानसंस्थितानि, एतेन संस्थानमुक्तं। आह—यदि सर्वाण्यपि ज्योतिष्कविमानानि अर्धाकृतकपित्थफलसंस्थानसंस्थितानि, ततश्चन्द्रसूर्यविमानान्यतिस्थूलत्वादुदयकालेऽस्तनयकाले वा यदि वा तिर्यक् परिभ्रमन्ति कस्मादर्धकपित्थफलाकाराणि नोपलभ्यन्ते, कामं शिरस उपरि वर्तमानानि वर्तुलान्युपलभ्येरन्, अर्धकपित्थस्य शिरस उपरि दूरमवस्थापितस्य परभागादर्शनतो वर्तुलतया दृश्यमानत्वात्? उच्यते—इहार्धकपित्थफलाकाराणि न सामस्त्येन विमानानि प्रतिपत्तव्यानि, किं तु विमानानां पीठानि, तेषां च पीठानामुपरि चन्द्रादीनां प्रासादाः, ते च प्रासादास्तथा कथञ्चनापि व्यवस्थिता यथा पीठैः सह भूयान् वर्तुल आकारो भवति, स च दूरभावादेकान्ततः समवृत्ततया जनानां प्रतिभासते, ततो न कश्चिद्दोषः। आह च सूत्रकृदेव विशेषणवत्यामिदमाक्षेपपुरस्सरं—"अद्धकविट्ठागारा उदयत्थमणम्मि कह न दीसंति। ससिसूराण विमाणा तिरियक्खित्तट्ठियाइं च ॥ १ ॥" आह—"उत्ताणद्धकविट्ठागारं पीढं तदुवरिं च पासाओ। वट्टालेखेण तओ समवट्टं दूरभावाओ ॥ २ ॥" इति। तथा सर्वाणि ज्योतिष्कविमानानि स्फाटिकानि स्फटिकमणिमयानि, रम्याणि रमणीयानि चक्षुर्मनःप्रमोदकारित्वात्। तानि च वर्तन्ते सर्वाण्यपि तिर्यग्लोके उपरितने दशोत्तरयोजनशतबाहल्ये क्षेत्रे, एतेन स्वरूपमुक्तं। एतानि च सर्वसङ्ख्यया चिन्त्यमानान्यसङ्ख्येयानि। एतेनेयत्ता प्रतिपादिता ॥ ९७ ॥

सम्प्रति चन्द्रादिविमानानां प्रमाणप्रतिपादनार्थमाह—

एगट्ठिभाग काऊण जोअणं चंदसाइ पंचण्हं। आयामं विक्खंभं उच्चत्तं चेव वुच्छामि ॥ ९८ ॥

व्याख्या—प्रमाणाङ्गुलनिष्पन्नं योजनमेकमेकषष्टिभागान् बुद्ध्या कृत्वा चन्द्रादीनां चन्द्रसूर्यग्रहनक्षत्रतारकाणां पञ्चानामपि आयामं विष्कम्भमुच्चत्वं च वक्ष्यामि ॥ ९८ ॥

प्रतिज्ञातमेव निर्वाहयति—

**छप्पन्ना अडयाला अद्ध गाउ य तह डगवूयं । आयामं विक्खंभं आयामद्धं च उच्चत्तं ॥ ९९ ॥**

व्याख्या—आयामो विष्कम्भश्च चन्द्रविमानस्य षट्पञ्चाशदेकषष्टिभागा योजनस्य, सूर्यविमानस्याष्टचत्वारिंशदेकषष्टिभागा', ग्रहविमानानां योजनस्यार्धं द्वौ क्रोशावित्यर्थः, नक्षत्रविमानस्य गव्यूतं, ताराविमानस्यार्धगव्यूतं । "आयामद्धं च उच्चत्तं" इति । सर्वेषामपि ज्योतिष्कविमानानामुच्चत्वं स्वस्य स्वस्यायामस्यार्धमवसेयं । तद्यथा—चन्द्रमसो विमानस्योच्चत्वमष्टाविंशतिरेकषष्टिभागा योजनस्य, सूर्यविमानस्य चतुर्विंशतिरेकषष्टिभागाः । आह च—"चंदविमाणुच्चत्तं अडवीसमिगसट्ठिभागाउ । चउवीसं पुण भागा सूरविमाणस्स उच्चत्तं ॥ १ ॥ तथा ग्रहविमानस्योच्चत्वमेकं गव्यूतं, नक्षत्रविमानस्यार्धगव्यूतं, ताराविमानस्य क्रोशचतुर्भागः पञ्चधनुःशतानीत्यर्थः । इह यत्ताराविमानस्यायामविष्कम्भपरिमाणमुत्कमर्धगव्यूतमुच्चत्वपरिमाणं क्रोशचतुर्भागस्तदुत्कृष्टस्थितिकस्य तारादेवस्य सम्बन्धिनो विमानस्यावसेयं, यत्पुनर्जघन्यस्थितिकस्य तारादेवस्य सम्बन्धि विमानं तस्यायामविष्कम्भपरिमाणं पञ्चधनुःशतानि, उच्चत्वपरिमाणं अर्धतृतीयानि धनुःशतानि । तथा चोक्तं तत्त्वार्थभाष्ये—"अष्टचत्वारिंशद्योजनैकषष्टिभागाः सूर्यमण्डलविष्कम्भः, चन्द्रमसः षट्पञ्चा-

शत्, ग्रहाणामर्धयोजनं, गव्यूतं नक्षत्राणां, सर्वोत्कृष्टायास्ताराया अर्धक्रोशः, जघन्यायाः पञ्चधनुःशतानि । विष्कम्भार्धबाहल्याश्च भवन्ति सर्वे सूर्यादयो नृलोके इति ॥ ९९ ॥

सम्प्रति मनुष्यक्षेत्राद्बहिर्व्यवस्थितानां चन्द्रादिविमानानां विष्कम्भादिमानमाह—

**माणुसनगाउ बाहिं चंदाईआ तदद्धपरिहीणा । गइठिइभेएण इमे अभिंतरबाहिरा नेया ॥ १०० ॥**

व्याख्या—मानुषोत्तरान्नगाद्बहिर्ये व्यवस्थिताश्चन्द्रादयश्चन्द्रादिविमानानि ते तदर्धपरिहीनाः प्रागुक्तमनुष्यक्षेत्रान्तर्वर्तिचन्द्रादिविष्कम्भायामोच्चत्वार्धहीनाः । किमुक्तं भवति? मनुष्यक्षेत्रान्तर्वर्तिनां चन्द्रादीनां यद्विष्कम्भायामोच्चत्वपरिमाणमुक्तं तदर्धविष्कम्भायामोच्चत्वपरिमाणा द्रष्टव्याः । तद्यथा—चन्द्रविमानानामायामो विष्कम्भश्चाष्टाविंशतिरेकषष्टिभागा योजनस्य, सूर्यविमानानां चतुर्विंशतिः, ग्रहविमानानां गव्यूतं, नक्षत्रविमानानामर्धगव्यूतं, उत्कृष्टस्थितेस्तारकायाः क्रोशस्य चतुर्थो भागः, जघन्यस्थितेरर्धतृतीयानि धनुःशतानि । तथा चन्द्रविमानानामुच्चत्वं चतुर्दशैकषष्टिभागा योजनस्य, सूर्यविमानानां द्वादश. ग्रहविमानानामर्धगव्यूतं, नक्षत्रविमानानां गव्यूतस्य चतुर्थांशः, उत्कृष्टस्थितेस्ताराया अर्धतृतीयानि धनुःशतानि, जघन्यस्थितेः पञ्चविंशत्यधिकं धनुःशतं । अथ मनुष्यक्षेत्रान्तर्वर्तिनां तद्बहिर्वर्तिनां च चन्द्रादीनां कः परस्परं प्रतिविशेष इत्यत आह—"गइठिइ" इत्यादि, इमे चन्द्रादयोऽभ्यन्तरा मनुष्यक्षेत्रान्तर्वर्तिनो, बाह्या मनुष्यक्षेत्रबहिर्वर्तिनो वैविक्त्येन ज्ञेया गतिस्थितिभेदेन गतिस्थितिविशेषेण । किमुक्तं भवति ? सदा मेरुप्रादक्षिण्येन गमनशीला मनुष्यक्षेत्रान्तर्वर्तिनः, सदावस्थानस्वभावा बहिर्वर्तिन इति महान् भेदः ॥ १०० ॥

अथ कियद्दूरे चन्द्रादिविमानानि चरन्तीत्यत आह—

**धरणियलाउ समाउ सत्तहिं नउएहिं जोयणसएहिं । हिट्ठिल्लो होइ तलो सूरो पुण अट्ठहिं सएहिं ॥१०१॥**

व्याख्या—समधरणितलात्, क्व समत्वं धरणितलस्येति चेदुच्यते—रुचकप्रदेशावकाशे, तत ऊर्ध्वं सप्तभियोजन-शतैर्नवत्यधिकैरधस्तनः सर्वाधस्तनो ज्योतिष्कविमानानां तलो भवति । सूर्यः पुनः समाद्धरणितलादष्टभिर्योजनशतैः ॥१०१॥

**अट्ठसए असीए चंदो नव चेव होइ उवरितलो । जोअणसयं दसुत्तरबाहल्लं जोइसस्स भवे ॥१०२॥**

व्याख्या—समाद्धरणितलादूर्ध्वं "अट्ठसए" इति अष्टानां शतानां समाहारोऽष्टशतं तस्मिन् । कथंभूते इत्याह—अशीते अशीत्यधिकेऽतिक्रान्ते सति, अत्रान्तरे चन्द्रो भवति । नव शतानि परिपूर्णानि गत्वाऽत्रान्तरं उपरितलः सर्वो-परितनो ज्योतिष्कविमानानां प्रतरो भवति, एवं च सति ज्योतिषो ज्योतिश्चक्रस्योच्चैस्त्वेन बाहल्यं दशोत्तरं योजनशतं भवति । तथाहि—सप्तभिः शतैर्नवत्यधिकैरधस्तनो ज्योतिष्कविमानानां तलो भवति, परिपूर्णैश्च नवभिः शतैरुपरितन इत्यनयोरन्तरं भवति दशोत्तरं योजनशतमिति । इह कैश्चिज्जिनमतावलम्बिभिरित्थं तारासूर्यग्रहचन्द्रनक्षत्राणामवस्था-नमुपवर्ण्यते—"शतानि सप्त गत्वोर्ध्वं योजनानां भुवस्तलात् । नवतिं च स्थितास्ताराः सर्वाधस्तान्नभस्तले ॥ १ ॥ तार-कपटलाद्गत्वा योजनानि दशोपरि । सूर्याणां पटलं तस्मादशीतिः शीतरोचिषाम् ॥ २ ॥ चत्वारि तु ततो गत्वा नक्षत्र-पटलं स्थितम् । गत्वा ततोऽपि चत्वारि बुधानां पटलं भवेत् ॥ ३ ॥ शुक्राणां च गुरूणां च भौमानां मन्दसंज्ञिनाम् । त्रीणि त्रीणि च गत्वोर्ध्वं क्रमेण पटलं स्थितम् ॥ ४ ॥" १०—८०—४—४—३—३—३—३ । मिलितं ११० । गन्धहस्ती पुन-

"सूर्याणामधस्तान्मङ्गलाश्चरन्तीति" । हरिभद्रसूरिः पुनरधस्तनेऽपि ज्योतिष्कतले भरण्यादिकं नक्षत्रमुपरितने च ज्योतिष्कतले स्वात्यादिकमस्तीत्याह, तथा च तत्कृताया एवास्याः सङ्ग्रहणीटीकाया ग्रन्थः—"सत्तहिं नउएहिं जोअणसएहिं उप्पिं हिट्ठिल्लो होइ तलो त्ति, भरणिमाइ जोइसपयरो भवतीत्यर्थः । तथोपरितनः स्वात्युत्तरो ज्योतिषां प्रतर इति" । तत्त्वं पुनः केवलिनो विदन्ति ॥ १०२ ॥

सम्प्रति पुनः कानि नक्षत्राणि कथं भ्रमन्तीत्यत आह—

**सव्वब्भिंतरभीई मूलो पुण सव्ववाहिरो भमइ । सव्वोवरिं च साई भरणी पुण सव्वहिट्ठिमिया ॥ १०३ ॥**

व्याख्या—नक्षत्रमण्डलिकाया मध्येऽभिजिन्नक्षत्रं सर्वाभ्यन्तरं चरति । मूलनक्षत्रं पुनः सर्वबाह्यं सर्वस्या अपि नक्षत्रमण्डलिकाया बहिर्भ्रमति । तथा सर्वेषां नक्षत्राणामुपरि स्वातिनक्षत्रं,भर(णि)ण्यः पुनः सर्वेषामपि नक्षत्राणामधस्ताच्चर(ति)न्ति । उक्तं च जम्बूद्वीपप्रज्ञप्तौ—"जंबुद्दीवेणं भंते ! दीवे अट्ठावीसाए नक्खत्ताणं कयरे नक्खत्ते सव्वब्भंतरं चारं चरइ ? कयरे नक्खत्ते सव्ववाहिरं चारं चरइ ? कयरे नक्खत्ते सव्वहिट्ठिल्लं चारं चरइ? कयरे नक्खत्ते सव्वुवरिल्लं चारं चरइ ? गोयमा ! अभिई नक्खत्ते सव्वब्भंतरं चारं चरइ । मूलो सव्ववाहिरं चारं चरइ । भरणी सव्वहिट्ठिल्लगं चारं चरइ । साई सव्वुवरिल्लं चारं चरइ" इति ॥ १०३ ॥

अथ कियन्तो मनुष्यक्षेत्रे सर्वसङ्ख्यया चन्द्राः सूर्या वा इत्येतन्निरूपयति—

**वत्तीसं चंदसयं वत्तीसं चेव सूरिआण सयं । सयलं मणुस्सलोअं भमंति एए पयासंता ॥ १०४ ॥**

व्याख्या—द्वात्रिंशं द्वात्रिंशदधिकं चन्द्रशतं द्वात्रिंशदधिकं ( च ) सूर्याणां शतं, एते एतावत्सङ्ख्याकाश्चन्द्राः सूर्याश्च

सकलं मनुष्यलोकं प्रकाशयन्तो भ्रमन्ति। अथ कथं द्वात्रिंशं शतं चन्द्राणां द्वात्रिंशं शतं च सूर्याणां मनुष्यलोके ? उच्यते—द्वौ चन्द्रौ द्वौ च सूर्यौ जम्बूद्वीपे, चत्वारो लवणसमुद्रे, द्वादश धातकीखण्डे, द्विचत्वारिंशत्कालोदसमुद्रे, द्विसप्ततिः पुष्करवरार्धे इति ॥ १०४ ॥

सम्प्रति चलं ज्योतिश्चक्रं यावत्या मेरोरबाधया चरति यावत्या च स्थिरं ज्योतिश्चक्रमलोकाकाशस्याबाधयाऽवतिष्ठते तदेतन्निरूपयति—

इक्कारसिक्कवीसा सयमिक्कारहिया य इक्कारा। मेरुअलोगाबाहिं जोइसचक्कं चरइ ठाइ ॥ १०५ ॥

व्याख्या—इह यथासङ्ख्येन पदानां योजना, सा चैवं—एकादश योजनशतान्येकविंशत्यधिकानि मेरोरबाधामपान्तरालरूपां कृत्वा मनुष्यलोकवर्ति चरं ज्योतिश्चक्रं चरति। तथैकादश योजनशतान्येकादशाधिकान्यलोकाकाशस्याबाधामपान्तरालरूपां कृत्वा एतावद्भिर्योजनशतैरलोकाकाशादर्वाक् स्थित्वेत्यर्थः, स्थिरं ज्योतिश्चक्रं तिष्ठति ॥ १०५ ॥

सम्प्रति जम्बूद्वीपव्यतिरिक्तेषु शेषेषु द्वीपसमुद्रेषु ग्रहनक्षत्रताराप्रमाणपरिज्ञानोपायमाह—

रिक्खग्गहतारग्गं दीवसमुद्दे य इच्छसे नाउं। तस्स ससीहि य गुणियं रिक्खग्गहतारग्गं तु ॥ १०६ ॥

व्याख्या—अत्राग्रशब्दः परिमाणवाची, यत्र द्वीपे समुद्रे वा नक्षत्रपरिमाणं ग्रहपरिमाणं तारापरिमाणं वा ज्ञातुमिच्छसि तस्य द्वीपस्य समुद्रस्य वा संबन्धिभिः शशिभिरेकस्य शशिनः परिवारभूतं नक्षत्रपरिमाणं ग्रहपरिमाणं तारापरिमाणं (वा) गुणितं सत् यावद्भवति तावत्प्रमाणं तत्र द्वीपे समुद्रे वा नक्षत्रपरिमाणं ग्रहपरिमाणं तारापरिमाणं (वा)

जानीहीति । तत्र लवणसमुद्रे किल नक्षत्रादिपरिमाणं ज्ञातुमिष्टं, लवणसमुद्रे च शशिनश्चत्वारः, तत एकस्य शशिनः परिवारभूतानि यानि अष्टाविंशतिर्नक्षत्राणि तानि चतुर्भिर्गुण्यन्ते, जातं द्वादशोत्तरं शतं ११२, एतावन्ति लवणसमुद्रे नक्षत्राणि । तथाऽष्टाशीतिर्ग्रहा एकस्य शशिनः परिवाराः, ते चतुर्भिर्गुण्यन्ते, जातानि त्रीणि शतानि द्विपञ्चाशदधिकानि ३५२, एतावन्तो लवणसमुद्रे ग्रहाः । तथैकस्य शशिनः परिवारभूतानि तारागणकोटीकोटीनां षट्षष्टिसहस्राणि नव शतानि पञ्चसप्तत्यधिकानि. तानि च चतुर्भिर्गुण्यन्ते, जाते कोटीकोटीनां द्वे लक्षे सप्तषष्टिः सहस्राणि नव शतानि, एतावत्यो लवणसमुद्रे तारागणकोटीकोटयः । उक्तं च—"चत्तारि चेव चंदा चत्तारि य सूरया लवणतोए । बारं नक्खत्तसयं गहाण तिन्नेव बावन्ना ॥ १ ॥ दो चेव सयसहस्सा सत्तट्ठी खलु भवे सहस्सा य । नव य सया लवणजले तारागणकोडीकोडीणं ॥ २ ॥" एवं सर्वेष्वपि द्वीपसमुद्रेषु परिभावनीयम् ॥ १०६ ॥

सम्प्रति ये आभियोगिका देवा ज्योतिष्कविमानानि वहन्ति तत्सङ्ख्याप्रतिपादनार्थमाह—

**सोलस चेव सहस्सा अट्ठ य चउरो य दोन्नि य सहस्सा । जोइसिआण विमाणा वहंति देवा उ एवइआ**

व्याख्या—इह चन्द्रादिविमानानि तथाजगत्स्वाभाव्यात्स्वयमेव निरालम्बानि वहन्त्यवतिष्ठन्ते । केवलं ये आभियोगिका देवास्ते तथाविधनामकर्मोदयवशात्समानजातीयानां हीनजातीयानां वाऽन्येषां निजस्फीतिविशेषदर्शनार्थमात्मानं बहुमन्यमानाः प्रमोदभृतः सततवहनशीलेषु विमानेष्वधः स्थित्वा स्थित्वा केचित् सिंहरूपाणि केचिद्गजरूपाणि केचिद्वृषभरूपाणि केचित्तुरगरूपाणि कृत्वा तानि विमानानि वहन्ति । न चैतदनुपपन्नं । तथाहि—यथेह कोऽपि तथा-

विधाभियोग्यनामकर्मोपभोगभागी दासोऽन्येषां समानजातीयानां हीनजातीयानां वा पूर्वपरिचितानामिदमहं नायकस्यास्य सुप्रसिद्धस्य सम्मत इति निजस्फीतिविशेषदर्शनार्थं सर्वमपि स्वोचितं कर्म प्रमुदितः करोति, तथाऽऽभियोगिका अपि देवास्तथाविधाभियोग्यनामकर्मोपभोगभाजः समानजातीयानां हीनजातीयानां वा देवानामन्येषामेवं वय ममृध्या यत्सकललोकप्रसिद्धानां चन्द्रादीनां विमानानि वहाम इत्येवं निजस्फीतिविशेषप्रदर्शनार्थमात्मानं बहुमन्यमाना उक्तप्रकारेण विमानानि वहन्तीति । आह च तत्त्वार्थभाष्यकृत्—"अमूनि च ज्योतिष्कविमानानि लोकस्थित्या प्रसक्तावस्थितगतीन्यपि ऋद्धिविशेषदर्शनार्थमाभियोग्यनामकर्मोदयाच्च नित्यं गतिरतयो देवा वहन्तीति"। तत्र षोडश देवाना सहस्राणि चन्द्रविमानं सूर्यविमानं च वहन्ति । अष्टौ देवसहस्राणि ग्रहविमानं, चत्वारि देवसहस्राणि नक्षत्रविमानं, द्वे देवसहस्रे एकैकं ताराविमानमिति ॥ १०७ ॥

सम्प्रत्येतदेव विस्पष्टयन्नाह

**ससिरविणो य विमाणा वहंति देवाण सोलस सहस्सा। गहरिक्खतारगाणं अट्ठ चउक्कं दुगं चेव ॥ १०८ ॥**

व्याख्या—सुगमा ॥ १०८ ॥

सम्प्रति किंरूपधारिणो देवाः कुत्र स्थिता वहन्तीत्येतन्निरूपयति—

**पुरओ वहंति सीहा दाहिणओ कुंजरा महाकाया । पच्छिमेण वसहा तुरगा पुण उत्तरे पासे ॥ १०९ ॥**

व्याख्या—पुरतोऽग्रतोऽधः स्थिताः सिंहरूपधारिणो देवाश्चन्द्रादिसत्कं विमानं वहन्ति । दक्षिणतो विमानस्य दक्षिणे

भागेऽधः स्थिताः कुञ्जरा महाकाया महाकायकुञ्जररूपधारिणः। पश्चिमेन पश्चिमे भागे विमानस्याधः स्थिता वृषभाः। तुरगाः पुनरुत्तरे पार्श्वे विमानस्याधः स्थिता वहन्ति। तत्र चन्द्रविमानं सूर्यविमानं च सिंहादिरूपधारिणो देवा वहन्ति प्रत्येकं चतुःसहस्रसङ्ख्याः। तद्यथा—चतुःसहस्रसङ्ख्याः सिंहरूपधारिणः, चतुःसहस्रसङ्ख्या गजरूपधारिणः, चतुःसहस्रसङ्ख्या वृषभरूपधारिणः, चतुःसहस्रसङ्ख्यास्तुरगरूपधारिणः, एवं सर्वसङ्ख्यया षोडशसहस्रसङ्ख्याश्चन्द्रविमानं सूर्यविमानं च प्रत्येकं देवा वहन्ति। ग्रहविमानं सिंहादिरूपधारिणः प्रत्येकं द्विद्विसहस्रसङ्ख्याः, नक्षत्रविमानमेकैकसहस्रसङ्ख्याः, ताराविमानं पञ्चपञ्चशतसङ्ख्याः। उक्तं च सूर्यप्रज्ञप्तौ—"ता चंदविमाणेणं कइ देवसाहस्सीओ परिवहन्ति? सोलसदेवसाहस्सीओ परिवहन्ति, तं जहा—पुरत्थिमेणं सिंहरूवधारीणं देवाणं चत्तारि साहस्सीओ परिवहंति। दाहिणेणं गयरूवधारीणं देवाणं चत्तारि साहस्सीओ परिवहंति। पच्चत्थिमेणं वसहरूवधारीणं देवाणं चत्तारि साहस्सीओ परिवहंति। उत्तरेणं तुरगरूवधारीणं देवाणं चत्तारि साहस्सीओ परिवहंति। एवं सूरविमाणं पि। ता गहविमाणेणं कइ देवसाहस्सीओ परिवहंति? ता अट्ठ देवसाहस्सीओ परिवहंति। तं जहा—पुरत्थिमेणं सिंहरूवधारीणं देवाणं दो साहस्सीओ परिवहंति। दाहिणेणं गयरूवधारीणं देवाणं दो साहस्सीओ परिवहंति। पच्चत्थिमेणं वसहरूवधारीणं देवाणं दो साहस्सीओ परिवहंति। उत्तरेणं तुरगरूवधारीणं देवाणं दो साहस्सीओ परिवहंति। ता नक्खत्तविमाणेणं कइ देवसाहस्सीओ परिवहंति? चत्तारि देवसाहस्सीओ परिवहंति। तं जहा—पुरत्थिमेणं सिंहरूवधारीणं देवाणं इक्का साहस्सीओ परिवहंति। एवं जाव उत्तरेणं तुरगरूवधारीणं देवाणं एगा साहस्सीओ परिवहंति। ता तारविमाणेणं कइ देवसाहस्सीओ परिवहंति? ता दो देवसाह-

स्सीउ परिवहंति । तं जहा—पुरच्छिमेणं सिंहरूवधारीणं देवाणं पंचसयाइं परिवहंति । एवं जाव उत्तरेणं तुरगरूवधारीणं देवाणं पंचसयाइं परिवहंति" इति । न च ते तथा चन्द्रादिविमानं परिवहन्तो भारं मन्यन्ते मत्तकामिनीव विशिष्टाभरणभारमिति न च तेषां काचित् पीडा ॥ १०९ ॥

अधुना मेरुप्रादक्षिण्येन गच्छतां चन्द्रादीनां गतितारतम्यविशेषमाह—

**चंदेहि रवी सिग्घा रविणो उ जवे गहा उ सिग्घयरा । तत्तो नक्खत्ताइं नक्खत्तेहिं तु ताराउ ॥ ११० ॥**

व्याख्या—चन्द्रेभ्यः शीघ्राः शीघ्रगतयो रवयः, रविभ्योऽपि ग्रहाः शीघ्रतराः, तेभ्योऽपि नक्षत्राणि शीघ्रतराणि, तेभ्योऽपि ताराः शीघ्रतराः । चशब्दोऽनुक्तसमुच्चयार्थः, तेन बुधाच्छुक्रः शीघ्रः, शुक्रान्मङ्गलः, मङ्गलाद्बृहस्पतिः, बृहस्पतेः शनैश्चर इत्यपि प्रतिपत्तव्यम् ॥ ११० ॥

सम्प्रत्युक्तगाथाया एव तात्पर्यार्थमाह—

**सव्वप्पगई चंदा तारा पुण हुंति सव्वसिग्घयरा । एसो गईविसेसो तिरियं लोए विमाणाणं ॥ १११ ॥**

व्याख्या—सुगमा ॥ १११ ॥

अधुना चन्द्रादीनामृद्धितारतम्यमाह—

**अप्पड्डिआ उ तारा नक्खत्ता खलु तउ महड्डीआ । नक्खत्तेहिं तु गहा गहेहिं सूरा तउ चंदा ॥ ११२ ॥**

व्याख्या—अल्पर्द्धिकास्ताराः, ताराभ्यो नक्षत्राणि महर्द्धिकानि, तेभ्योऽपि ग्रहा महर्द्धिकाः, ग्रहेभ्योऽपि महर्द्धिकाः

सूर्याः, सूर्येभ्योऽपि महर्द्धिकाश्चन्द्राः । सर्वेऽपि चैते वरपद्मगर्भगौरा विशिष्टवस्त्राभरणभूषणा मुकुटमण्डितमौलयः, केवलं चन्द्राणां मुकुटाग्रभागे प्रभामण्डलस्थानीयं चन्द्रमण्डलाकारं चिह्नं, सूर्याणां सूर्यमण्डलाकारं, ग्रहाणां ग्रहमण्डलाकारं, नक्षत्राणां नक्षत्रमण्डलाकारं, ताराणां तारकमण्डलाकारं । उक्तं च तत्त्वार्थभाष्ये—"मुकुटेषु शिरोमुकुटोपगूहिभिः प्रभामण्डलकल्पैरुज्ज्वलैः सूर्यचन्द्रग्रहनक्षत्रतारामण्डलैर्यथास्वचिह्नैर्विराजमाना द्युतिमन्तो ज्योतिष्का भवन्तीति" । अत्र शिरोमुकुटोपगूहिभिरिति मुकुटाग्रभागवर्तिभिः ॥ ११२ ॥

सम्प्रति ताराविमानानामपान्तरालप्रमाणमाह—

पंचेव धणुसयाइं जहन्नयं अंतरं तु ताराणं । दो चेव गाउआइं निव्वाघाएण उक्कोसं ॥ ११३ ॥

व्याख्या—जम्बूद्वीपे ताराणां ताराविमानानां निर्व्याघाते पर्वतादिव्याघाताभावे जघन्यमन्तरं पञ्चैव धनुःशतान्युत्कृष्टं द्वे गव्यूते । व्याघाते तु जघन्यतो द्वे योजनशते षट्षष्ट्यधिके, उत्कर्षेण द्वादश योजनसहस्राणि द्वे च योजनशते द्विचत्वारिंशदधिके। तथा चोक्तं सूर्यप्रज्ञप्तौ—"ता जंबुद्दीवे णं भंते ! दीवे तारारूवस्स य तारारूवस्स य अबाहाए केवइए अंतरे पन्नत्ते ? गोयमा ! दुविहे अंतरे पन्नत्ते, तं जहा—वाघाइमे य निव्वाघाइमे य । तत्थ णं जे से वाघाइमे से णं जहन्नेणं दुण्णि छावट्ठे जोयणसए, उक्कोसेणं बारसजोयणसहस्साइं दुण्णि य बायाले जोयणसए । एस णं एवइए तारारूवस्स य तारारूवस्स य अबाहाए अंतरे पन्नत्ते" इत्यादि ॥ ११३ ॥

अधुना मनुष्यक्षेत्राद्बहिश्चन्द्राणां सूर्याणां च परस्परमन्तरप्रमाणमाह—

**सूरस्स य सूरस्स य ससिणो ससिणो य अंतरं दिट्ठं। बाहिं तु माणुसनगस्स जोअणाणं सयसहस्सं ॥११४॥**

व्याख्या—मानुषनगस्य मानुषोत्तराभिधस्य पर्वतस्य बहिः सूर्यस्य सूर्यस्य परस्परं चन्द्रस्य चन्द्रस्य च परस्परमन्तर दृष्टं तीर्थकरगणधरैरेकं परिपूर्णं योजनानां शतसहस्रं। तथाहि—चन्द्रान्तरिताः सूर्याः सूर्यान्तरिताश्चन्द्रा बहिर्व्यव-स्थिताश्चन्द्रसूर्याणां च परस्परमन्तरमन्यूनानि पञ्चाशद्योजनसहस्राणि ५००००। तथा चोक्तं सूर्यप्रज्ञप्तौ—"चंदाओ सूरस्स य सूरा चंदस्स अंतरं होइ। पन्नास सहस्साइं जोअणाणं अणूणाइं ॥ १ ॥" एतच्च प्रागेवोक्तं ततश्चन्द्रस्य चन्द्रस्य सूर्यस्य सूर्यस्य च परस्परमन्तरं योजनानां लक्षं भवतीति ॥ ११४ ॥

सम्प्रति बहिश्चन्द्रसूर्याणां पङ्क्त्यावस्थानमाह—

**सूरंतरिआ चंदा चंदंतरिआ य दिणयरा दित्ता। चित्तंतरलेसागा सुहलेसा मंदलेसा य ॥ ११५ ॥**

व्याख्या—नृलोकाद्बहिः पङ्क्त्या स्थिताः सूर्यान्तरिताश्चन्द्राश्चन्द्रान्तरिता दिनकरा दीप्ता दीप्यन्ते, दीप्ता भास्वरा इत्यर्थः। कथंभूतास्ते चन्द्रसूर्या इत्याह—चित्रान्तरलेश्याकाश्चित्रमन्तरं लेश्या च प्रकाशरूपा येषां ते तथा। तत्र चित्र-मन्तरं चन्द्राणां सूर्यान्तरितत्वात् सूर्याणां च चन्द्रान्तरितत्वात्। चित्रा लेश्या चन्द्रमसां शीतरश्मित्वात् सूर्याणामुष्ण-रश्मित्वात्। लेश्याविशेषप्रदर्शनार्थमेवाह—"सुहलेसा मंदलेसा य" सुखलेश्याश्चन्द्रमसो न शीतकालादौ मनुष्यलोक इवैकान्ततः शीतरश्मय इत्यर्थः। मन्दलेश्याः सूर्या न मनुष्यलोके निदाघसमय इवात्यन्तमुष्णरश्मय इति भावः। आह

च तत्त्वार्थटीकाकारो हरिभद्रसूरिः—"नात्यन्तशीताश्चन्द्रमसो नाप्यत्यन्तोष्णाः सूर्याः, किं तु साधारणा द्वयोरपीति" ॥११५॥

सम्प्रति यत्संपर्कवशाच्छुक्लकृष्णपक्षयोर्यथायोगं चन्द्रमण्डलस्य वृद्धिहानी प्रतिभासेते तद्वक्तव्यतामाह—

**किण्हं राहुविमाणं निच्चं चंदेण होइ अविरहिअं । चउरंगुलमप्पत्तं हिट्ठा चंदस्स तं चरइ ॥ ११६ ॥**

व्याख्या—इह द्विविधो राहुस्तद्यथा—पर्वराहुर्नित्यराहुश्च । तत्र पर्वराहुः स उच्यते यः कदाचिदकस्मात्समागत्य निजविमानेन चन्द्रविमानं सूर्यविमानं वाऽन्तरितं करोति । अन्तरिते च कृते लोके ग्रहणमिति प्रसिद्धिः । स च पर्वराहुर्जघन्यत उत्कर्षतो वा यावता कालेन चन्द्रसूर्याणामुपरागं करोति तदेतत्क्षेत्रसमासटीकायामभिहितमिति नेह भूयोऽभिधीयते । यस्तु नित्यराहुस्तस्य विमानं कृष्णं, तच्च तथाजगत्स्वाभाव्याच्चन्द्रेण सह नित्यं सर्वकालमविरहितं तथा चतुरङ्गुलेन चतुर्भिरङ्गुलैरप्राप्तं सच्चन्द्रस्य चन्द्रविमानस्याधस्ताच्चरति, तच्च कृष्णपक्षे प्रतिपद आरभ्य प्रतिदिवसमेकैकां कलामात्मीयेन पञ्चदशेन भागेनोपरितनभागादारभ्यावृणोति । शुक्लपक्षे तु प्रतिपद आरभ्य तेनैव क्रमेण प्रतिदिवसमेकैकां कलां प्रकटीकरोति, तेन जगति चन्द्रमण्डलस्य वृद्धिहानी प्रतिभासेते यावता पुनः स्वरूपेणावस्थितमेव चन्द्रमण्डलमिति॥११६॥

उक्ता ज्योतिष्कविमानवक्तव्यता, सम्प्रति वैमानिकदेवविमानवक्तव्यतामाह—

**बत्तीसट्ठावीसा बारस अट्ठ य चउरो सयसहस्सा । आरेण बंभलोगा विमाणसंखा भवे एसा ॥ ११७ ॥**

व्याख्या—ब्रह्मलोकात् ब्रह्मलोकचरमपर्यन्तादारतोऽर्वाक् । किमुक्तं भवति ? ब्रह्मलोकमभिव्याप्य एषा विमानसङ्ख्या भवति, तद्यथा—सौधर्मे कल्पे द्वात्रिंशद्विमानानां शतसहस्राणि ३२००००० । ईशानदेवलोकेऽष्टाविंशतिः २८०००००।

सनत्कुमारकल्पे द्वादश १२००००० । माहेन्द्रकल्पेऽष्टौ ८००००० । ब्रह्मलोके कल्पे चत्वारि ४००००० ॥ ११७ ॥

तथा—

पन्नास चत्त छच्चेव सहस्सा लंतसुक्कसहस्सारे। सय चउरो आणयपाणएसु तिन्नारणच्चुयए ॥ ११८ ॥

व्याख्या—अत्रापि पूर्वार्धे कल्पक्रमेण सङ्ख्यापदयोजना । लान्तके कल्पे पञ्चाशद्विमानानां सहस्राणि ५०००० । महाशुक्रे कल्पे चत्वारिंशत्सहस्राणि ४०००० । सहस्रारे कल्पे षट् सहस्राणि ६००० । तथा आनतप्राणतयोर्द्वयोः कल्पयोः समुदितयोश्चत्वारि विमानशतानि ४०० । आरणाच्युतयोर्द्वयोः कल्पयोः समुदितयोस्त्रीणि विमानशतानि ३०० ॥ ११८ ॥

तथा—

इक्कारसुत्तरं हिट्ठिमेसु सत्तुत्तरं च मज्झिमए। सयमेगं उवरिमए पंचेव अणुत्तरविमाणा ॥ ११९ ॥

व्याख्या—अधस्तनेषु त्रिषु ग्रैवेयकेषु समुदितेषु विमानानामेकादशोत्तरशतं १११ । मध्यमे ग्रैवेयकत्रिके समुदिते सप्तोत्तरं विमानानां शतं १०७ । उपरितने ग्रैवेयकत्रिके समुदिते शतमेकं विमानानां १०० । सर्वपर्यन्तवर्तिनि तु चरमे प्रस्तटे पञ्चैवानुत्तरविमानानि, न विद्यते उत्तरं प्रधानं परं वा येभ्यस्तान्यनुत्तराणि, तानि च तानि विमानानि च अनुत्तरविमानानि ॥ ११९ ॥

सम्प्रति सर्वविमानसङ्ख्यामाह—

चुलसीइ सयसहस्सा सत्ताणउई भवे सहस्साइं। तेवीसं च विमाणा विमाणसंखा भवे एसा ॥१२०॥

व्याख्या—अनन्तरेण गाथात्रयेणाभिहितानां विमानानामेषा सर्वसङ्ख्या—चतुरशीतिः शतसहस्राणि सप्तनवतिः सहस्राणि त्रयोविंशतिश्च विमानानि ८४९७०२३ । एतानि च विमानानि सर्वाण्यपि गन्धमधिकृत्यातीव सुरभिगन्धानि, स्पर्शमधिकृत्य नवनीतादप्यतिमृदुशुभस्पर्शानि । तथा स्वप्रभाभिः प्रकाशितसकलदिक्चक्रवालानि, अत एव सततोद्योतकलितानि रमणीयानि च तन्निवासिनां देवानां सदा भवन्ति, न तु कदाचिदप्युद्वेगकारीणीति । उक्तं च—"अच्चंतसुरभिगंधा फासे नवणीयमउयसुहफासा । निच्चुज्जोया रम्मा सयंपभा ते विरायंति ॥ १ ॥" सर्वसङ्ख्यया चोर्ध्वलोके द्वाषष्टिः प्रस्तटाः, तद्यथा—सौधर्मेशानवलये त्रयोदश, सनत्कुमारमाहेन्द्रवलये द्वादश, ब्रह्मलोके षट्, लान्तके पञ्च, महाशुक्रे कल्पे चत्वारः, सहस्रारे चत्वारः, आनतप्राणतवलये चत्वारः, आरणाच्युतवलये चत्वारः, नव नवग्रैवेयकेषु, एकोऽनुत्तरविमानेषु, एतच्च प्रागेवोक्तं—"दुसु तेरस दुसु बारस छ प्पण चउ चउ दुगे दुगे य चउ । गेविज्जाइसु दसगं बावट्ठी उड्ढलोगम्मि ॥ १ ॥" एकैकस्मिंश्च प्रस्तटे द्विविधानि विमानानि, तद्यथा—आवलिकाप्रविष्टानि आवलिकाबाह्यानि च । तत्रावलिकाप्रविष्टानि यानि पूर्वदक्षिणापरोत्तररूपासु चतसृषु दिक्षु श्रेण्या व्यवस्थितानि, यानि पुनरावलिकाप्रविष्टानामपान्तराले प्राङ्गणप्रदेशे कुसुमप्रकर इव यतस्ततो विप्रकीर्णानि तान्यावलिकाबाह्यानि, तानि च पुष्पावकीर्णानीत्युच्यन्ते पुष्पाणीव यतस्ततोऽवकीर्णानि प्रकीर्णानि पुष्पावकीर्णानीति व्युत्पत्तेः । तानि च मध्यवर्तिनो विमानेन्द्रकस्य दक्षिणतोऽपरत उत्तरतश्च विद्यन्ते, न तु पूर्वस्यां दिशि । उक्तं च—"पुप्फावकिन्नगा पुण दाहिणओ पच्छिमेण उत्तरओ । पुव्वेण विमाणिंदस्स नत्थि पुप्फावकिन्नाओ ॥ १ ॥" यानि चावलिकाप्रविष्टानि विमानानि तेषां मध्यभागे प्रतिप्र-

स्तटमेकैको विमानेन्द्रकः । प्रस्तटाश्च द्वाषष्टिरिति तेऽपि विमानेन्द्रका द्वाषष्टिः । तन्नामानि चामूनि—सौधर्मेशानवलये
प्रथमे प्रस्तटे सर्वमध्यवर्ती विमानेन्द्रक उडुः १, द्वितीये चन्द्रः २, तृतीये रजतः ३, चतुर्थे वल्गुः ४, पञ्चमे वीर्यः ५,
षष्ठे वरुणः ६, सप्तमे आनन्दः ७, अष्टमे ब्रह्म ८, नवमे काञ्चनः ९, दशमे रुचिरः १०, एकादशे वञ्चः ११. द्वादशे-
ऽरुणः १२, त्रयोदशे दिशः १३ । सनत्कुमारमाहेन्द्रवलये प्रथमे प्रस्तटे वैडूर्यः १, द्वितीये रुचकः २, तृतीये रुचितः ३,
चतुर्थेऽङ्कः ४, पञ्चमे स्फटिकः ५, षष्ठे तपनीयः ६, सप्तमे मेघः ७, अष्टमेऽर्घः ८, नवमे हारिद्रः ९, दशमे नलिनः १०,
एकादशे लोहिताक्षः ११, द्वादशे वज्रः १२ । ब्रह्मलोके प्रथमे प्रस्तटेऽञ्जनः १, द्वितीये वरमालः २, तृतीयेऽरिष्टः ३.
चतुर्थे देवः ४, पञ्चमे सोमः ५, षष्ठे मङ्गलः ६ । लान्तके प्रथमे प्रस्तटे बलभद्रः १, द्वितीये चक्रं २, तृतीये गदा ३,
चतुर्थे स्वस्तिकः ४, पञ्चमे नन्दावर्तः ५ । महाशुक्रे कल्पे प्रथमे प्रस्तटे आभङ्करः १, द्वितीये गृद्धिः २, तृतीये केतुः ३,
चतुर्थे गरुडः ४ । सहस्रारे कल्पे प्रथमे प्रस्तटे ब्रह्मा १, द्वितीये ब्रह्महितः २, तृतीये ब्रह्मोत्तरः ३, चतुर्थे लान्तकः ४ ।
आनतप्राणतवलये प्रथमे प्रस्तटे महाशुक्रः १, द्वितीये सहस्रारः २, तृतीये आनतः ३, चतुर्थे प्राणतः ४ । आरणाच्युतव-
लये प्रथमे प्रस्तटे पुष्पकः १, द्वितीयेऽलङ्कारः २, तृतीये आरणः ३, चतुर्थेऽच्युतः ४ । अधस्तनाधस्तनग्रैवेयके सुदर्शनः
१, अधस्तनमध्यमे सुप्रबुद्धः २, अधस्तनोपरितने मनोरमः ३, मध्यमाधस्तने सर्वतोभद्रः ४, मध्यममध्यमे विशालः ५.
मध्यमोपरितने सुमनाः ६, उपरितनाधस्तने सौमनसः ७, उपरितनमध्यमे प्रीतिकरः ८, उपरितनोपरितने आदित्यः ९ ।
चरमे तु प्रस्तटे सर्वार्थसिद्धः १ । एतदर्थसङ्ग्राहिकाश्चेमा गाथाः—“उडुचंदरययवग्गू वीरियवरुणे तहेव आणंदे । बंभे

कंचणरुइल्ले वंचे अरुणे दिसे चेव ॥ १ ॥ वेरुलियरुयगरुइरे अंके फलिहे तहेव तवणिज्जे । मेहे अग्घ हलिद्दे नलिणे तह लोहियक्खे य ॥ २ ॥ वइरे अंजण वरमाल अरिट्ठे तह य देवसोमे य । मंगल बलभद्देया चक्क गया सुत्थि नंदियावत्ते ॥ ३ ॥ आभंकरे य गिद्धी केऊ गरुले य होइ बोधव्वे । बंभे बंभहिए पुण बंभुत्तर लंतए चेव ॥ ४ ॥ महसुक्क सहस्सारे आणय तह पाणए य बोधव्वे । पुप्फमलंकारे आरणे तह य अच्चुए चेव ॥ ५ ॥ सुदंसण सुप्पबुद्धे मणोरमे चेव होइ बोधव्वे । तत्तो य सव्वतोभद्दे विसाले सुमणे इय ॥ ६ ॥ सोमणसे पीइकरे आइच्चे चेव होइ बोधव्वे । सव्वट्ठसिद्धनामे सुरिंदिया एव बासट्ठी ॥ ७ ॥" अत्र तृतीया गाथा पूर्वार्द्धसमोत्तरार्धा गीतिसंज्ञा वेदितव्या । एते च विमानेन्द्रकाः सर्वेऽपि वृत्तास्ततोऽनन्तरं पूर्वादिषु चतसृषु दिक्षु प्रत्येकमेकैकं विमानं त्र्यस्रं, तदनन्तरं चतुरस्रं, ततः पुनरपि वृत्तं, तदनन्तरं त्र्यस्रं, ततश्चतुरस्रं, ततो भूयोऽपि वृत्तं, तदनन्तरं त्र्यस्रं, एवं तावद्द्रष्टव्यं यावदावलिकायाः पर्यन्तः । तथा चोक्तम्—"सव्वेसु पत्थडेसुं मज्झे वट्टं अणंतरं तंसं । तयणंतर चउरंसं पुणो वि वट्टं तओ तंसं ॥ १ ॥" तत्र प्रथमे प्रस्तटे उडुनामकस्य विमानेन्द्रकस्य पूर्वादिषु दिक्षु प्रत्येकं द्वाषष्टिर्द्वाषष्टिरावलिकाप्रविष्टानि विमानानि । अथ किमावलिकाप्रविष्टं विमानं कस्य द्वीपस्य समुद्रस्य वोपरि व्यवस्थितं ? उच्यते—उडुविमानेन्द्रकादनन्तरं पूर्वादिषु चतसृषु दिक्षु प्रत्येकमेकैकमावलिकाप्रविष्टं देवाभिधे द्वीपे, ततो नागसमुद्रे द्वे द्वे विमाने, ततो यक्षद्वीपे चत्वारि चत्वारि, ततो भूतसमुद्रेऽष्टावष्टौ, ततः स्वयंभूरमणे द्वीपे षोडश षोडश, ततः स्वयंभूरमणसमुद्रे एकत्रिंशदेकत्रिंशदिति । प्रथमप्रस्तटाच्चोर्ध्वं द्वितीयादिषु प्रस्तटेषु यान्यावलिकाप्रविष्टानि विमानानि तानि प्रथमप्रस्तटगतावलिकाप्रविष्टैर्विमानैः सह समश्रेण्या व्यव-

स्थितानि । तद्यथा—वृत्तस्योपरि वृत्तं, त्र्यस्रस्योपरि त्र्यस्रं, चतुरस्रस्योपरि चतुरस्रं । उक्तं च—"वट्टं वट्टस्सुवरिं तंसं तंसस्स उप्परिं होई । चउरंसे चउरंसं उड्ढं तु विमाणसेढीउ ॥ १ ॥" केवलमुपरितनाः प्रस्तटाः प्रत्येकं पूर्वादिषु दिक्षु एकैकविमानहीना द्रष्टव्याः, तद्यथा—द्वितीये प्रस्तटे एकैकस्यां दिशि आवलिकाप्रविष्टानि विमानान्येकषष्टिरेकषष्टिः, तृतीये षष्टिः षष्टिः, एवं तावद्वाच्यं यावच्चरमे प्रस्तटे एकैकं विमानमिति ॥ १२० ॥

सम्प्रति प्रतिकल्पमावलिकाप्रविष्टविमानसङ्ख्यानयनाय करणमाह—

कप्पस्सणुपुव्वीए आइमपयरंतिमं च गणइत्ता । मुहभूमिसमासद्धं पयरेहिं गुणंतु सव्वधणं ॥ १२१ ॥

व्याख्या—कल्पस्य सौधर्मेशानादिरूपस्य आनुपूर्व्या पूर्वानुपूर्व्या यदादिमं प्रतरमादिमप्रतरगतां सर्वविमानसङ्ख्यां अन्तिमं प्रतरमन्तिमप्रतरगतां सर्वविमानसङ्ख्यां गणयित्वा करणवशादन्यथा वा परिज्ञाय यदादिमप्रतरगतं सर्वविमान-परिमाणं तन्मुखमिति प्रतिपत्तव्यं । यत्त्वन्तिमप्रतरगतं सर्वविमानपरिमाणं सा भूमिः । ततस्तयोर्मुखभूम्योः समास एकत्र मीलनं कार्यं । ततस्तस्यार्धं तत्प्रतरैः स्वकल्पगतैः प्रस्तटैर्गुणितं सद्यावद्भवति तावत्प्रमाणं सर्वधनं, तावन्ति विवक्षिते कल्पे सर्वसङ्ख्यया आवलिकाप्रविष्टानि विमानानीत्यर्थः । तत्र प्रथमतो मुखभूमयः प्रदर्श्यन्ते—सौधर्मेशानवलये प्रथमे प्रस्तटे एकैकस्यां दिशि द्वाषष्टिर्द्वाषष्टिरावलिकाप्रविष्टानि विमानानि, मध्ये च विमानेन्द्रक इति सर्वसङ्ख्यया द्वे शते एकोनपञ्चाशदधिके, एतावत्सौधर्मेशानवलये मुखं, शेषेषु तु कल्पेषु अधस्तनान् परप्रतरान् चतुर्भिर्गुणयित्वा यदवाप्यते तस्मिन् शतद्वयादेकोनपञ्चाशदधिकादपनीते यच्छेषमवतिष्ठते तत्तत्र मुखं प्रतिपत्तव्यं । तत्र सनत्कुमारमाहेन्द्रवलयापेक्षयाऽध-

स्तनाः परप्रतराः सौधर्मेशानवलयगताः, ते च त्रयोदश, ततस्त्रयोदश चतुर्भिर्गुण्यन्ते, जाता द्विपञ्चाशत्, सा एकोनपञ्चाशदधिकाच्छतद्वयादपनीयते, स्थितं सप्तनवत्यधिकं शतं १९७, एतावत्सनत्कुमारमाहेन्द्रवलये मुखं । ब्रह्मलोकापेक्षयाऽधस्तनाः परप्रतराः पञ्चविंशतिः, सा चतुर्भिर्गुण्यते, जातं शतं, तदेकोनपञ्चाशदधिकाच्छतद्वयादपनीयते, स्थितं शेषमेकोनपञ्चाशदधिकमेकं शतं १४९, एतावद्ब्रह्मलोके मुखं । तथा लान्तकापेक्षयाऽधस्तनाः परप्रतरा एकत्रिंशत्, सा चतुर्भिर्गुण्यते, जातं चतुर्विंशत्यधिकं शतं, तदेकोनपञ्चाशदधिकाच्छतद्वयाद्विशोध्यते, स्थितं शेषं पञ्चविंशत्यधिकं शतं १२५, एतावत्प्रमाणं लान्तके मुखं । महाशुक्रकल्पापेक्षयाऽधस्तनाः परप्रतराः षट्त्रिंशत्, सा चतुर्भिर्गुण्यते, जातं चतुश्चत्वारिंशं शतं १४४, तदेकोनपञ्चाशदधिकाच्छतद्वयादपनीयते, स्थितं शेषं पञ्चोत्तरं शतं १०५, एतावन्महाशुक्रे मुखं । तथा सहस्रारकल्पापेक्षयाऽधस्तनाः परप्रस्तटाश्चत्वारिंशत्, सा चतुर्भिर्गुण्यते, जातं षष्ट्यधिकं शतं १६०, तच्छतद्वयादेकोनपञ्चाशदधिकादपसार्यते, स्थिता शेषा एकोननवतिः, एतावत्प्रमाणं सहस्रारकल्पे मुखं । तथाऽऽनतप्राणतवलयापेक्षया परप्रतराश्चतुश्चत्वारिंशत्, सा चतुर्भिर्गुण्यते, जातं षट्सप्तत्यधिकं शतं १७६, तदेकोनपञ्चाशदधिकाच्छतद्वयादपनीयते, स्थिता शेषा त्रिसप्ततिः ७३, एतावदानतप्राणतवलये मुखं । आरणाच्युतवलयाऽपेक्षयाऽधस्तनाः परप्रतरा अष्टाचत्वारिंशत्, सा चतुर्भिर्गुण्यते, जातं द्विनवत्यधिकं शतं १९२, तदेकोनपञ्चाशदधिकाच्छतद्वयाद्विशोध्यते, स्थिता शेषा सप्तपञ्चाशत् ५७, एतावदारणाच्युतवलये मुखं । तथाऽधस्तनग्रैवेयकत्रिकापेक्षयाऽधस्तनाः परप्रतरा द्विपञ्चाशत् ५२, सा चतुर्भिर्गुण्यते, जाते द्वे शते अष्टोत्तरे २०८, ते शतद्वयादेकोनपञ्चाशदधिकाद्विशोध्येते, स्थिता शेषा एकचत्वारिंशत् ४१,

एतन्मुखमधस्तनग्रैवेयकत्रिके । तथा मध्यमग्रैवेयकत्रिकापेक्षयाऽधस्तनाः परप्रतराः पञ्चपञ्चाशत् ५५, सा चतुर्भिर्गुण्यते, जाते द्वे शते विंशत्यधिके २२०, ते एकोनपञ्चाशदधिकाच्छतद्वयादपनीयेते, स्थिता शेषा एकोनत्रिंशत् २९, एतावन्मुखं मध्यमग्रैवेयकत्रिके । तथोपरितनग्रैवेयकत्रिकापेक्षयाऽधस्तनाः परप्रतरा अष्टापञ्चाशत् ५८, सा चतुर्भिर्गुण्यते, जाते द्वे शते द्वात्रिंशदधिके २३२, ते शतद्वयादेकोनपञ्चाशदधिकाच्छोध्येते, स्थिताः शेषाः सप्तदश १७, एतावत्प्रमाणमुपरितनग्रैवेयकत्रिके मुखं । तथा पञ्चानुत्तरविमानापेक्षयाऽधस्तनाः परप्रतरा एकषष्टिः ६१, सा चतुर्भिर्गुण्यते, जाते द्वे शते चतुश्चत्वारिंशदधिके २४४, ते शतद्वयादेकोनपञ्चाशदधिकादपनीयेते, स्थिताः शेषाः पञ्च, एतावत्प्रमाणं चरमं प्रस्तटं । एतदर्थसङ्ग्राहिकाश्चेमा गाथाः—"दुन्नि सय अउणपन्ना सत्ताणउयं सयं च बोधव्वं । अउणापन्नं च सयं सयमेगं पन्नवीसं च ॥ १ ॥ पंचुत्तरसयमेगं अउणाणउई अ होइ बोधव्वा । तेवत्तरि सगवन्ना इयालीसा य हिट्ठिमए ॥ २ ॥ अउणत्तीसा य नवे सत्तरस य पंच चेव आईउ । कप्पेसु पत्थडाणं ( बोद्धव्वा उड्ढलोगम्मि ॥३॥ )" इति । भूमिपरिमाणप्रतिपत्त्यर्था चेयं करणगाथा—"सग पयरा रूवूणा चउगुणिया सोहिया य मूलिल्ला । जं तत्थ सुद्धसेसं इच्छियकप्पस्स सा भूमी ॥१॥" अस्या, व्याख्या—ईप्सितकल्पस्य विवक्षितस्य देवलोकस्य ये स्वकीयाः प्रतराः प्रस्तटास्ते रूपोनाः क्रियन्ते, ततश्चतुर्भिर्गुण्यन्ते गुणिताश्च सन्तः स्वमुखात्स्वकीयप्रथमप्रस्तटगतविमानाग्राच्छोध्यन्ते, शोधितेषु च तेषु यदवशेषं सा ईप्सितकल्पस्य भूमिः । तत्र सौधर्मेशानवलये त्रयोदश प्रस्तटाः, ते रूपोनाः क्रियन्ते, जाता द्वादश, ते चतुर्भिर्गुण्यन्ते, जाता अष्टाचत्वारिंशत्, सा स्वमुखात् प्रथमप्रस्तटगतविमानाग्रादेकोनपञ्चाशदधिकशतद्वयप्रमाणादपसार्यते, ततः स्थिते शेषे द्वे शते एकोत्तरे

२०१, एषा सौधर्मेशानवलये भूमिः । तथा सनत्कुमारमाहेन्द्रवलये द्वादश प्रस्तटाः, ते रूपोनाः क्रियन्ते, जाता एकादश, ते चतुर्भिर्गुण्यन्ते, जाता चतुश्चत्वारिंशत्, सा स्वमुखात्सप्तनवत्यधिकशतप्रमाणरूपाच्छोध्यन्ते, स्थितं शेषं त्रिपञ्चाशदधिकं शतं १५३, एषा सनत्कुमारमाहेन्द्रवलये भूमिः । ब्रह्मलोके षट् प्रस्तटाः, ते रूपोनाः क्रियन्ते, जाताः शेषाः पञ्च, ते चतुर्भिर्गुण्यन्ते, जाता विंशतिः, सा स्वमुखादेकोनपञ्चाशदधिकशतप्रमाणादपनीयते, स्थितं शेषमेकोनत्रिंशं शतं १२९, एतावती ब्रह्मलोके भूमिः । लान्तके प्रस्तटाः पञ्च, ते रूपोनाः क्रियन्ते, जाताश्चत्वारः, ते चतुर्भिर्गुण्यन्ते, जाताः षोडश, ते स्वमुखात् पञ्चविंशत्यधिकशतप्रमाणादपसार्यन्ते, स्थितं शेषं नवोत्तरं शतं १०९, एषा लान्तके भूमिः । तथा महाशुक्रे प्रस्तटाश्चत्वारः, ते रूपोनाः क्रियन्ते, जातास्त्रयः, ते चतुर्भिर्गुण्यन्ते, जाता द्वादश, ते स्वमुखात् पञ्चोत्तरशतप्रमाणादपसार्यन्ते, स्थिता शेषा त्रिनवतिः ९३, एषा महाशुक्रे भूमिः । सहस्रारेऽपि कल्पे प्रस्तटाश्चत्वारः, ते रूपोनाः क्रियन्ते, जातास्त्रयः, ते चतुर्भिर्गुणिता जाता द्वादश, ते स्वमुखादेकोननवतिरूपादपसार्यन्ते, स्थिता शेषा सप्तसप्ततिः ७७, एषा सहस्रारकल्पे भूमिः । एवमानतप्राणतादिष्वपि प्रस्तटपरिमाणं परिज्ञाव्य भूमयो वक्तव्याः । तत्रानतप्राणतवलये भूमिरेकषष्टिः ६१ । आरणाच्युतवलये पञ्चचत्वारिंशत् ४५ । अधस्तनग्रैवेयकत्रिके त्रयस्त्रिंशत् ३३ । मध्यमग्रैवेयकत्रिके एकविंशतिः २१ । उपरितनग्रैवेयकत्रिके नव ९ । तथा चोक्तम्—"एगाहिय दुन्निसया तेवन्नसयं सयं च उणतीसं । तत्तो नवाहियसयं तिन्नवइ सत्तत्तरी चेव ॥ १ ॥ एगट्ठी पणयाला तित्तीसा इक्कवीस नव चेव । कप्पेसु पत्थडाणं भूमीउ हुंति नायव्वा ॥ २ ॥ मुखभूमिस्थापनेयम्—

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| ऊर्ध्वलोकसंख्या | २४९ | ५ | २५४ | १२७ | ६२ | ७८७४ | ८४८९१४९ | ८४९७०२३ |
| अनुत्तरविमान | ५ | ० | ० | ० | १ | ५ | ० | ५ |
| उपरितनग्रैवेयक ३ | १७ | ९ | २६ | १३ | ३ | ३९ | ६१ | १०० |
| मध्यमग्रैवेयक ३ | २९ | २१ | ५० | २५ | ३ | ७५ | ३२ | १०७ |
| अधस्तनग्रैवेयक ३ | ४१ | ३३ | ७४ | ३७ | ३ | १११ | ० | १११ |
| आरणाच्युत | ५७ | ४५ | १०२ | ५१ | ४ | २०४ | ९६ | ३०० |
| आनतप्राणत | ७३ | ६१ | १३४ | ६७ | ४ | २६८ | १३२ | ४०० |
| सहस्रार | ८९ | ७७ | १६६ | ८३ | ४ | ३३२ | ५६६८ | ६००० |
| शुक्र | १०५ | ९३ | १९८ | ९९ | ४ | ३९६ | ३९६०४ | ४०००० |
| लांतक | १२५ | १०९ | २३४ | ११७ | ५ | ५८५ | ४९४१५ | ५०००० |
| ब्रह्म | १४९ | १२९ | २७८ | १३९ | ६ | ८३४ | ३९९१६६ | ४००००० |
| सनत्कुमारमाहेंद्र | १९७ | १५३ | ३५० | १७५ | १२ | २१०० | १९९७९०० | २०००००० |
| सौधर्मेशान | २४९ | २०१ | ४५० | २२५ | १३ | २९२५ | ५९९७०७५ | ६०००००० |
| ऊर्ध्वदेवलोक | मुख | भूमि | समास | अर्ध | प्रतर | पंक्तिबंध | पुष्पावकीर्ण | सर्वविमानसंख्या. |

तदेवमुक्ता मुखभूमयः, सम्प्रत्येतदाश्रितं करणं भाव्यते—तत्र सौधर्मेशानवलये एकोनपञ्चाशदधिके द्वे शते मुखं, भूमिरेकोत्तरे द्वे शते, अनयोः समासे जातानि पञ्चाशदधिकानि चत्वारि शतानि ४५०, तेषामर्धं द्वे शते पञ्चविंशत्यधिके २२५. ते स्वप्रतरैस्त्रयोदशभिर्गुण्येते, जातानि पञ्चविंशत्यधिकान्येकोनत्रिंशच्छतानि २९२५, एतावन्ति सौधर्मेशानवलये सर्वसङ्ख्यया आवलिकाप्रविष्टानि विमानानि । उक्तं च—"दो चेव सहस्साइं नव चेव सयाइं पणवीसाइं । आवलियासु विमाणा सोहम्मीसाणकप्पेसु ॥ १ ॥" एतद्व्यतिरिक्तानि तु शेषाणि विमानानि पुष्पावकीर्णानि, तत्र सौधर्मे कल्पे सर्वसङ्ख्यया विमानानि द्वात्रिंशल्लक्षाः, ईशाने कल्पेऽष्टाविंशतिः, उभयमीलने षष्टिर्लक्षाः, एतेभ्यः श्रेणिप्रतिबद्धानि विमानानि पञ्चविंशत्यधिकैकोनत्रिंशच्छतसङ्ख्याकानि शोध्यन्ते, शेषाणि तिष्ठन्ति एकोनषष्टिर्लक्षाः सप्तनवतिसहस्राणि पञ्चसप्तत्यधिकानि ५९९७०७५, एतावन्ति सौधर्मेशानवलये पुष्पावकीर्णानि । उक्तं च—"अउणट्ठि सयसहस्सा सत्ताणउई तहा सहस्साइं । पन्नत्तरी विमाणा हवंति पुप्फावकिण्णाणं ॥ १ ॥" तथा सनत्कुमारमाहेन्द्रवलये मुखं मप्तनवतिः शतं, भूमिस्त्रिपञ्चाशदधिकं शतं, अनयोः समासे जातानि त्रीणि शतानि पञ्चाशदधिकानि ३५०. तेषामर्धं पञ्चसप्तत्यधिकं शतं, तत्स्वप्रतरैर्द्वादशभिर्गुण्यते, जातान्येकविंशतिशतानि २१००, एतावन्ति सर्वसङ्ख्यया सनत्कुमारमाहेन्द्रवलये आवलिकाप्रविष्टानि विमानानि, शेषाणि पुष्पावकीर्णानि, तत्र सनत्कुमारे माहेन्द्रे च सर्वसङ्ख्यया विमानानि विंशतिर्लक्षाः २००००००, तेभ्य एकविंशतिशतानि श्रेणिप्रतिबद्धानि विमानान्यपनीयन्ते, शेषाण्यवतिष्ठन्ते एकोनविंशतिर्लक्षाः सप्तनवतिः सहस्राणि नव शतानि १९९७९००, एतावन्ति सनत्कुमारमाहेन्द्रवलये पुष्पावकीर्णानि । उक्तं

च—“दो चेव सहस्साइं सयमेगं चेव होइ नायव्वं। आवलियासु विमाणा सणंकुमारे अ माहिंदे ॥ १ ॥ दस नव य सयसहस्सा सत्ताणउई तहा सहस्साइं। नव य सया संपुण्णा हवंति पुप्फावकिन्नाणं ॥ २ ॥” तथा ब्रह्मलोके मुखमेकोनपञ्चाशदधिकं शतं, भूमिरेकोनत्रिंशदधिकं शतं, अनयोः समासे जाते द्वे शते अष्टसप्तत्यधिके २७८, तयोरर्धं शतमेकोनचत्वारिंशदधिकं १३९, तत्स्वप्रतरैः षड्भिर्गुण्यते, जातान्यष्टौ शतानि चतुस्त्रिंशदधिकानि ८३४, एतावन्ति ब्रह्मलोके आवलिकाप्रविष्टानि विमानानि, एतद्व्यतिरिक्तानि तु शेषाणि पुष्पावकीर्णानि, तानि च तिस्रो लक्षा नवनवतिसहस्राणि शतं चैकं षट्षष्ट्यधिकं ३९९१६६। उक्तं च—“अट्ठसया चोत्तीसा बंभे कप्पम्मि हुंति आवलिया। लक्खतिगं नवनउयं छावट्ठिसयं पइन्नाणं ॥ १ ॥” तथा लान्तके मुखं पञ्चविंशत्यधिकं शतं १२५, भूमिर्नवोत्तरं शतं १०९, अनयोः समासे जाते द्वे शते चतुस्त्रिंशदधिके २३४, तयोरर्धं शतमेकं सप्तदशोत्तरं ११७, तत्स्वप्रतरैः पञ्चभिर्गुण्यते, जातानि पञ्च शतानि पञ्चाशीत्यधिकानि ५८५, एतावन्ति लान्तके कल्पे आवलिकाप्रविष्टानि विमानानि, शेषाणि तु पुष्पावकीर्णानि, तानि चैकोनपञ्चाशत्सहस्राणि चत्वारि शतानि पञ्चदशोत्तराणि ४९४१५। उक्तं च—“अउणापन्न सहस्सा पइन्नगाण चउरो य पन्नरस। पंच य पंचासीया आवलिया लंतए कप्पे ॥ १ ॥” तथा महाशुक्रे कल्पे मुखं पञ्चोत्तरं शतं १०५, भूमिस्त्रिनवतिः ९३, अनयोः समासे जातमष्टनवत्यधिकं शतं १९८, तस्यार्धं नवनवतिः, सा स्वप्रतरैश्चतुर्भिर्गुण्यते, जातानि त्रीणि शतानि षण्णवत्यधिकानि ३९६, एतावन्ति महाशुक्रे कल्पे आवलिकाप्रविष्टानि विमानानि, शेषाणि तु पुष्पावकीर्णानि, तान्येकोनचत्वारिंशत्सहस्राणि षट् शतानि चतुरुत्तराणि ३९६०४। उक्तं च—“तिन्नि सया

उप्पन्नया आवलिया खलु भवे महासुक्के । उणयालीस सहस्सा छच्च सय पइण्णगा चउरो ॥ १ ॥" तथा सहस्रारे कल्पे मुखमेकोननवतिः ८९, भूमिः सप्तसप्ततिः ७७, अनयोः समासे जातं शतमेकं षट्षष्ठ्यधिकं १६६, तस्यार्धं त्र्यशीतिः ८३, सा स्वप्रतरैश्चतुर्भिर्गुण्यते, जातानि त्रीणि शतानि द्वात्रिंशदधिकानि ३३२, एतावन्ति सहस्रारे कल्पे आवलिकाप्रविष्टानि विमानानि, शेषाणि तु पुष्पावकीर्णानि, तानि च पञ्च सहस्राणि षट् शतान्यष्टाषष्ट्यधिकानि ५६६८ । उक्तं च—"तिन्नि सया बत्तीसा आवलिया खलु भवे सहस्सारे । उप्पन्न अडसठी पइन्नगाणं तु बोधव्वा ॥ १ ॥" तथाऽऽनतप्राणतवलये मुखं त्रिसप्ततिः ७३, भूमिरेकषष्टिः ६१, अनयोः समासे जातं चतुस्त्रिंशदधिकं शतं १३४, तस्यार्धं सप्तषष्टिः ६७, सा स्वप्रतरैश्चतुर्भिर्गुण्यते, जाते द्वे शते अष्टषष्ट्यधिके २६८, एतावन्त्यानतप्राणतवलये आवलिकाप्रविष्टानि विमानानि, शेषाणि तु पुष्पावकीर्णानि, तानि च शतमेकं द्वात्रिंशदधिकं १३२ । उक्तं च—"आणयपाणयकप्पे दुन्नि सया अडसट्ठि आवलिया । बत्तीसं सयमेगं च होइ पुप्फावकिन्नाणं ॥ १ ॥" तथाऽऽरणाच्युतवलये मुखं सप्तपञ्चाशत् ५७, भूमिः पञ्चचत्वारिंशत् ४५, अनयोः समासे जातं द्व्युत्तरं शतं १०२, तस्यार्धमेकपञ्चाशत् ५१, सा स्वप्रतरैश्चतुर्भिर्गुण्यते, जाते द्वे शते चतुरुत्तरे २०४, एतावन्त्यारणाच्युतवलये आवलिकाप्रविष्टानि विमानानि, शेषाणि तु षण्णवतिसङ्ख्यानि पुष्पावकीर्णानि ९६ । उक्तं च—"दुन्नि सया चउरहिया आवलिआ आरणच्चुए कप्पे । छन्नउइं च विमाणा हवंति पुप्फावकिण्णाइं ॥ १ ॥" तथाऽधस्तनग्रैवेयकत्रिके मुखमेकचत्वारिंशत् ४१, भूमिस्त्रयस्त्रिंशत् ३३, तयोः समासे जाता चतुःसप्ततिः ७४, तस्या अर्धं सप्तत्रिंशत् ३७, सा स्वप्रतरैस्त्रिभिर्गुण्यते, जातमेकादशोत्तरं शतं १११, एतावन्त्यधस्तन-

ग्रैवेयकत्रिके आवलिकाप्रविष्टानि विमानानि, पुष्पावकीर्णानि तु तत्र न सन्ति। उक्तं च—"हिट्ठिमगेविज्जाणं इक्कारसयं नवे विमाणाणं। आवलिआसु विमाणा नत्थि उ पुप्फावकिन्नत्था ॥ १ ॥" तथा मध्यमग्रैवेयकत्रिके मुखमेकोनत्रिंशत् २९, भूमिरेकविंशतिः २१, तयोः समासे जाता पञ्चाशत् ५०, तस्या अर्धं पञ्चविंशतिः २५, सा स्वप्रतरैस्त्रिभिर्गुण्यते, जाता पञ्चसप्ततिः ७५, एतावन्ति मध्यमग्रैवेयकत्रिके आवलिकाप्रविष्टानि विमानानि, शेषाणि तु पुष्पावकीर्णानि, तानि च द्वात्रिंशत् ३२। उक्तं च—"मज्झिमगेविज्जाणं आवलि पन्नत्तरी विमाणाणं। बत्तीसं च विमाणा हवंति पुप्फावकिन्नाइं ॥ १ ॥" तथोपरितनग्रैवेयकत्रिके मुखं सप्तदश १७, भूमिर्नव ९, तयोः समासे जाता षड्विंशतिः २६, तस्या अर्धं त्रयोदश १३, ते स्वप्रतरैस्त्रिभिर्गुण्यन्ते, जाता एकोनचत्वारिंशत् ३९, एतावन्त्युपरितनग्रैवेयकत्रिके आवलिकाप्रविष्टानि विमानानि, शेषाणि तु पुष्पावकीर्णानि, तानि चैकषष्टिः ६१। उक्तं च—"उवरिमगेविज्जाणं उगुणचालीसं हवंति आवलिआ। एगट्ठी अ विमाणा हवंति पुप्फावकिण्णाइं ॥ १ ॥" चरमे तु प्रस्तटे सर्वार्थसिद्धिनामकस्य विमानेन्द्रकस्य पूर्वादिषु दिक्षु प्रत्येकमेकैकमावलिकाप्रविष्टं विमानं, पुष्पावकीर्णानि तु तत्र न सन्ति। उक्तं च—"विजए य वेजयंते जयंत अपराजिए अ सव्वट्ठे। आवलिआसु विमाणा नत्थि उ पुप्फावकिन्नत्था ॥ १ ॥" यदा तु सकलेऽप्यूर्ध्वलोके आवलिकाप्रविष्टविमानसङ्ख्या ज्ञातुमिष्यते तदा यत्सर्वप्रथमे प्रस्तटे विमानाग्रं द्वे शते एकोनपञ्चाशदधिके २४९ तन्मुखं, यानि च सर्वचरमे प्रस्तटे पञ्च विमानानि सा भूमिः, तयोः समासे जाते द्वे शते चतुःपञ्चाशदधिके २५४, तयोरर्धं सप्तविंशं शतं १२७, तत्सकलोर्ध्वलोकगतैर्द्विषष्टिसङ्ख्यैः प्रतरैर्गुण्यते, जातान्यष्टसप्ततिशतानि चतुःसप्तत्यधिकानि

७०७४, एतावन्ति सकलेऽप्यूर्ध्वलोके आवलिकाप्रविष्टानि विमानानि, शेषाणि तु पुष्पावकीर्णानि, तानि च सर्वसङ्ख्यया चतुरशीतिः शतसहस्राणि एकोननवतिः सहस्राणि शतमेकमेकोनपञ्चाशदधिकं ८४८९१४९। उक्तं च—"सत्तेव सहस्साइं सयाइं चोवत्तराइं अह भवे। आवलिआसु विमाणा सेसा पुप्फावकिन्नत्था ॥ १ ॥ चुलसीइ सयसहस्सा अउणानउई भवे सहस्साइं। एगूणं च दिवड्ढ सयं च पुप्फावकिन्नाणं ॥ २ ॥" ॥ १२१ ॥

सम्प्रति कस्मिन् कल्पे कियन्त्यावलिकाप्रविष्टानि वृत्तानि विमानानि, कियन्ति त्र्यस्राणि, कियन्ति चतुरस्राणीत्येतन्निरूपयति—

जहिं कप्पे जावइआ पयरा आवलिआ तत्तिआ तह। एगदिसाए तासिं तिहि तिहि भागेहि जं लद्धं॥१२२

तं मिलिअं गणतिगे तंसचउरंसवट्टए काउं। तिविभत्ते वि अ सेसं चिंतसु दुगइक्कसुन्नाइं ॥ १२३॥

जावइआ तहिं इक्का तावइआ तंसरासिपक्खिवसु। मीलिय दुगपिंडदलं तंसे चउरंसि बीयदलं ॥१२४॥

एवं एगदिसाए तंसयचउरंसवट्टसंखाओ। वट्टेसु इंदगाणि य खवेसु सव्वेसु चउगुणियं ॥ १२५ ॥

व्याख्या—यस्मिन् कल्पे सौधर्मेशानवलयादौ यावन्तः प्रतरास्तत्र तावत्यश्चतुर्दिग्विनिर्गता आवलिकास्तासां चावलिकानामेकस्यां दिशि त्रिभिस्त्रिभिर्भागो ह्रियते, हृते च भागे यल्लब्धं तदेकत्र मील्यते, मीलयित्वा च त्र्यस्रचतुरस्रवृत्तसंज्ञितेषु त्रिषु स्थानेषु स्थाप्यन्ते, आवलिकानां च प्रत्येकं त्रिभिर्विभक्तानां यच्छेषमवतिष्ठते तच्चिन्तय परिभावय, यथा कि-

यन्तो द्विकाः कियन्त एककाः कियन्ति वा शून्यानि ? तत्र यावन्त एककास्तावन्तस्ते सर्वेऽपि त्र्यस्रराशौ प्रक्षिप्यन्ते, यावन्तश्च द्विकास्ते सर्वेऽप्येकत्र मील्यन्ते, मीलितानां च द्विकानां यः पिण्डः सर्वसङ्ख्या तस्य दलमेकमर्धं त्र्यस्रेषु प्रक्षिप्यते, द्वितीयं च दलमर्धं चतुरस्रेषु, एवमेकस्यां दिशि त्र्यस्रचतुरस्रवृत्तानां यथोक्ता सङ्ख्या भवति । ततः सर्वेऽपि त्रयोऽपि राशयश्चतुर्भिर्गुण्यन्ते, गुणयित्वा च वृत्तेषु मध्ये विमानेन्द्रकाः प्रक्षिप्यन्ते, तेषां वृत्तत्वात्, ततो विवक्षिते कल्पे परिपूर्णा वृत्तत्र्यस्रचतुरस्राणां सङ्ख्या भवति । तत्र सौधर्मेशानवलये त्रयोदश प्रस्तटा इत्यावलिका अपि चतुर्दिग्विनिर्गतास्त्रयोदश, तासां च मध्ये प्रथमायामावलिकायामेकस्यां दिशि विमानानि द्वाषष्टिः, द्वितीयस्यामेकषष्टिः, तृतीयस्यां षष्टिः, चतुर्थ्यामेकोनषष्टिः, पञ्चम्यामष्टापञ्चाशत्, षष्ठ्यां सप्तपञ्चाशत्, सप्तम्यां षट्पञ्चाशत्, अष्टम्यां पञ्चपञ्चाशत्, नवम्यां चतुःपञ्चाशत्, दशम्यां त्रिपञ्चाशत्, एकादश्यां द्विपञ्चाशत्, द्वादश्यामेकपञ्चाशत्, त्रयोदश्यां पञ्चाशत् । एतेषां प्रत्येकं त्रिभिर्भागे हृते लब्धं यथास्थापना—६२–६१–६०–५९–५८–५७–५६–५५–५४–५३–५२–५१–५० । एतेषां प्रत्येकं त्रिभिर्भागे हृते लब्धं यथाक्रमं २०–२०–२०–१९–१९–१९–१८–१८–१८–१७–१७–१७–१६ । एतानि लब्धानि सर्वाण्यपि एकत्र मील्यन्ते जाते द्वे शते अष्टात्रिंशदधिके २३८ । ते त्र्यस्रचतुरस्रवृत्तसंज्ञितेषु त्रिषु स्थानेषु स्थाप्यन्ते २३८–२३८–२३८ । लब्धशेषाणि क्रमेणामूनि—द्विक एककः शून्यं, द्विक एककः शून्यं, द्विक एककः शून्यं द्विकः २–१–०–२–१–०–२–१–०–२–१–०–२ । अत्र चत्वार एककाः पञ्च द्विकाः । तत्रैककास्त्र्यस्रराशौ प्रक्षिप्यन्ते, ये तु पञ्च द्विकास्ते एकत्र पिण्डिता जाता दश, तत्र पञ्च त्र्यस्रराशौ प्रक्षिप्यन्ते, पञ्च चतुरस्रराशौ । ततस्त्र्यस्रराशिर्जातो द्वे शते सप्तचत्वारिंशद-

धिके २४७, चतुरस्रराशिर्द्वे शते त्रिचत्वारिंशदधिके २४३, इदमेकस्यां दिशि वृत्तादीनां परिमाणं। ततः सकलसौधर्मेशानवलयगतवृत्तादिसङ्ख्यानयनार्थं त्रयोऽपि राशयः पृथक् पृथक् चतुर्भिर्गुण्यन्ते, वृत्तराशौ च त्रयोदश विमानेन्द्रकाः प्रक्षिप्यन्ते, ततो जातं सौधर्मेशानवलये त्र्यस्राणां सर्वाग्रमिदं नव शतान्यष्टाशीत्यधिकानि ९८८, चतुरस्राणां नव शतानि द्विसप्तत्यधिकानि ९७२, वृत्तानां नव शतानि पञ्चषष्ठ्यधिकानि ९६५। उक्तं च—"पणठ अडसीया, दोसत्तरिगा य नव नव सयाउ। सोहम्मगईसाणे, वट्टा तंसा य चउरंसा॥ १॥" तथा सनत्कुमारमाहेन्द्रवलये द्वादश प्रस्तटा इति द्वादशावलिकाः, तासां च मध्ये प्रथमायामावलिकायामेकस्यां दिशि विमानान्येकोनपञ्चाशत्, द्वितीयस्यामष्टाचत्वारिंशत्, तृतीयस्यां सप्तचत्वारिंशत्, चतुर्थ्यां षट्चत्वारिंशत्, पञ्चम्यां पञ्चचत्वारिंशत्, षष्ठ्यां चतुश्चत्वारिंशत्, सप्तम्यां त्रिचत्वारिंशत्, अष्टम्यां द्विचत्वारिंशत्, नवम्यामेकचत्वारिंशत्, दशम्यां चत्वारिंशत्, एकादश्यामेकोनचत्वारिंशत्, द्वादश्यामष्टात्रिंशत् ४९–४८–४७–४६–४५–४४–४३–४२–४१–४०–३९–३८। एतेषां त्रिभिर्भागे हृते लब्धं यथाक्रमं १६–१६–१५–१५–१५–१४–१४–१४–१३–१३–१३–१२। एतानि लब्धानि सर्वाण्यप्येकत्र मील्यन्ते, जातं सप्तत्यधिकं शतं १७०। एतत्त्र्यस्रचतुरस्रवृत्तसंज्ञितेषु त्रिषु स्थानेषु स्थाप्यते १७०–१७०–१७०। लब्धशेषाणि च क्रमेणामूनि १–०–२–१–०–२–१–०–२–१–०–२। अत्र चत्वार एककाश्चत्वारो द्विकाः, तत्रैककास्त्र्यस्रराशौ, प्रक्षिप्यन्ते, ये तु चत्वारो द्विकाः त एकत्र पिण्डिता जाता अष्टौ। तत्र चत्वारश्चतुरस्रराशौ प्रक्षिप्यन्ते, चत्वारस्त्र्यस्रराशौ, ततस्त्र्यस्रराशिर्जातोऽष्टसप्तत्यधिकं शतं १७८, चतुरस्रराशिश्चतुःसप्तत्यधिकं शतं १७४, इदमेकस्यां दिशि वृत्तादीनां परिमाणं। ततः सन-

त्कुमारमाहेन्द्रवलयगतवृत्तादिसङ्ख्यानयनार्थं त्रयोऽपि राशयः पृथक् पृथक् चतुर्भिर्गुण्यन्ते, वृत्तराशौ च द्वादश विमानेन्द्रकाः प्रक्षिप्यन्ते, ततो जातं सनत्कुमारमाहेन्द्रवलये त्र्यस्राणां सर्वाग्रमिदं सप्त शतानि द्वादशोत्तराणि ७१२, चतुरस्राणां षट् शतानि षण्णवत्यधिकानि ६९६, वृत्तानां षट् शतानि द्विनवत्यधिकानि ६९२। उक्तं च—"छच्च सया बाणउया, सत्त सया बारसुत्तरा हुंति। छच्च सया छन्नउआ, वट्टाइ सणंकुमारमाहिंदे ॥ १ ॥" तथा ब्रह्मलोके प्रस्तटाः षट्, पङ्क्त्यावलिका अपि चतुर्दिग्विनिर्गताः षट्, तासां च मध्ये प्रथमायामावलिकायामेकस्यां दिशि विमानानि सप्तत्रिंशत्, द्वितीयस्यां षट्त्रिंशत्, तृतीयस्यां पञ्चत्रिंशत्, चतुर्थ्यां चतुस्त्रिंशत्, पञ्चम्यां त्रयस्त्रिंशत्, षष्ठ्यां द्वात्रिंशत्। स्थापना—३७–३६–३५–३४–३३–३२। एतेषां प्रत्येकं त्रिभिर्भागो ह्रियते, लब्धं यथाक्रममिदं—१२–१२–११–११–११–१०। एतानि लब्धानि सर्वाण्यप्येकत्र मील्यन्ते, जाता सप्तषष्टिः ६७, सा त्र्यस्रचतुरस्रवृत्तसंज्ञितेषु त्रिषु स्थानेषु स्थाप्यते ६७–६७–६७। लब्धशेषाणि च क्रमेणामूनि—एककः शून्यं द्विक एककः शून्यं द्विकः १–०–२–१–०–२। अत्र द्वावेककौ, द्वौ च द्विकौ। तत्रैककौ त्र्यस्रराशौ प्रक्षिप्येते। यौ तु द्वौ द्विकौ, तावेकत्र मिलितौ जाताश्चत्वारः। तत्र द्वौ त्र्यस्रराशौ प्रक्षिप्येते। द्वौ चतुरस्रराशौ। ततस्त्र्यस्रराशिर्जात एकसप्ततिः ७१। चतुरस्रराशिरेकोनसप्ततिः ६९। इदमेकस्यां दिशि वृत्तादीनां परिमाणं। ततः सकलब्रह्मलोकगतवृत्तादिसङ्ख्यानयनाय त्रयोऽपि राशयः पृथक् पृथक् चतुर्भिर्गुण्यन्ते। वृत्तराशौ चोपरि षट् विमानेन्द्रकाः प्रक्षिप्यन्ते। ततो जातं ब्रह्मलोके त्र्यस्राणां सर्वाग्रमिदं—द्वे शते चतुरशीत्यधिके २८४। चतुरस्राणां द्वे शते षट्सप्तत्यधिके २७६। वृत्तानां द्वे शते चतुःसप्तत्यधिके २७४। उक्तं च—"दोवत्तरचुल-

सीया, उसत्तरगा दुवे दुवि सया उ । कप्पम्मि बंभलोए, वट्टा तंसा य चउरंसा ॥ १ ॥" तथा लान्तके कल्पे प्रस्तटाः पञ्चेत्यावलिका अपि चतुर्दिग्विनिर्गताः पञ्च । तत्र प्रथमायामावलिकायामेकस्यां दिशि विमानपरिमाणमेकत्रिंशत्, द्वितीयस्यां त्रिंशत्, तृतीयस्यां एकोनत्रिंशत्, चतुर्थ्यामष्टाविंशतिः, पञ्चम्यां सप्तविंशतिः, स्थापना—३१–३०–२९–२८–२७ । आसां प्रत्येकं त्रिभिर्भागे हृते लब्धं यथाक्रममिदं—१०–१०–९–९–९ । एतानि च सर्वाण्यप्येकत्र मील्यन्ते, जाता सप्तचत्वारिंशत् ४७ । सा त्र्यस्रचतुरस्रवृत्तसंज्ञितेषु त्रिषु स्थानेषु स्थाप्यते—४७–४७–४७ । लब्धशेषाणि च क्रमेणामूनि—एककः शून्यं द्विक एककः शून्यं १–०–२–१–० । अत्र द्वावेककौ, एको द्विकः । तत्रैककौ त्र्यस्रराशौ प्रक्षिप्येते । यस्तु द्विकस्तस्यैकस्त्र्यस्रराशौ प्रक्षिप्यते, एकश्चतुरस्रराशौ, ततस्त्र्यस्रराशिर्जातः पञ्चाशत् ५० । चतुरस्रराशिरष्टाचत्वारिंशत् ४८ । इदमेकस्यां दिशि वृत्तादीनां परिमाणं । ततः सकललान्तकगतवृत्तादिसङ्ख्यानयनाय त्रयोऽपि राशयः प्रत्येकं चतुर्भिर्गुण्यन्ते । वृत्तराशौ च पञ्च विमानेन्द्रकाः प्रक्षिप्यन्ते । ततो जातं लान्तकवलये त्र्यस्राणां सर्वाग्रमिदं—द्वे शते २०० । चतुरस्राणां शतं द्विनवत्यधिकं १९२ । वृत्तानां शतं त्रिनवत्याधिकं १९३ । उक्तं च—"तेणउयं चेव सयं, दो चेव सया सयं च बाणउयं । कप्पम्मि लंतगम्मी, वट्टा तंसा य चउरंसा ॥ १ ॥" तथा महाशुक्रे कल्पे चत्वारः प्रस्तटा इति चतस्रश्चतुर्दिग्विनिर्गता आवलिकाः । तत्र प्रथमायामावलिकायामेकस्यां दिशि विमानानि षड्विंशतिः, द्वितीयस्यां पञ्चविंशतिः, तृतीयस्यां चतुर्विंशतिः, चतुर्थ्यां त्रयोविंशतिः २६–२५–२४–२३ । आसां प्रत्येकं त्रिभिर्भागे हृते लब्धं यथाक्रममिदं—८–८–८–७ । एतानि सर्वाण्यप्येकत्र मील्यन्ते, जातैकत्रिंशत् ३१ । सा त्र्यस्रचतुरस्रवृत्तसंज्ञितेषु

त्रिषु स्थानेषु स्थाप्यते ३१–३१–३१ । लब्धशेषाणि च क्रमेणामूनि—द्विक एककः शून्यं द्विकः २–१–०–२ । अत्रैक एकको द्वौ द्विकौ । तत्रैककस्त्र्यस्रराशौ प्रक्षिप्यते । यौ तु द्वौ द्विकौ तावेकत्र मील्येते, जाताश्चत्वारः । तत्र द्वौ त्र्यस्रराशौ प्रक्षिप्येते, द्वौ चतुरस्रराशौ । ततस्त्र्यस्रराशिः संपन्नश्चतुस्त्रिंशत् ३४ । चतुरस्रराशिस्त्रयस्त्रिंशत् ३३ । इदमेकस्यां दिशि वृत्तादीनां परिमाणं । ततः सकलमहाशुक्रकल्पगतवृत्तादिसङ्ख्यानयनाय त्रयोऽपि राशयः पृथक् चतुर्भिर्गुण्यन्ते । वृत्तराशौ च चत्वारो विमानेन्द्रकाः प्रक्षिप्यन्ते । ततो जातं महाशुक्रे कल्पे त्र्यस्राणां सर्वाग्रमिदं—शतं षट्त्रिंशदधिकं १३६ । चतुरस्राणां द्वात्रिंशं शतं १३२ । वृत्तानामष्टाविंशं शतं १२८ । उक्तं च—"अट्ठावीसं च सयं, छत्तीससयं सयं च बत्तीसं । कप्पम्मि महासुक्के, वट्टा तंसा य चउरंसा ॥ १ ॥" तथा सहस्रारेऽपि कल्पे चत्वारः प्रस्तटा इति चतस्रश्चतुर्दिग्विनिर्गता आवलिकाः । तत्र प्रथमावलिकायां द्वाविंशतिः, द्वितीयस्यामेकविंशतिः, तृतीयस्यां विंशतिः, चतुर्थ्यामेकोनविंशतिः २२–२१–२०–१९ । एतासां त्रिभिर्भागे हृते लब्धं यथाक्रममिदं—७–७–६–६ । एतानि सर्वाण्यप्येकत्र मील्यन्ते, जाता षड्विंशतिः २६ । सा वृत्तत्र्यस्रचतुरस्रसंज्ञितेषु त्रिषु स्थानेषु स्थाप्यते २६–२६–२६ । लब्धशेषाणि च क्रमेणामूनि—एककः शून्यं द्विक एककः १–०–२–१ । अत्र द्वावेककौ, एको द्विकः । तत्रैककौ त्र्यस्रराशौ प्रक्षिप्येते । यस्तु द्विकस्तस्यैकस्त्र्यस्रराशौ प्रक्षिप्यते, एकश्चतुरस्रराशौ । ततस्त्र्यस्रराशिर्जात एकोनत्रिंशत् २९ । चतुरस्रराशिः सप्तविंशतिः २७ । इदमेकस्यां दिशि वृत्तादीनां परिमाणं । ततः सकलसहस्रारकल्पगतवृत्तादिसङ्ख्यानयनाय त्रयोऽपि राशयः पृथक् चतुर्भिर्गुण्यन्ते । वृत्तराशौ च चत्वारो विमानेन्द्रकाः प्रक्षिप्यन्ते, जातं सहस्रारे कल्पे त्र्यस्राणां सर्वाग्रमिदं—

षोडशोत्तरं शतं ११६। चतुरस्राणामष्टोत्तरं शतं १०८। वृत्तानामष्टोत्तरं शतं १०८। उक्तं च—"अट्ठुत्तरं च सोलं, अट्ठसयं चेव होअणूणं तु। कप्पम्मि सहस्सारे, वट्टा तंसा य चउरंसा ॥ १ ॥" तथानतप्राणतवलयेऽपि चत्वारः प्रस्तटा इति चतस्रश्चतुर्दिग्विनिर्गता आवलिकाः। तत्र प्रथमायामावलिकायामष्टादश, द्वितीयस्यां सप्तदश, तृतीयस्यां षोडश, चतुर्थ्यां पञ्चदश १८–१७–१६–१५। एतेषां प्रत्येकं त्रिभिर्भागे हृते लब्धं यथाक्रममिदं—६–५–५–५। एतानि च सर्वाण्यप्येकत्र मील्यन्ते, जातैकविंशतिः २१। सा वृत्तत्र्यस्रचतुरस्रसंज्ञितेषु त्रिषु स्थानेषु स्थाप्यते—२१–२१–२१। लब्धशेषाणि च क्रमेणामूनि—शून्यं द्विक एककः शून्यं ०–२–१–०। अत्रैक एकको द्विक एकः। तत्रैककस्त्र्यस्रराशौ प्रक्षिप्यते। यस्तु द्विकस्तस्यैकस्त्र्यस्रराशौ प्रक्षिप्यते। एकश्चतुरस्रराशौ। ततस्त्र्यस्रराशिर्जातस्त्रयोविंशतिः २३। चतुरस्रराशिर्द्वाविंशतिः २२। इदमेकस्यां दिशि वृत्तादीनां परिमाणं। ततः सकलानतप्राणतवलयगतवृत्तादिसङ्ख्यानयनाय त्रयोऽपि राशयः पृथक् चतुर्भिर्गुण्यन्ते। वृत्तराशौ च चत्वारो विमानेन्द्रकाः प्रक्षिप्यन्ते। ततो जातमानतप्राणतवलये त्र्यस्राणां सर्वसङ्ख्यया परिमाणमिदं—द्विनवतिः ९२। चतुरस्राणामष्टाशीतिः ८८। वृत्तानामष्टाशीतिः ८८। उक्तं च—"अट्ठासीई बाणउई, अट्ठासीई य होइ बोधव्वा। आणयपाणयकप्पे, वट्टा तंसा य चउरंसा ॥ १ ॥" तथारणाच्युतवलयेऽपि चत्वारः प्रस्तटा इति चतस्रश्चतुर्दिग्विनिर्गता आवलिकाः। तत्र प्रथमायामावलिकायामेकस्यां दिशि विमानानि चतुर्दश, द्वितीयस्यां त्रयोदश, तृतीयस्यां द्वादश, चतुर्थ्यामेकादश १४–१३–१२–११। एतेषां प्रत्येकं त्रिभिर्भागो ह्रियते, लब्धं यथाक्रममिदं—४–४–४–३। एतानि सर्वाण्यप्येकत्र मील्यन्ते, जातानि पञ्चदश। तानि वृत्तत्र्यस्रचतुरस्रसंज्ञितेषु

त्रिषु स्थानेषु स्थाप्यन्ते—१५-१५-१५ । लब्धशेषाणि च क्रमेणामूनि—द्विक एककः शून्यं द्विकः २-१-०-२ । अत्र द्वौ द्विकौ, एक एककः ! तत्रैककस्त्र्यस्रराशौ प्रक्षिप्यते । यौ तु द्विकौ तावेकत्र मीलितौ, जाताश्चत्वारः । तत्र द्वौ त्र्यस्रेषु प्रक्षिप्येते, द्वौ चतुरस्रेषु । ततो जातस्त्र्यस्रराशिरष्टादश १८ । चतुरस्रराशिः सप्तदश १७ । इदमेकस्यां दिशि वृत्तादीनां परिमाणं । ततः सकलारणाच्युतवलयगतवृत्तादिसङ्ख्यानयनाय त्रयोऽपि राशयः पृथक् चतुर्भिर्गुण्यन्ते । वृत्तराशौ च चत्वारोऽपि विमानेन्द्रकाः प्रक्षिप्यन्ते, जातमारणाच्युतवलये सर्वाग्रमिदं—त्र्यस्राणां द्विसप्ततिः ७२ । चतुरस्राणामष्टषष्टिः ६८ । वृत्तानां चतुःषष्टिः ६४ । उक्तं च—"चउसठी बावत्तरि, अट्ठसठी चेव होइ नायव्वा । आरणअच्चुयकप्पे, वट्टा तंसा य चउरंसा ॥ १ ॥" तथाधस्तनग्रैवेयकत्रिके त्रयः प्रस्तटा इति तिस्रश्चतुर्दिग्विनिर्गता आवलिकाः । तत्र प्रथमायामावलिकायां दश, द्वितीयस्यां नव, तृतीयस्यामष्टौ, १०-९-८ । एतेषां प्रत्येकं त्रिभिस्त्रिभिर्भागे हृते लब्धं यथाक्रममिदं—३-३-२ । एतानि च सर्वाण्येकत्र मील्यन्ते, जातानि अष्टौ ८ । तानि त्र्यस्रचतुरस्रवृत्तसंज्ञितेषु त्रिषु स्थानेषु स्थाप्यन्ते—८-८-८ । लब्धशेषाणि च क्रमेणामूनि—एककः शून्यं द्विकः १-०-२ । अत्रैक एककः, एको द्विकः । तत्रैककस्त्र्यस्रराशौ प्रक्षिप्यते । यस्तु द्विकस्तस्यैकस्त्र्यस्रराशौ प्रक्षेपणीयः, एकश्चतुरस्रराशौ, ततस्त्र्यस्रराशिर्जातो दश १० । चतुरस्रराशिर्नव ९ । इदमेकस्यां दिशि वृत्तादीनां परिमाणं । ततः सकलाधस्तनग्रैवेयकत्रिकगतवृत्तादिसङ्ख्यानयनाय त्रयोऽपि राशयः प्रत्येकं चतुर्भिर्गुण्यन्ते । वृत्तराशौ च त्रयोऽपि विमानेन्द्रकाः प्रक्षिप्यन्ते । ततो जातमधस्तनग्रैवेयकत्रिके त्र्यस्राणां सर्वाग्रमिदं चत्वारिंशत् ४० । चतुरस्राणां षट्त्रिंशत् ३६ । वृत्तानां पञ्चत्रिंशत् ३५ । उक्तं च—"पणतीसा चत्ताला, छत्तीसा

हिट्ठिमम्मि गेविज्जे" । तथा मध्यमग्रैवेयकत्रिकेऽपि त्रयः प्रस्तटा इत्यावलिका अपि चतुर्दिग्विनिर्गतास्तिस्रः । तत्रैकस्यामावलिकायामेकस्यां दिशि विमानानि सप्त, द्वितीयस्यां षट्, तृतीयस्यां पञ्च ७–६–५ । एतेषां प्रत्येकं त्रिभिर्भागो ह्रियते, लब्धं यथाक्रममिदं—२–२–१ । एतानि सर्वाण्यप्येकत्र मील्यन्ते, जातानि पञ्च । तानि त्र्यस्रचतुरस्रवृत्तसंज्ञितेषु त्रिषु स्थानेषु स्थाप्यन्ते—५–५–५ । लब्धशेषाणि च क्रमेणामूनि—एककः शून्यं द्विकः १–०–२ । अत्रैक एककः, एको द्विकः । एककस्त्र्यस्रराशौ, यस्तु द्विकस्तस्यैकस्त्र्यस्रराशौ प्रक्षिप्यते, एकश्चतुरस्रराशौ । ततस्त्र्यस्रराशिर्जातः सप्त ७ । चतुरस्रराशिः षट् ६ । इदमेकस्यां दिशि वृत्तादीनां परिमाणं । ततः सकलमध्यमग्रैवेयकगतवृत्तादिसङ्ख्यानयनाय त्रयोऽपि राशयः पृथक् चतुर्भिर्गुण्यन्ते, वृत्तराशौ च त्रयोऽपि विमानेन्द्रकाः प्रक्षिप्यन्ते, जातं मध्यमग्रैवेयके त्र्यस्राणां सामस्त्येन परिमाणमिदं अष्टाविंशतिः २८ । चतुरस्राणां चतुर्विंशतिः २४ । वृत्तानां त्रयोविंशतिः २३ । उक्तं च—"तेवीस अट्ठवीसा, चउवीसा चेव मज्झिमए" । तथोपरितनग्रैवेयकत्रिकेऽपि त्रयः प्रस्तटा इत्यावलिका अपि चतुर्दिग्विनिर्गतास्तिस्रः । तत्रैकस्यामावलिकायामेकस्यां दिशि विमानानि चत्वारि, द्वितीयस्यां त्रीणि, तृतीयस्यां द्वे ४–३–२ । एतेषां त्रिभिः प्रत्येकं भागो ह्रियते, लब्धं यथाक्रममिदं—एकक एककः शून्यं १–१–० । द्विकस्तु भागं न प्रयच्छतीति लब्धं शून्यं । लब्धौ च द्वावेककावेकत्र मील्येते, जातौ द्वौ । तौ त्र्यस्रचतुरस्रवृत्तसंज्ञितेषु त्रिषु स्थानेषु स्थाप्येते—२–२–२ । लब्धशेषाणि च क्रमेणामूनि—एकः शून्यं द्विक इति १–०–२ । अत्रैक एककः, एको द्विकः तत्रैककस्त्र्यस्रराशौ प्रक्षिप्यते । यस्तु द्विकस्तस्यैकस्त्र्यस्रराशौ प्रक्षेपणीयः, एकश्चतुरस्रराशौ । ततो जातस्त्र्यस्रराशिश्चत्वारः ४ । चतुरस्रराशि-

स्त्रयः ३ । इदमेकस्यां दिशि वृत्तादीनां परिमाणं । ततः सकलोपरितनग्रैवेयकत्रिकगतवृत्तादिसङ्ख्यानयनाय त्रयोऽपि राशयः पृथक् चतुर्भिर्गुण्यन्ते, वृत्तराशौ च त्रयोऽपि विमानेन्द्रकाः प्रक्षेपणीयाः । ततो जातमुपरितनग्रैवेयकत्रिके त्र्य-स्राणां सर्वाग्रमिदं षोडश १६ । चतुरस्राणां द्वादश १२ । वृत्तानामेकादश ११ । चरमे तु प्रस्तटे सर्वमध्यं विमानं वृत्तं, शेषाणि तु चतुर्दिग्भावीनि चत्वारि विमानानि विजयवैजयन्तजयन्तापराजितसंज्ञानि त्र्यस्राणि । उक्तं च—"एक्कारस सोलस बारसेव गेविज्ज उवरिमे होंति । एगं वट्टं तंसा, चउरो य अणुत्तरविमाणा ॥ १ ॥" आह—आनतप्राणतवलय आरणाच्युतवलये च पृथगेकैक एवेन्द्र इति स्वस्ववलयगतानि सर्वाण्यपि वृत्तादिविमानान्येकैकस्येन्द्रस्य भवन्ति, सौधर्मे-शानवलये सनत्कुमारमाहेन्द्रवलये च पृथग् द्वौ द्वाविन्द्राविति कस्येन्द्रस्य कियन्त्यावलिकाप्रविष्टानि वृत्तादिविमाना-न्याभाव्यानीति ? उच्यते—इह सौधर्मेशानवलये त्रयोदशस्वपि प्रस्तटेषु यानि दक्षिणस्यां दिशि वृत्तत्र्यस्रचतुरस्राणि विमानानि, ये च विमानेन्द्रकाः, यानि च पूर्वस्यामपरस्यां च दिशि वृत्तानि विमानानि, तानि सर्वाण्यपि शक्रस्यैव भवन्ति । यानि पुनरुत्तरस्यां दिशि वृत्तत्र्यस्रचतुरस्रविमानानि तानीशानेन्द्रस्यैव । यानि पुनः पूर्वस्यामपरस्यां च दिशि त्र्यस्राणि चतुरस्राणि च विमानानि तान्यर्धानि शक्रस्याभाव्यानि, अर्धानीशानेन्द्रस्य । उक्तं च—"जे दक्खिणेण इंदा, दाहिणओ आवली मुणेयव्वा । जे पुण उत्तर इंदा, उत्तरओ आवली तेसिं ॥ १ ॥ पुव्वेण पच्छिमेण य, सामन्ना आवली मुणेयव्वा । जे पुण वट्टविमाणा, मज्झिल्ला दाहिणिल्लाणं ॥२॥ पुव्वेण पच्छिमेणय जे वट्टा ते वि दाहिणिल्लस्स । तंसचउरंसगा पुण, सामन्ना होंति दोण्हं पि ॥ ३ ॥" ततः शक्रस्य देवेन्द्रस्य पूर्वापरदक्षिणदिग्गतास्तिस्रो वृत्तविमानावलिकास्तथैका

दक्षिणदिग्गता, एकं पूर्वावलिकाया अर्धं एकमपरावलिकाया इति द्वे अर्धे एकत्र मीलिते जाता परिपूर्णा द्वितीयावलिकेति, ते द्वे त्र्यस्रविमानानामावलिके, एवं द्वे चतुरस्रविमानानामावलिके आज्ञाव्ये, इत्येकदिग्गतान्यष्टात्रिंशदधिकशतद्वयप्रमाणानि वृत्तविमानानि त्रिभिर्गुण्यन्ते, गुणयित्वा च त्रयोदश विमानेन्द्रकास्तत्र क्षिप्यन्ते, जातानि सप्त शतानि सप्तविंशत्यधिकानि ७२७ । एतावन्त्यावलिकाप्रविष्टानि वृत्तविमानानि शक्रस्याज्ञाव्यानि । तथैकदिग्गतानि त्र्यस्रविमानानि सप्तचत्वारिंशदधिकशतद्वयप्रमाणानि द्वाभ्यां गुण्यन्ते, जातानि चत्वारि शतानि चतुर्नवत्यधिकानि ४९४ । एतावन्ति त्र्यस्राणि । तथैकदिग्गतानि चतुरस्रविमानानि त्रिचत्वारिंशदधिकशतद्वयप्रमाणानि द्वाभ्यां गुण्यन्ते, जातानि चत्वारि शतानि षडशीत्यधिकानि ४८६ । एतावन्ति चतुरस्राणि शक्रस्याज्ञाव्यानि । उक्तं च—"सत्तसय सत्तवीसा, चत्तारि सया हवंति चउणउया । चत्तारि य छासीया, सोहम्मे हुंति वट्टाई ॥ १ ॥" सर्वसङ्ख्यया चामूनि भवन्ति सप्तदशशतानि सप्तोत्तराणि १७०७ । एतद्व्यतिरिक्तानि तु शेषाणि शक्रस्य सत्कानि पुष्पावकीर्णानि, तानि चैकत्रिंशत् शतसहस्राण्यष्टानवतिसहस्राणि द्वे शते त्रिनवत्यधिके ३१९८२९३ । उक्तं च—"इगतीस सयसहस्सा, अट्ठाणउई भवे सहस्सा य । दो य सया तेणउया, सोहम्मे पुप्फकिण्णाणं ॥१॥" उभयमीलने च द्वात्रिंशल्लक्षाणि भवन्ति ३२००००० । एतावन्ति सर्वसङ्ख्यया शक्रस्य विमानान्याज्ञाव्यानि । ईशानेन्द्रस्योत्तरदिग्भावीन्येव वृत्तानि विमानान्याज्ञाव्यानि, तानि च द्वे शते अष्टात्रिंशदधिके २३८ । त्र्यस्रावलिका च सप्तचत्वारिंशदधिकशतद्वयप्रमाणा द्वाभ्यां गुण्यते, जातानि चत्वारि शतानि चतुर्नवत्यधिकानि ४९४ । एतावन्ति त्र्यस्रविमानान्याज्ञाव्यानि । चतुरस्रावलिकापि त्रिचत्वारिंशद-

धिकशतत्रयप्रमाणा द्वाभ्यां गुण्यते, जातानि चत्वारि शतानि षडशीत्यधिकानि ४८६। एतावन्ति चतुरस्राण्याज्ञाव्यानि। सर्वसङ्ख्यया चामूनि भवन्ति—द्वादश शतान्यष्टादशोत्तराणि १२१८। एतावन्त्यावलिकाप्रविष्टानि विमानानीशानेन्द्रस्याज्ञाव्यानि। उक्तं च—"सत्तरस सया सत्तुत्तरा उ सोहम्मि आवलि विमाणा। बारस अट्ठारहिया, ईसाणे आवलिविमाणा ॥ १ ॥" अष्टादशोत्तरद्वादशशतव्यतिरिक्तानि तु शेषाणि विमानान्याज्ञाव्यानि पुष्पावकीर्णानि, तानि च सप्तविंशतिलक्षाण्यष्टानवतिसहस्राणि सप्त शतानि द्व्यशीत्यधिकानि २७९८७८२। उक्तं च—"सत्तावीसं लक्खा, अट्ठाणउई भवे सहस्साइं। सत्त सया बासीया, ईसाणे पुप्फकिण्णाणं ॥ १ ॥" उभयमीलनेऽष्टाविंशतिर्लक्षा भवन्ति २८००००००। एतावन्तीशानेन्द्रस्य सर्वसङ्ख्यया विमानान्याज्ञाव्यानि। तथा सनत्कुमारमाहेन्द्रवलये यानि दक्षिणदिग्भावीनि वृत्तत्र्यस्रचतुरस्राणि, ये च द्वादश विमानेन्द्रकाः, यानि च पूर्वस्यामपरस्यां च दिशि वृत्तानि विमानानि, तानि सर्वाण्यपि सनत्कुमारेन्द्रस्याज्ञाव्यानि। यानि पुनरुत्तरस्यां दिशि वृत्तत्र्यस्रचतुरस्रविमानानि तानि सर्वाण्यपि माहेन्द्रस्य, पूर्वापरदिग्गतानि तु त्र्यस्रचतुरस्रविमानान्यर्धानि सनत्कुमारेन्द्रस्यार्धानि माहेन्द्रस्य। ततो वृत्तविमानान्येकदिग्गतानि सप्तत्यधिकशतप्रमाणानि १७० त्रिभिर्गुण्यन्ते, गुणयित्वा च मध्ये द्वादशविमानेन्द्रकाः प्रक्षिप्यन्ते, जातानि पञ्च शतानि द्वाविंशत्यधिकानि ५२२, एतावन्ति सनत्कुमारेन्द्रस्य वृत्तविमानान्याज्ञाव्यानि,। तथा त्र्यस्रविमानान्येकदिग्गतान्यष्टसप्तत्यधिकशतप्रमाणानि १७८ द्वाभ्यां गुण्यन्ते, द्वयोरेव त्र्यस्रावलिकयोः सनत्कुमारेन्द्रस्याज्ञाव्यत्वात्, जातानि त्रीणि शतानि षट्पञ्चाशदधिकानि ३५६, एतावन्ति त्र्यस्राणि सनत्कुमारेन्द्रस्याज्ञाव्यानि। तथा

चतुरस्राण्यप्येकदिग्गतानि विमानानि चतुःसप्तत्यधिकशतप्रमाणानि १७४ द्वाभ्यां गुण्यन्ते, कारणं प्रागेवोक्तं, जातानि त्रीणि शतान्यष्टाचत्वारिंशदधिकानि ३४८, एतावन्ति चतुरस्राणि सनत्कुमारेन्द्रस्यावलिकाविमानानि। सर्वसङ्ख्यया चामूनि द्वादश शतानि षड्विंशत्यधिकानि १२२६। एतद्व्यतिरिक्तानि तु सनत्कुमारेन्द्रस्याकाशविमानानि पुष्पावकीर्णानि, तानि चैकादश लक्षा अष्टानवतिसहस्राणि सप्त शतानि चतुःसप्तत्यधिकानि ११९८७७४। उक्तं च—"इक्कारस लक्खाइं, अट्ठाणउई नवे सहस्साइं। सत्त सया चोवत्तरि, हवंति पुप्फावकिण्णाइं ॥१॥" उभयमीलने द्वादश लक्षा विमानानां भवन्ति—१२००००००। एतावन्ति सर्वसङ्ख्यया सनत्कुमारेन्द्रस्य विमानान्याकाशव्यानि। तथा माहेन्द्रस्योत्तरदिग्भावीन्येव वृत्तविमानान्याकाशव्यानि, तानि च सप्तत्यधिकं शतं १७०। त्र्यस्रावलिके च द्वे आकाशव्ये, तद्यथा—एका उत्तरदिग्गता, अर्धं पूर्वस्यामर्धमपरस्यामित्युभयमीलने द्वितीया। एवं चतुरस्रावलिके अपि द्वे आकाशव्ये भावनीये। तत्र त्र्यस्रावलिकाया एकस्याः परिमाणं शतमेकमष्टसप्तत्यधिकं १७८। तद् द्वाभ्यां गुण्यते, जातानि त्रीणि शतानि षट्पञ्चाशदधिकानि ३५६। एतावन्ति त्र्यस्राणि माहेन्द्रस्याकाशव्यानि। चतुरस्रावलिकाया एकस्याः परिमाणं चतुःसप्तत्यधिकं शतं १७४। तद् द्वाभ्यां गुण्यते, जातानि त्रीणि शतान्यष्टाचत्वारिंशदधिकानि ३४८। एतावन्ति चतुरस्राणि माहेन्द्रस्याकाशव्यानि। उक्तं च—"सत्तरिसयं अणूणं, तिन्नेव सया हवंति छप्पन्ना। तिन्नि सयाअडयाला, वट्टाइ माहिंदसकस्स ॥ १ ॥" सर्वसङ्ख्यया चामूनि भवन्त्यष्टौ शतानि चतुःसप्तत्यधिकानि ८७४। एतावन्ति सर्वसङ्ख्यया माहेन्द्रस्यावलिकाप्रविष्टानि विमानान्याकाशव्यानि। उक्तं च—"बारस सय छवीसा, कप्पम्मि सणंकुमारि आवलिया। अछ

चतुःसप्तत्यधिकाष्टशतव्यतिरिक्तानि तु शेषाणि माहेन्द्रस्याजाव्यानि
सया चोवत्तरि, विमाण माहिंद आवलिया ॥ १ ॥” चतुःसप्तत्यधिकाष्टशतव्यतिरिक्तानि तु शेषाणि माहेन्द्रस्याजाव्यानि
पुष्पावकीर्णानि, तानि च सप्त लक्षा नवनवतिसहस्राणि शतं चैकं पड्विंशत्यधिकं ७एए१२६ । उक्तं च—“सत्तेव सय-
सहस्सा, नवनउई खलु जवे सहस्साइं।सयमेगं छवीसं, माहिंदपुप्फावकिन्नाणं ॥ १ ॥” उजयमीलने चाष्टौ लक्षा जवन्ति
०००००० । एतावन्ति सर्वसङ्ख्यया माहेन्द्रस्याजाव्यानि विमानानि । तथा सर्वेष्वपि कल्पेपु स्वस्वकल्पस्यान्तिमे प्रस्तटे
निजकल्पावतंसानीन्द्रनिवासयोग्यानि विमानानि जवन्ति, तेषां चेन्द्रनिवासयोग्यानां विमानानां चतसृषु दिक्षु
चतुर्णां लोकपालानां योग्यानि विमानानि । उक्तं च—“कप्पस्स अंतपयरे, नियकप्पवर्डिसगा विमाणाउ । इंदनिवासा
तेसिं, चउद्दिसिं लोगपालाणं ॥ १ ॥” तथावलिकाप्रविष्टानां विमानानां परस्परमन्तरमसङ्ख्येययोजनात्मकं, पुष्पावकी-
र्णानां तु सङ्ख्येययोजनात्मकमसङ्ख्येययोजनात्मकं वा । उक्तं च—“आवलियविमाणाणं, तु अंतरं नियमसो असंखिज्जं ।
संखिज्जमसंखिज्जं, जणियं पुप्फावकिन्नाणं॥ १ ॥” तथा यान्यावलिकाप्रविष्टानि तानि कानिचिद्वृत्तानि कानिचित्त्र्यस्राणि
कानिचिच्चतुरस्राणि । अन्यत्संस्थानं तेषां सर्वथा न विद्यते । यानि च पुष्पावकीर्णानि तानि नानारूपसंस्थानानि, तद्य-
था—किञ्चिन्नन्द्यावर्ताकारं किञ्चित्स्वस्तिकाकारं किञ्चित् खड्गाकारमित्यादि । उक्तं च—“आवलियाहि विमाणा, वट्टा
तंसा तहेव चउरंसा । पुप्फावकिन्नगा पुण, अणेगविहरूवसंगाणा ॥ १ ॥” वृत्तं च नाम वलयाकारमवसेयं, त्र्यस्रं शृङ्गा-
टकसंस्थानं, चतुरस्रमक्षपाटकसंस्थानं । उक्तं च—“वट्टं च वलयगं पि व, तंसं सिंघाडगं पि व विमाणं । चउरंस विमाणं
पुण, अक्खाडगसंठियं जणियं ॥ १ ॥” तथा यानि वृत्तविमानानि तानि सर्वाण्यप्येकद्वाराणि, त्र्यस्राणि त्रिद्वाराणि, चतु-

सर्ट ||

रस्राणि चतुर्द्वाराणि । तत्र वृत्तविमानानि सर्वाण्यपि कपिशीर्षकविराजितप्राकारपरिक्षिप्तानि । चतुरस्रविमानानां पुनश्चतसृष्वपि दिक्षु वेदिका भवन्ति । वेदिका नामात्र मुण्डप्राकारा वेदितव्याः । त्र्यस्रविमानानां पुनर्यस्यां दिशि वृत्तं विमानं तस्मिन् पार्श्वे वेदिका, शेषेषु तु पार्श्वेषु प्राकाराः । उक्तं च—"सवे वट्टविमाणा, एगदुवारा हवंति विन्नेया । तिन्नि य तंस विमाणे, चत्तारि य हुंति चउरंसे ॥ १ ॥ पागारपरिक्खित्ता, वट्टविमाणा हवंति सवे वि । चउरंसविमाणाणं, चउद्दिसिं वेइआ होइ ॥२॥ जत्तो वट्टविमाणा, तत्तो तंसस्स वेइआ होइ । पागारो बोद्धवो, अवसेसेसुं तु पासेसु ॥३॥" १२२–१२३–१२४–१२५॥

सम्प्रति विमानानां प्रतिष्ठानमाह—

**घणउदहिपइट्ठाणा, सुरभवणा दोसु हुंति कप्पेसु । तिसु वाउपइट्ठाणा, तदुभयसुपइट्ठिया तीसु ॥१२६॥**
**तेण परं उवरिमगा, आगासंतर पइट्ठिया सवे । एस पइट्ठाणविही, उड्ढलोए विमाणाणं ॥ १२७ ॥**

व्याख्या—द्वयोरादिमयोः सौधर्मेशाननाम्नोः कल्पयोः सुरभवनानि विमानानि भवन्ति घनोदधिप्रतिष्ठानानि घनोदधिः स्त्यानीभूत उदकराशिः स प्रतिष्ठानमाश्रयो येषां तानि तथा । तदनन्तरं त्रिषु कल्पेषु सनत्कुमारमाहेन्द्रब्रह्मलोकसंज्ञेषु सुरभवनानि वायुप्रतिष्ठानानि । अत्र पूर्वपदाद् घनग्रहणमनुवर्तते, ततोऽयमर्थः—घनवातप्रतिष्ठानानि, तदनन्तरमुपरितनेषु त्रिषु कल्पेषु लान्तकशुक्रसहस्रारूपेषु तदुभयसुप्रतिष्ठानानि घनोदधिघनवातप्रतिष्ठितानीत्यर्थः । ततः परमुपरितनानि सर्वाण्यप्यानतप्राणतादिविमानानि आकाशान्तरप्रतिष्ठितानि आकाशमेवाकाशान्तरं तत्प्रतिष्ठितानि, एष ऊर्ध्वलोके विमानानां प्रतिष्ठानविधिः ॥ १२६–१२७ ॥

सम्प्रति विमानपृथिवीबाहल्यादिकमभिधित्सुस्तदुपक्षेपमाह—

**पुढवीणं बाहल्लं, उच्चत्तं चेव तह विमाणाणं । वन्नो अ सुआभिहिओ, सोहम्माईसु विन्नेओ ॥ १२८ ॥**

व्याख्यां—सौधर्मादिषु देवलोकेषु पृथिवीनां विमानाधारभूतभूमिकानां बाहल्यं स्थूलत्वं, तथा भूमिकात ऊर्ध्वं विमानानामुच्चत्वमुच्चैस्त्वं, तथा वर्णश्च विमानानां श्रुताभिहितो जीवाभिगमादिशास्त्रोक्तो वक्ष्यमाणग्रन्थेनाभिधियमानो विज्ञेयः । इह श्रुताभिहित इति विशेषणं पृथिवीबाहल्यादावपि यथाविभक्तिपरिणामं संबन्धनीयं, यथा श्रुताभिहितं पृथिवीबाहल्यं श्रुताभिहितमुच्चत्वं विमानानामिति । तेन सकलमपीदं प्रकरणं श्रुतपरतन्त्रं, न स्वमनीषिकाविजृम्भितमिति प्रतिपत्तव्यम् ॥ १२८ ॥

ततः( त्र )प्रथमतः कल्पेषु विमानानां पृथिवीबाहल्यमाह—

**सत्तावीस सयाइं, आइमकप्पेसु पुढविबाहल्लं । इक्किक्कहाणि सेसे, दु दुगे य दुगे य चउक्के य ॥ १२९ ॥**

व्याख्या—आदिमयोः कल्पयोः सौधर्मेशानरूपयोर्विमानेषु पृथिवीनां विमानाधारभूमिकानां बाहल्यं सप्तविंशतिशतानि सप्तविंशतियोजनशतानि । तत ऊर्ध्वं शेषे द्विके द्विके द्विके चतुष्के चैकैकहानिर्विमानपृथिवीबाहल्यविषयैकैकयोजनशतहानिर्द्रष्टव्या । तद्यथा—सनत्कुमारमाहेन्द्रकल्पयोर्विमानपृथिवीबाहल्यं षड्विंशतियोजनशतानि । ब्रह्मलोकलान्तकयोः पञ्चविंशतियोजनशतानि । शुक्रसहस्रारयोश्चतुर्विंशतियोजनशतानि । आनतप्राणतारणाच्युतकल्पेषु त्रयोविंशतियोजनशतानि ॥ १२९ ॥

सम्प्रति कल्पेष्वेव विमानानामुच्चैस्त्वमानमाह—

**पंचसयुच्चत्तेणं, आइमकप्पेसु हुंति उ विमाणा । इक्कि‍क्क वुड्ढि सेसे, डु डुगे य डुगे य चउक्के य ॥ १३० ॥**

व्याख्या—आदिमयोः कल्पयोः सौधर्मेशानसंज्ञयोर्विमानानि जवन्ति जूमिकात ऊर्ध्वमुच्चैस्त्वेन पञ्च योजनशतानि । ततः सौधर्मेशानकल्पाभ्यामूर्ध्वं शेषे द्विके द्विके द्विके चतुष्के च विमानोच्चैस्त्वविषय एकैकयोजनशतवृद्धिरवसेया । तद्यथा—सनत्कुमारमाहेन्द्रकल्पयोर्विमानान्युच्चैस्त्वेन षड् योजनशतानि । ब्रह्मलोकलान्तकयोः सप्त योजनशतानि । शुक्रसहस्रारकल्पयोरष्टौ योजनशतानि । आनतप्राणतारणाच्युतकल्पेषु नव योजनशतानि ॥ १३० ॥

सम्प्रति ग्रैवेयकादिष्वतिदेशेन विमानपृथिवीबाहल्योच्चैस्त्वविषये हानिवृद्धी प्रतिपादयति—

**गेविज्जणुत्तरेसुं, एसो उ कमो उ हाणि वुड्ढीए ।**

व्याख्या—ग्रैवेयकेष्वनुत्तरविमानेषु च विमानानां पृथिवीबाहल्यस्य हानावुच्चैस्त्वस्य च वृद्धावेष एव क्रम एकैकयोजनशतरूपो द्रष्टव्यः, किमुक्तं जवति ? नवस्वपि ग्रैवेयकेषु प्रत्येकं विमानपृथिवीबाहल्यं द्वाविंशतियोजनशतानि, पञ्चस्वप्यनुत्तरविमानेषु एकविंशतियोजनशतानि । तथा चोक्तं प्रज्ञापनायां—"गेविज्जेसु णं जंते, ! विमाणपुढवी केवइया बाहल्लेणं पन्नत्ता ? गोयमा ! बावीसं जोयणसयाइं । अणुत्तरविमाणेसु णं जंते ! विमाणपुढवी केवइया बाहल्लेणं पन्नत्ता ? गोयमा ! इक्कवीसं जोयणसयाइं" इति । तथा नवस्वपि ग्रैवेयकेषु विमानानामुच्चैस्त्वं दश योजनशतानि । पञ्चस्वनुत्तर

विमानेष्वेकादश योजनशतानि । एवं च सति सर्वेष्वपि कल्पेषु ग्रैवेयकादिषु चैकैकस्मिन् विमाने पृथिवीबाहल्यमुच्चैस्त्वं चैकत्र संपिण्ड्य परिभाव्यमानं द्वात्रिंशद्योजनशतप्रमाणमवसेयम् ॥

तथा चाह—

इक्किक्कम्मि विमाणे, दुन्नि वि मिलिया उ बत्तीसं ॥ १३१ ॥

व्याख्या—सुगमा ॥ १३१ ॥

सम्प्रति सौधर्मादिषु विमानानां वर्णविभागं प्रतिपिपादयिषुराह—

सोहम्मि पंचवन्ना, एक्कगहाणीउ जा सहस्सारो । दो दो तुल्ला कप्पा, तेण परं पुंडरीयाणि ॥ १३२ ॥

व्याख्या—सौधर्मे कल्पे विमानानि वर्णेन वर्णमधिकृत्य पञ्च वर्णानि श्वेतपीतरक्तनीलकृष्णवर्णोपेतानि भवन्ति । तत ऊर्ध्वं यावत्सहस्रारकल्पस्तावदेकैकहानिरेकैकवर्णहानिर्द्रष्टव्या, नवरं द्वौ द्वौ कल्पौ तुल्यौ वर्णमधिकृत्य तुल्यवक्तव्यताकौ वेदितव्यौ, इयमत्र भावना—सौधर्मेशानकल्पयोर्विमानानि श्वेतपीतरक्तनीलकृष्णवर्णोपेतानि भवन्ति । सनत्कुमारमाहेन्द्रकल्पयोः कृष्णवर्णरहितशेषवर्णचतुष्टयोपेतानि । ब्रह्मलोकलान्तककल्पयोः कृष्णनीलरहितशेषवर्णत्रयोपेतानि । शुक्रसहस्रारकल्पयोः कृष्णनीलरक्तरहितशेषवर्णद्वयोपेतानि । "तेण परं पुंडरीया" इति, ततः सहस्रारात् परं विमानानि सर्वाण्यपि पुण्डरीकाणि पुण्डरीकतुल्यवर्णानि भवन्ति, पुण्डरीकं सिताम्बुजं (तद्वत्) श्वेतानि भवन्तीत्यर्थः ॥ १३२ ॥

साम्प्रतं वर्णप्रस्तावाद्भवनपत्यादिभवनानामपि वर्णं प्रतिपादयति—

**भवणवइ–वाणमंतर–जोइसिआणं तु हुंति भवणाइं। वण्णेण विचित्ताइं, पडागझयपंतिकलियाइं ॥१३३॥**

व्याख्या—भवनपतिव्यन्तरज्योतिष्काणां भवनानि वर्णेन वर्णमधिकृत्य भवन्ति विचित्राणि पञ्चविधवर्णोपेतानि भवन्तीत्यर्थः। तथा तानि भवनानि भवन्ति पताकापङ्क्तिभिर्ध्वजपङ्क्तिभिश्च कलितानि। इदं च विशेषणं सौधर्मादिविमानानामपि प्रतिपत्तव्यं, तेषामपि पताकासहस्रैर्ध्वजसहस्रैश्च परिकलितत्वात् ॥ १३३ ॥

सम्प्रति सौधर्मादिविमानानां विस्तारायामाभ्यन्तरबाह्यपरिधिपरिमाणप्रतिपादकामरगतिस्वरूपनिरूपणार्थमिदमाह—

**जावय उदेइ सूरो, जावय सो अत्थमेइ अवरेणं। तियपणसत्तनवगुणं, काउं पत्तेय पत्तेयं ॥ १३४ ॥**

व्याख्या—सर्वाभ्यन्तरमण्डले यावति क्षेत्र उदेति उदयमागच्छति सूर्य उदयमानो यावति क्षेत्र उपलभ्यत इत्यर्थः। यावति च क्षेत्रेऽस्तमपरस्यां दिशि प्रतिपद्यते, एतावत्क्षेत्रपरिमाणं त्रिपञ्चसप्तनवगुणं कृत्वा त्रिगुणं पञ्चगुणं सप्तगुणं नवगुणं प्रत्येकं प्रत्येकं पृथक् पृथक् कृत्वा विमानविस्तारादिपरिच्छेदकामरक्रमपरिमाणमवसेयं। इयमत्र भावना—चण्डादिका च गतिः स्वरूपतो यथोत्तरं शीघ्रा शीघ्रतरा शीघ्रतमा। तद्यथा—चण्डाया गतेः सकाशाच्चपला गतिः शीघ्रतरा, ततोऽपि जवना, ततोऽपि वेगेति ॥ १३४ ॥

सम्प्रति सर्वाभ्यन्तरे मण्डले यावति क्षेत्र उदयमानः सूर्य उपलभ्यते तत्क्षेत्रपरिमाणमाह—

**सीयालीस सहस्सा, दो अ सया जोयणाण तेवट्ठा। एगवीस सट्ठिभागा, कक्कडमाइम्मि पिच्छ नरा ॥१३५॥**

व्याख्या—कर्कटे कर्कटसङ्क्रान्तावादावुदयकाले सूर्यं प्रेक्षन्ते नराः सप्तचत्वारिंशत्सहस्राणि द्वे शते त्रिषष्ठ्यधिके योजनानां प्रमाणाङ्गुलनिष्पन्नानां योजनस्य च षष्टिभागीकृतस्य सत्का एकविंशतिर्भागाः ४७२६३ $\frac{21}{60}$ । एतावति क्षेत्रे व्यवस्थितं सूर्यमुदयमानं, एतावत्येव च क्षेत्रे व्यवस्थितं सूर्यं कर्कटसङ्क्रान्तावस्तमयन्तं पश्यन्ति । ततः पूर्वोक्तं क्षेत्रपरिमाणं द्विगुणं क्रियते ॥ १३५ ॥

तथा चाह—

**एयं दुगुणं काउं, गुणिज्जए तिपंचसत्तनवएहिं । आगयफलं तु जं तं, कमपरिमाणं वियाणाहि ॥ १३६ ॥**

व्याख्या—एतदनन्तरोक्तमुदयक्षेत्रपरिमाणं सप्तचत्वारिंशत्सहस्रादिकं द्विगुणं कृत्वा त्रिपञ्चसप्तनवभिर्गुण्यते, गुणिते च सति यदागच्छति फलं तत् क्रमपरिमाणं विजानीहि । तत्र द्विगुणीकृतं सञ्जातं चतुर्नवतिसहस्राणि पञ्च शतानि षड्विंशत्यधिकानि योजनानां, योजनस्य च षष्टिभागीकृतस्य सत्का द्विचत्वारिंशद्भागाः ९४५२६ $\frac{42}{60}$ । एतत्त्रिगुणीक्रियते, जातं द्वे लक्षे त्र्यशीतिः सहस्राणि पञ्च शतान्यशीत्यधिकानि योजनानां, योजनस्य च षष्टिभागीकृतस्य सत्काः षड्भागाः २८३५८० $\frac{6}{60}$ तथा चाह—"दो लक्ख जोयणाणं, तेसीइ सहस्स पंच सय असिया । छच्चेव सट्ठिभागा, तिहि गुणिए हुंति नायव्वा ॥ १ ॥" सुगमा । एतावत्परिमाणोऽसत्कल्पनयैकस्य देवस्य क्रमः । तथा तदेव द्विगुणीकृतं पञ्चभिर्गुण्यते, जातानि चत्वारि शतसहस्राणि द्विसप्ततिः सहस्राणि षट् शतानि त्रयस्त्रिंशदधिकानि योजनानां, योजनस्य च षष्टिभागीकृतस्य सत्कास्त्रिंशद्भागाः ४७२६३३ $\frac{30}{60}$ तथा चाह—"पंचगुणे चउलक्खा, सहस्स बावत्तरीय छच्च सया ।

तेत्तीस जोयणाइं, अन्ना तीसं कलाओ य ॥ १ ॥" सुगमा । एतावत्परिमाणो द्वितीयस्य देवस्य क्रमः । तथा तदेव द्विगुणीकृतं सत्सप्तभिर्गुण्यते, ततो जातानि षट् शतसहस्राणि एकषष्टिः सहस्राणि षट् शतानि षडशीत्यधिकानि योजनानां, योजनस्य च षष्टिभागीकृतस्य सत्काभागाश्चतुःपञ्चाशत् ६६१६८६ $\frac{54}{60}$ ॥ तथा चाह—"छ लक्खिगसट्ठि सहस्सा, छच्च सया जोयणाण छासीया । चउपन्नं च कलाओ, सत्तहिं गुणिए वियाणाहि ॥ १ ॥" सुगमा । एतावत्परिमाणस्तृतीयस्य देवस्य क्रमः । तथा तदेव द्विगुणीकृतं सन्नवभिर्गुण्यते, जाता अष्टौ लक्षाः पञ्चाशत्सहस्राणि सप्त शतानि चत्वारिंशदधिकानि योजनानां, योजनस्य च षष्टिभागा अष्टादश ८५०७४० $\frac{18}{60}$ ॥ तथा चाह—"लक्ख ७ सहस्सावि य, पन्नासगुणिए नवहिं जाणिज्जा । सत्त सया चत्ताला, अट्ठारस तह कलाओ य ॥१॥" सुगमा । एतावत्परिमाणश्चतुर्थस्य देवस्य क्रमः ॥१३६॥

तदेवं क्रमपरिमाणमुक्तं । सम्प्रति क्रमपरिमाणमुपसंहरन् चण्डादिगतिभिर्गमनकालमानमाह—

**एअं कमपरिमाणं, अहाइ छम्मासियं तु कालस्स । आयामपरिहिवित्थर, देवगईहिं मिणिज्जासु ॥१३७॥**

व्याख्या—एतदनन्तरोक्तं क्रमपरिमाणं क्षेत्रतः समवसेयं । एवं परिमाणक्रमविशिष्टाभिश्चण्डादिगतिभिरहरादिकं दिवसादिकं षाण्मासिकपर्यन्तं कालपरिमाणं यावत्, किमुक्तं भवति ? दिवसमादिं कृत्वा षण्मासान् यावद्विमानानामायामं दैर्घ्यं परिधिं बाह्यमभ्यन्तरं च विस्तारं विष्कम्भं यथायोगं, न तु यथाक्रमं मिनुयात् ॥ १३७ ॥

ननु यदि चण्डादिभिर्गतिभिर्न यथाक्रमं तदा कथं मिनुयादित्यत आह—

**चंडाए विक्खंभो, चवलाए तह य होइ आयामो । अब्भिंतर जयणाए, बाहिरपरिही य वेगाए ॥१३८॥**

व्याख्या—चण्डया विष्कम्भो विस्तारो भवति । चपलयायामो दैर्घ्यं । जवनयाभ्यन्तरपरिधिः । वेगया बाह्यप-
रिधिरिति ॥ १३८ ॥

तत्र—

**चत्तारि वि सकमेहिं, चंडाइगईहिं जंति छम्मासं। तह वि न वि जंति पारं, केसिं च सुरा विमाणाणं ॥१३९॥**

व्याख्या—चत्वारोऽपि सुरा देवा युगपदेककालं विष्कम्भादिपरिमाणकरणार्थं चण्डादिभिर्गतिभिः स्वक्रमैस्त्रिपञ्चसप्त-
नवगुणसूर्योदयास्तमयापान्तरालक्षेत्रप्रमाणैः षण्मासान् यावद्गच्छन्ति, परं तथापि केषाञ्चिद्विमानानां यथाक्रमं स्वस्तिकस्व-
स्तिकावर्तस्वस्तिकप्रभस्वस्तिककान्तस्वस्तिकवर्णस्वस्तिकलेश्यस्वस्तिकध्वजस्वस्तिकसितस्वस्तिककूटस्वस्तिकशिष्टस्वस्तिकोत्तरा-
वतंसकानां तथाऽर्चिरर्चिष्कावर्त्तार्चिःप्रभार्चिःकान्तार्चिर्वर्णार्चिर्लेश्यार्चिर्ध्वजार्चिःसितार्चिःकूटार्चिःशिष्टार्चिरुत्तरावतंस-
कानां तथा कामकामावर्तकामप्रभकामकान्तकामवर्णकामलेश्यकामध्वजकामसितकामकूटकामशिष्टकामोत्तरावतंसकानां
तथा विजयवैजयन्तजयन्तापराजितानां पारं न गच्छन्ति, किमुक्तं भवति ? चण्डादिभिर्गतिभिस्त्रिगुणायातेन क्रमप-
रिमाणेन स्वस्तिकादीनां पञ्चगुणायातेन क्रमपरिमाणेनार्चिरादीनां सप्तगुणायातेन कामादीनां नवगुणायातेन विजयादीनां
पारं न गच्छन्ति, अतिबृहत्तमत्वात्तेषामिति ॥ १३९ ॥

तदेवं यथोक्तपरिमाणक्रमविशिष्टाभिश्चण्डादिगतिभिरर्चिष्मदादीनां विष्कम्भादिपरिमाणमुक्तं । सम्प्रति प्रकारा-
न्तरेण चण्डादिगतिषु क्रमपरिमाणं परिकल्प्य सौधर्मादिष्वनुत्तरपर्यवसानेषु केषाञ्चिद्विमानानामायामादिप्रमाणमाह—

**अहवा तिगुणाईए, पत्तेयं चंडमाइ चउभागे । आइमपंचमगेविज्जगेसु तह णुत्तरचउक्के ॥ १४० ॥**

व्याख्या—अथवेति प्रकारान्तरद्योतने प्रत्येकं त्रिगुणादिके त्रिगुणे पञ्चगुणे सप्तगुणे नवगुणे च चण्डादिगतिः संयोज्यैकैकस्मिन् त्रिगुणादिके प्रत्येकं चतस्रोऽपि चण्डादिगतीः संबन्ध्य चतुर्भागे चतुर्णां भागानां समाहारश्चतुर्भागं तस्मिंश्चतुर्षु स्थानेष्वित्यर्थः । तान्येव चत्वारि स्थानानि वैविक्त्येनाह—"आइमेत्यादि" पदैकदेशे पदसमुदायोपचारादादिम इति आदिमादिषु चतुर्षु कल्पेषु, तथा पञ्चम इति पञ्चमादिष्वष्टसु कल्पेषु, नवसु ग्रैवेयकेषु, तथानुत्तरचतुष्के सर्वार्थसिद्धवर्जेषु चतुर्षु विजयादिषु विमानेषु, सर्वार्थसिद्धं हि विमानं योजनलक्षप्रमाणमेवेति तद्वर्जनं । विमानानामायामादि प्रमिनुयादिति वाक्यशेषः, इयमत्र भावना—सौधर्मादिषु चतुर्षु कल्पेषु त्रिगुणेनागतपरिमाणेन क्रमेण केषाञ्चिद्विमानानां चण्डया गत्या विष्कम्भो मीयते, चपलयायामः, जवनयाभ्यन्तरपरिधिः, वेगया बाह्यपरिधिः । तथा ब्रह्मलोकादिष्वष्टसु कल्पेषु पञ्चगुणितागतप्रमाणेन क्रमेण केषाञ्चिद्विमानानां चण्डादिगतिभिर्यथाक्रमं विष्कम्भादि । तथा नवसु ग्रैवेयकेषु सप्तगुणेनागतपरिमाणेन क्रमेण केषाञ्चिद्विमानानां चण्डादिगतिभिर्यथाक्रमं विष्कम्भादि । तथा विजयवैजयन्तजयन्तापराजितेषु चतुर्षु विमानेषु नवगुणितागतपरिमाणेन क्रमेण चण्डादिगतिभिर्यथाक्रमं विस्तरादि मीयते । कालमानं सर्वत्रापि षण्मासपर्यवसानमवसेयं, तथापि पारं न प्राप्यते ॥ १४० ॥

तथा चैतदेव गतिनिर्देशपुरस्सरं प्रतिपादयति—

**चंडा चवला जवणा, वेगा य गईइ हुंति चत्तारि । जयणयरिं पुण अन्ने, गई चउत्थिं भणंती उ ॥ १४१ ॥**

पढमित्थगई चंडा, बिइया चवला तइय तह जवणा । जयणरी य चउत्थी, विमाणमाणं न ते पत्ता ॥ १४२ ॥

व्याख्या—इदं गाथाद्वयमपि सुगमं । नवरं केचिदाचार्याश्चतुर्थीं गतिं मन्यन्ते जवनतरीमिति चतुर्थ्यां गतेर्जवनतरीति नाम निर्दिशन्तीति भावः । आह—यदि त्रिगुणितागतादिप्रमाणैरपि क्रमैश्चण्डादिभिरपि गतिभिर्देवाः कंयाश्चिद्विमानानां षड्भिरपि मासैर्न पारं गच्छन्ति, ततः कथमिह मनुष्यलोके तीर्थकृतां गर्भावतारे जन्मनि निष्क्रमणे केवलज्ञानोत्पत्तौ मोक्षगमनसमये च महिमनिमित्तं झटित्येव तस्मिन्नेव दिने गर्भावतारादिकमवेत्य समागच्छन्ति, विमानानि हि सर्वाण्यपि स्वस्वकल्पे रज्जुमात्रक्षेत्रव्यवस्थितानि, न च तेषां षड्भिरपि मासैश्चण्डादिभिरपि गतिभिः पारं गच्छन्ति, इदं तु मानुषं क्षेत्रं सौधर्मादेरतिदूरं, तथाहि—अत ऊर्ध्वं सौधर्मकल्पः सार्धया रज्ज्वा, अर्धतृतीयाभी रज्जुभिर्माहेन्द्रः, पञ्चभिः सहस्रारः, षड्भिरच्युतः । तथा चोक्तम्—"सोहंमम्मि दिवड्ढा, अड्ढाइज्जा य रज्जु माहिंदे । पंचेव सहस्सारे, छ अच्चुए सत्त लोगंते ॥ १ ॥" नैष दोषः, यत इह प्राग्यदुक्तं त्रिगुणितादिरूपचण्डादिगतिषु क्रमपरिमाणं, तद्बुद्धिपरिकल्पितं, न तात्त्विकं, क्रममन्तरेणैव चण्डादिगतिभिर्देवानां गमनस्वभावत्वादपरिमितसामर्थ्ययुक्तत्वाच्च, एतच्च तथाभवस्वाभाव्यादवसेयमिति ॥ १४१–१४२ ॥

उक्तं सप्रपञ्चं सुरभवनद्वारं । इदानीमवगाहनाद्वारमाह—

भवणवणजोइसोहम्मीसाणे सत्त हुंति रयणीउ । इक्किक्कहाणि सेसे, दु दुगे य दुगे चउक्के य ॥१४३॥

व्याख्या—भवनपतीनां "वण त्ति" वनचराणां ज्योतिष्काणां सौधर्मेशानदेवानां च शरीरप्रमाणमुत्कर्षतः सप्त सप्त

रत्नयो हस्ता जवन्ति । शेषे द्विके द्विके द्विके चतुष्के चैकैकहानिरेकैकहस्तहानिर्वक्तव्या, तद्यथा—सनत्कुमारमाहेन्द्रयोरुत्कर्षतः षड् हस्ताः शरीरप्रमाणं, ब्रह्मलोकलान्तकयोः पञ्च, शुक्रसहस्रारयोश्चत्वारः, आनतप्राणतारणाच्युतेषु त्रयः॥ १४३॥

**गेविज्जेसुं डुन्निय, इक्का रयणी अणुत्तरेसुं च । जवधारणिज्ज एसा, उक्कोसा होइ नायव्वा ॥ १४४ ॥**

व्याख्या—ग्रैवेयकेषूत्कर्षतः शरीरप्रमाणं द्वौ रत्नी, एकोऽनुत्तरेषु । एषा च सप्तहस्तप्रमाणादिकोत्कृष्टावगाहना जवधारणीया वेदितव्या ॥ १४४ ॥

सम्प्रति सनत्कुमारकल्पादिष्वनुत्तरपर्यवसानेषु जवधारणीयामेवोत्कृष्टामवगाहनां सागरोपमवृद्धिक्रमेण हीनां हीनतरां च प्रतिपिपादयिषुः प्रथमतः स्थितिपरिमाणप्रतिपादकं पादोनगाथाद्वयमाह—

**सोहम्मीसाणडुगे, उवरिं डुग डुग डुगे चउक्के य । नवगे पणगे य कमा, उक्कोसा ठिई इमा होइ ॥१४५॥**

**दो अयर सत्त चउदस, अट्ठारस चेव तह य बावीसा । इगतीसा तित्तीसा,**

व्याख्या—सौधर्मेशानरूपे द्विके तत उपरितने द्विके द्विके द्विके चतुष्के नवके पञ्चके च क्रमात् क्रमेणोत्कृष्टा स्थितिरियं जवति, तद्यथा—"दो अयर" इत्यादि, इयमत्र जावना—सौधर्मेशानरूपे द्विक उत्कृष्टा स्थितिर्द्वे सागरोपमे । यत्त्वीशाने साधिकत्वं तद्देहमानेऽनुपयोगित्वान्न विवक्षितं, एवमुत्तरत्रापि द्रष्टव्यं । सनत्कुमारमाहेन्द्ररूपे द्विके सप्त सागरोपमाणि । ब्रह्मलोकलान्तकयोश्चतुर्दश सागरोपमाणि । शुक्रसहस्रारयोरष्टादश । आनतप्राणतारणाच्युतेषु द्वाविं-

शतिः । ग्रैवेयकेषु एकत्रिंशत् । पञ्चस्वनुत्तरविमानेषु त्रयस्त्रिंशत् । इह प्रतिकल्पं प्रतिप्रस्तटं च स्थितिरुत्कृष्टा प्रागेव प्रतिनियता प्रतिपादिता । यत् पुनरित्थं सम्प्रति स्थितिप्रतिपादनं तद्वक्ष्यमाणकरणानुरोधेनेति न कश्चिद्दोषः ॥ १४५ ॥

सम्प्रति करणं प्रतिपादयति—

सत्तसु ठाणेसु तासिं तु ॥ १४६ ॥

विवरे इक्किकूणे, इक्कारसगाउ पाडिए सेसा । रयणिक्कारस भागा, एक्कुत्तर वुड्ढिया चयसु ॥ १४७ ॥

व्याख्या—सप्तसु स्थानेषु सौधर्मेशानरूपद्विकादिष्वनुत्तरविमानपञ्चकपर्यन्तेषु तासां सागरोपमद्विकप्रमाणादीनामुत्कृष्टानां स्थितीनां विवरे विवरणे विश्लेषे । किमुक्तं भवति ? बृहत्याः स्थितेः सकाशादल्पायां स्थितौ पातितायां यदत्र शिष्यते तस्मिन्नेकैकोन एकादशभ्यो हस्तगतेभ्यो भागेभ्यः पातिते ये शेषास्तिष्ठन्ति एकादश भागास्तान् यथोत्तरमेकोत्तरवर्धितानेकैकेनै एकादशभागेन परिवृद्धान् पूर्वपूर्वकल्पागतशरीरप्रमाणात्त्यजेत् । सूत्रे तु प्रथमा द्वितीयार्थे प्राकृतत्वात् । ततो यथोक्तं प्रतिसागरोपममुत्कृष्टं शरीरप्रमाणं भवति । इयमत्र भावना—सौधर्मेशानयोरुत्कृष्टा स्थितिः किल द्वे सागरोपमे, सप्त सनत्कुमारमाहेन्द्रयोः, ततो द्वे सप्तभ्योऽपनीयेते, स्थिताः शेषाः पञ्च, त एकोनाः क्रियन्ते, जाताश्चत्वारः, त एकं हस्तमेकादशभागीकृत्य तेभ्यः पात्यन्ते, स्थिताः शेषाः सप्तैकादश भागाः, ते सौधर्मेशानकल्पगतशरीरप्रमाणात् सप्तहस्तरूपात्त्यज्यन्ते, स्थिताः शेषा षड् हस्ताश्चत्वारश्चैकादश भागाः, एतावत्प्रमाणं येषां सनत्कुमारे माहेन्द्रे च कल्पे त्रीणि सागरोपमाण्युत्कृष्टा स्थितिस्तेषां शरीरमिति, येषां तु चत्वारि सागरोपमाण्युत्कृष्टा स्थितिस्तेषां शरीर-

प्रमाणचिन्तायां ते सप्तैकादशभागा एकाधिका अष्टौ सन्तः सौधर्मेशानकल्पगतशरीरप्रमाणात्सप्तहस्तरूपात्त्यज्यन्ते, ततः शेषमुद्धरति षड् हस्ताः त्रयश्चैकादशभागाः, एतावत्प्रमाणं तेषां शरीरम् । एवमेकैकसागरोपमवृद्धावेकैकाधिकभागपातनं कर्तव्यं । तत्र येषां पञ्च सागरोपमाणि तेषां शरीरमानं षड् हस्ता द्वौ चैकादशभागौ । येषां षट् सागरोपमाणि तेषां षड् हस्ता एकश्चैकादशभागः। येषां तु परिपूर्णानि सप्त सागरोपमाणि तेषां परिपूर्णाः षड् हस्ताः शरीरमानं ॥ अङ्कस्थापना—

सनत्कुमारमाहेन्द्रदेवयोर्देहमानम्—

| | | | | | |
|---|---|---|---|---|---|
| सागर | ३ | ४ | ५ | ६ | ७ |
| हस्त | ६ | ६ | ६ | ६ | ६ |
| भाग | ४ | ३ | २ | १ | ० |
| छेद | ११ | ११ | ११ | ११ | ११ |

एतदेव गाथाचतुष्टयेनाह—"दो सागरोवमाइं, पुण्णाइं जाव जेसि ठिइ होइ । सत्तरयणी उ तेसिं, देहपमाणं सुरवराणं ॥ १ ॥ इक्कारसभागेहिं, रयणी काऊण देह परिमाणं । वुच्छामि ठिइविसेसं, सणंकुमाराइदेवाणं ॥ २ ॥ अयरतिगं ठिइ जेसिं, सणंकुमारे तहेव माहिंदे । रयणीछक्कं तेसिं, भागचउक्काहियं देहो ॥३॥ तत्तो अयरे अयरे, भागो इक्किक्कउ पडइ जाव । सागरसत्तठिईणं, रयणीछक्कं तणुपमाणं ॥ ४ ॥" तथा ब्रह्मलोकलान्तकयोरुत्कृष्टा स्थितिश्चतुर्दश सागरोपमाणि, सप्त सनत्कुमारमाहेन्द्रयोः, ततः सप्त चतुर्दशभ्यः पात्यन्ते, स्थिताः शेषाः सप्त, त एकोनाः क्रियन्ते, जाताः षट्, त एकं हस्तमेकादशभागीकृत्य तेभ्यः पात्यन्ते, स्थिताः शेषाः पञ्चैकादशभागाः, ते सनत्कुमारमाहेन्द्रकल्पगतसप्तसागरोपमस्थितिकदेवशरीरप्रमाणात् षड्हस्तरूपादपनीयन्ते, स्थिताः शेषाः पञ्च हस्ताः षडेकादशभागाः, आगतं ब्रह्मलोके येषामष्टौ

सागरोपमाण्युत्कृष्टा स्थितिस्तेषामेतावत्प्रमाणं शरीरमिति । येषां तु नव सागरोपमाण्युत्कृष्टा स्थितिस्तेषां शरीरप्रमाण-चिन्तायां त एव पञ्चैकादशभागा एकाधिकाः षट् सन्तः प्रागुक्ताद्धस्तषट्करूपाच्छरीरप्रमाणात्त्यज्यन्ते, ततः शेषमवतिष्ठन्ते पञ्च हस्ताः पञ्च चैकादशभागाः, एतावत्प्रमाणं तेषां शरीरम् । एवं येषां ब्रह्मलोके दश सागरोपमाण्युत्कृष्टा स्थितिस्तेषा शरीरमानं पञ्च हस्ताश्चत्वारश्चैकादशभागाः । येषां तु लान्तक एकादश सागरोपमाण्युत्कृष्टा स्थितिस्तेषां पञ्च हस्तास्त्र-यश्चैकादशभागाः । येषां द्वादश सागरोपमाण्युत्कृष्टा स्थितिः तेषां पञ्च हस्ता द्वौ चैकादशभागौ । येषां त्रयोदश सागरो-पमाणि तेषां पञ्च हस्ता एकश्चैकादशभागः । येषां तु परिपूर्णानि चतुर्दश सागरोपमाणि तेषां परिपूर्णाः पञ्च हस्ताः शरीरमानं ॥ अङ्कस्थापना—

ब्रह्मलोकलान्तकदेवदेहमानम्—

| सागर | ८ | ९ | १० | ११ | १२ | १३ | १४ |
|---|---|---|---|---|---|---|---|
| हस्त | ५ | ५ | ५ | ५ | ५ | ५ | ५ |
| भाग | ६ | ५ | ४ | ३ | २ | १ | ० |
| छेद | ११ | ११ | ११ | ११ | ११ | ११ | ११ |

एतदेव गाथाद्वयेनाह—"बंभम्मि लंतए वि य, सायर अट्ठेव जेसि ठिई होइ । रयणी उ पंच भागा, छच्चेव य तेसि तणुमाणं ॥१॥ तत्तो अयरे अयरे, भागो इक्किक्कउ पडइ जाव । चउदस अयरठिईणं, रयणीउ पंच तणुमाणं ॥ २ ॥" इमे द्वे अपि गाथे सुगमे । नवरं "बंभम्मि लंतए वि य" इति प्रागुक्तकरणानुरोधत उक्तं, अन्यथाष्टौ सागरोपमाणि स्थितिर्ब्रह्मलोक एव वेदितव्या न लान्तक इति । तथा शुक्रसहस्रारयोरुत्कृष्टा स्थितिरष्टादश सागरोप-

माणि, चतुर्दश ब्रह्मलोकलान्तकयोः, ततोऽष्टादशभ्यश्चतुर्दश पात्यन्ते, स्थिताः शेषाश्चत्वारः, त एकोनाः क्रियन्ते, जातास्त्रयः, ते हस्तमेकमेकादशभागीकृत्य तेभ्यः पात्यन्ते, स्थिताः शेषा अष्टावेकादशभागाः, ते ब्रह्मलोकलान्तकगतचतुर्दशसागरोपमस्थितिकदेवशरीरप्रमाणाद्धस्तपञ्चकरूपादपनीयन्ते, स्थिताः शेषाश्चत्वारो हस्तास्त्रयश्चैकादशभागाः, आगतं येषां महाशुक्रे कल्पे पञ्चदश सागरोपमाण्युत्कृष्टा स्थितिस्तेषामेतावत्प्रमाणं शरीरमिति । येषां तु षोडश सागरोपमाण्युत्कृष्टा स्थितिस्तेषां शरीरप्रमाणचिन्तायां त एवाष्टावेकादश भागा एकाधिका नव सन्तः प्रागुक्ताद्धस्तपञ्चकरूपाच्छरीरप्रमाणादपनीयन्ते, शेषमवतिष्ठते चत्वारो हस्ता द्वौ चैकादशभागौ, एतावत्प्रमाणं तेषां शरीरम् । एवं येषां महाशुक्रे सप्तदश सागरोपमाणि तेषां शरीरमानं चत्वारो हस्ता एकश्चैकादशभागः । येषां तु सहस्रारेऽष्टादश सागरोपमाणि तेषां परिपूर्णाश्चत्वारो हस्ताः ॥ अङ्कस्थापना—

शुक्रसहस्रारदेवदेहमानम्—

| सागर | १५ | १६ | १७ | १८ |
|---|---|---|---|---|
| हस्त | ४ | ४ | ४ | ४ |
| भाग | ३ | २ | १ | ० |
| छेद | ११ | ११ | ११ | ११ |

एतदेव गाथाद्वयेनाह—"सुक्कसहस्सारेसुं, पनरससागरठिईण देवाणं । रयणिचउक्कं भागा, तिन्नेव सरीरपरिमाणं ॥ १ ॥ तत्तो अयरे अयरे, भागो इक्किक्क पडइ जाव । रयणिचउक्कं देहो, अट्ठारस सागरठिईणं ॥ २ ॥" सुगमं गाथाद्वयमपि । तथानतप्राणतारणाच्युतकल्पेषूत्कृष्टा स्थितिर्द्वाविंशतिः सागरोपमाणि, शुक्रसहस्रारयोरष्टादश, ततो द्वाविंशतेरष्टादश शोध्यन्ते,

स्थिताः शेषाश्चत्वारः, त एकोनाः क्रियन्ते, जातास्त्रयः, त एकं हस्तमेकादशभागीकृत्य तेभ्यः पात्यन्ते, जाताः शेषा अष्टावेकादशभागाः, ते शुक्रसहस्रारगताष्टादशसागरोपमस्थितिकदेवशरीरप्रमाणाच्चतुर्हस्तस्वरूपात्त्यज्यन्ते, स्थिताः शेषास्त्रयो हस्तास्त्रयश्चैकादशभागाः। आगतं येषामानतकल्प एकोनविंशतिः सागरोपमाण्युत्कृष्टा स्थितिस्तेषामेतावत्प्रमाणं शरीरमानमिति। येषां तु प्राणतकल्पे विंशतिः सागरोपमाणि स्थितिरुत्कृष्टा तेषां शरीरमानचिन्तायां त एवाष्टावेकादशभागा एकाधिका नव सन्तः प्रागुक्ताद्धस्तचतुष्टयरूपाच्छरीरपरिमाणात्त्यज्यन्ते, ततः शेषमवतिष्ठते त्रयो हस्ता द्वौ चैकादशभागौ, एतावत्प्रमाणं तेषां शरीरमानं। एवमारणकल्पे येषामेकविंशतिः सागरोपमाणि तेषां शरीरमानं त्रयो हस्ता एकश्चैकादशभागः। येषां त्वच्युतकल्पे द्वाविंशतिसागरोपमाणि तेषां परिपूर्णास्त्रयो हस्ताः॥ अङ्कस्थापना—

आनतप्राणतारणाच्युतदेवदेहमानम्—

| | | | | |
|---|---|---|---|---|
| सागर | १९ | २० | २१ | २२ |
| हस्त | ३ | ३ | ३ | ३ |
| भाग | ३ | २ | १ | ० |
| छेद | ११ | ११ | ११ | ११ |

एतदेव गाथाद्वयेनाह—"आणयपमुहचउक्के, उणवीससायरठिईण देवाणं। तणुमाणं हत्थतियं, भागतिय समहियं होइ॥ १॥ तत्तो अयरे अयरे, भागो इक्किक्कउ पडइ जाव। बावीसयरठिईणं, तिहत्थमाणो हवइ देहो॥ २॥" सुगमे। तथा ग्रैवेयकेषूत्कृष्टा स्थितिरेकत्रिंशत्सागरोपमाण्यानतादिचतुष्टये द्वाविंशतिः, तत एकत्रिंशतो द्वाविंशतिरपनीयते, स्थिताः शेषा नव, त एकोनाः क्रियन्ते, जाता अष्टौ, त एकं हस्तमेकादशभागीकृत्य तेभ्यः पात्यन्ते, जाताः शेषास्त्रय एकादशभागाः, तेऽच्युतकल्पगतद्वाविंशतिसागरोपमस्थितिकदेवशरीरप्रमाणात्त्रिहस्तरूपादपनीयन्ते,

स्थितौ शेषौ द्वौ हस्तावष्टौ चैकादशभागाः। आगतं येषामधस्तनग्रैवेयके त्रयोविंशतिः सागरोपमाण्युत्कृष्टा स्थितिस्तेषामेतावत्प्रमाणं शरीरमानम् । अधस्तनमध्यमग्रैवेयके येषां चतुर्विंशतिसागरोपमाणि स्थितिरुत्कृष्टा तेषां शरीरमानचिन्तायां त एव त्रय एकादशभागा एकाधिकाश्चत्वारः सन्तः प्रागुक्ताद्धस्तत्रयरूपाच्छरीरप्रमाणात् परित्यज्यन्ते, ततः शेषमवतिष्ठते द्वौ हस्तौ सप्त चैकादशभागाः। एतावत्प्रमाणं तेषां शरीरम्। एवमधस्तनोपरितनग्रैवेयके येषां पञ्चविंशतिः सागरोपमाण्युत्कृष्टा स्थितिस्तेषां शरीरमानं द्वौ हस्तौ षट् चैकादशभागाः । येषां तु मध्यमाधस्तनग्रैवेयके षड्विंशतिः सागरोपमाणि तेषां द्वौ हस्तौ पञ्च चैकादशभागाः। येषां मध्यममध्यमग्रैवेयके सप्तविंशतिः सागरोपमाणि तेषां द्वौ हस्तौ चत्वारश्चैकादशभागाः । येषां मध्यमोपरितनग्रैवेयकेऽष्टाविंशतिः सागरोपमाणि तेषां द्वौ हस्तौ त्रयश्चैकादशभागाः। येषामुपरितनाधस्तनग्रैवेयक एकोनत्रिंशत्सागरोपमाणि तेषां द्वौ हस्तौ द्वौ चैकादशभागौ । येषामुपरितनमध्यमग्रैवेयके त्रिंशत्सागरोपमाणि तेषां द्वौ हस्तावेकश्चैकादशभागः। येषामुपरितनोपरितनग्रैवेयक एकत्रिंशत्सागरोपमाणि तेषां परिपूर्णौ द्वौ हस्तौ शरीरमानम् ॥ अङ्कस्थापना—

नवग्रैवेयकदेवदेहमानम्—

| सागर | २३ | २४ | २५ | २६ | २७ | २८ | २९ | ३० | ३१ |
|---|---|---|---|---|---|---|---|---|---|
| हस्त | २ | २ | २ | २ | २ | २ | २ | २ | २ |
| भाग | ८ | ७ | ६ | ५ | ४ | ३ | २ | १ | ० |
| छेद | ११ | ११ | ११ | ११ | ११ | ११ | ११ | ११ | ११ |

एतदेव गाथाद्वयेनाह—"गेविज्जेसुं जेसिं, तेवीसं सायरा ठिई तेसिं । हत्थ-दुगं तणुमाणं, भागा अट्ठेव देवाणं ॥ १ ॥ तत्तो अयरे अयरे, भागो इक्कि-क्कउ पडइ जाव । इगतीस सागराऊ, नवमे दोहत्थया देवा ॥ २ ॥" द्वे अपि

गाथे सुगमे । एवमनुत्तरविमानेषु विजयादिषु येषां द्वात्रिंशत्सागरोपमाणि स्थितिस्तेषामेको हस्त एकश्चैकादशभागः शरीरमानं । येषां तु त्रयस्त्रिंशत्सागरोपमाणि स्थितिः तेषामेक एव परिपूर्णो हस्तः शरीरमानं । सर्वार्थसिद्धे तु महाविमाने सदैवैकः परिपूर्णो हस्तस्तनुमानमिति ॥ एतदेवाह—"बत्तीसयरठिईणं, विजयाइसु इक्कभागजुअरयणी । अह इक्कं च्चिय रयणी, सव्वठे देवतणुमाणं ॥ १ ॥" सुगमा ॥ १४७ ॥

तदेवमुक्ता भवधारणीया सुराणां शरीरावगाहना । साम्प्रतमुत्तरवैक्रियरूपामभिधित्सुराह—

सव्वेसुक्कोसा जोअणाण वेउव्विया सयसहस्सं । गेविज्जणुत्तरेसुं, उत्तरवेउव्विया नत्थि ॥ १४८ ॥

व्याख्या—भवनपत्यादिष्वच्युतदेवलोकपर्यन्तेषु सर्वेषामपि देवानामुत्तरवैक्रियमुत्कर्षतो भवति योजनानां शतसहस्रं योजनलक्षप्रमाणं भवतीत्यर्थः । ग्रैवेयकेष्वनुत्तरेषु च विमानेषु देवानामुत्तरवैक्रियं न भवति, शक्तौ सत्यामपि प्रयोजनाभावतस्तदकरणात् ॥ १४८ ॥

सम्प्रति जघन्यतो भवधारणीयामुत्तरवैक्रियां चाह—

अंगुल असंखभागो, जहन्न भवधारणिज्ज आरंभे । संखिज्जो अवगाहण, उत्तरवेउव्विया सा वि ॥१४९॥

व्याख्या—सुगमा । नवरं सापीति प्रारम्भकाले सापि द्रष्टव्या ॥ १४९ ॥

उक्ता सुराणामवगाहना । साम्प्रतं सुराणामेवोपपातविरहकालमानमाह—

भवणवणजोइसोहम्मीसाणे चउवीसइयं मुहुत्ता । उक्कोसविरहकालो, पंचसु वि जहन्नउ समउ ॥१५०॥

व्याख्या—भवनवासिषु व्यन्तरेषु ज्योतिष्केषु सौधर्मेशाने च प्रत्येकमुत्कर्षत उपपातविरहकालश्चतुर्विंशतिर्मुहूर्त्ताः । इयमत्र भावना—भवनवास्यादिषु मध्ये प्रत्येकमेकस्मिन् बहुषु वा समुत्पन्नेषु सत्स्वन्य उत्कृष्टमन्तरं चतुर्विंशतिमुहूर्त्तान् कृत्वा नियमतः समुत्पद्यत इति । जघन्य उपपातविरहकालः पञ्चस्वपि भवनवासिव्यन्तरज्योतिष्कसौधर्मेशानरूपेष्वेकः समयः । किमुक्तं भवति ? एतेषु पञ्चस्वपि स्थानेषु प्रत्येकमेकस्मिन् बहुषु वा समुत्पन्नेष्वन्यः समयमेकमन्तरं कृत्वा समुत्पद्यत इति । शेषः सर्वोऽप्युपपातविरहकालो मध्यमो वेदितव्यः ॥ १५० ॥

**नवदिण वीस मुहुत्ता, बारस दस चेव दिणमुहुत्ताउ। बावीसा अद्धं चिय, पणयाल असीइ दिवससयं ॥१५१॥**

व्याख्या—सनत्कुमारकल्पे देवानामुत्कर्षत उपपातविरहकालो नव दिनानि रात्रिंदिवानि विंशतिश्च मुहूर्त्ताः । माहेन्द्रकल्पे द्वादश रात्रिंदिवानि दश च मुहूर्त्ताः । ब्रह्मलोके कल्पे सार्धानि द्वाविंशती रात्रिंदिवानि । लान्तके कल्पे पञ्चचत्वारिंशद्रात्रिंदिवानि । महाशुक्रे कल्पेऽशीतिरात्रिंदिवानि । सहस्रारे कल्पे दिवसशतमहोरात्रशतम् ॥ १५१ ॥

**संखिज्जा मासा आणयपाणएसु तह आरणच्चुए वासा। संखिज्जा विन्नेया, गेविज्जेसुं अओ वुच्छं ॥ १५२॥**

व्याख्या—आनतप्राणतकल्पे च प्रत्येकमुत्कर्षत उपपातविरहकालः सङ्ख्येया मासाः । केवलमानतकल्पापेक्षया प्राणतकल्पे प्रभूता वेदितव्याः, तेऽपि च प्रभूता अपि वर्षादर्वाक् प्रतिपत्तव्याः । तथारणकल्पेऽच्युतकल्पे च प्रत्येकमुत्कर्षत उपपातविरहकालः सङ्ख्येयानि वर्षाणि । नवरमत्राप्यारणकल्पापेक्षयाच्युतकल्पे प्रभूतानि द्रष्टव्यानि, तानि च वर्षशतादर्वाक् । अतः परं ग्रैवेयकेषूत्कर्षत उपपातविरहकालं वक्ष्ये ॥ १५२ ॥

प्रतिज्ञातमेव निर्वाहयति—

**हिट्ठिमवाससयाइं,मज्झिमे सहस्स उवरिमे लक्खा । संखिज्जा विन्नेया,जहासंखेण तीसुं पि॥ १५३॥**

व्याख्या—त्रिष्वप्यधस्तनादिषु ग्रैवेयकत्रिकेषु यथासङ्ख्येन सङ्ख्येयानि वर्षशतानि वर्षसहस्राणि वर्षलक्षाणि विज्ञेयानि । तद्यथा—अधस्तने ग्रैवेयकत्रिके उत्कृष्ट उपपातविरहकालः सङ्ख्येयानि वर्षशतानि, तानि च वर्षसहस्रादारतः प्रतिपत्तव्यानि । मध्यमे ग्रैवेयकत्रिके उत्कृष्ट उपपातविरहकालः सङ्ख्येयानि वर्षसहस्राणि, तानि वर्षलक्षादर्वागवसेयानि । उपरितनग्रैवेयकत्रिके उत्कृष्ट उपपातविरहकालः सङ्ख्येयानि वर्षलक्षाणि, तानि च वर्षकोट्या आरतो द्रष्टव्यानि । एतच्चैवं व्याख्यायते, मूलटीकाकारहरिभद्रसूरिकृतटीकायामेवमेव दर्शनात् । अन्ये तु सामान्येन व्याचक्षते ॥ १५३ ॥

साम्प्रतमनुत्तरविमानेषूपपातविरहकालमानमाह—

**पलिया असंखभागो, उक्कोसो होइ विरहकालो उ । विजयाइसु निद्दिट्ठो,**

व्याख्या—विजयादिषु विजयवैजयन्तजयन्तापराजितरूपेषु चतुर्षु विमानेषूत्कृष्ट उपपातविरहकालः पल्योपमासङ्ख्येयभागोऽद्धापल्योपमासङ्ख्येयभागः । तुशब्दोऽनुक्तसमुच्चयार्थः, स च सर्वार्थसिद्धे विमान उत्कृष्ट उपपातविरहकालः पल्योपमस्य सङ्ख्येयो भाग इति समुच्चिनोति । न चैतदनार्षं, यत उक्तं प्रज्ञापनायां—"विजयवेजयंतजयंतापराजितदेवाणं भंते ! केवइयं कालं विरहिआ उववाएणं पन्नत्ता ? गोयमा ! जहन्नेणं एगं समयं उक्कोसेणं असंखिज्जकालं ।

सव्वट्ठसिद्धदेवाणं भंते ! केवइयं कालं विरहिया उववाएणं पन्नत्ता ? गोयमा ! जहन्नेणं एगं समयं उक्कोसेणं पलिओवमस्स संखिज्जभागं" इति ॥

तदेवमुक्त उत्कृष्ट उपपातविरहकालः, सम्प्रति जघन्यमाह—

**सव्वेसु जहन्नओ समओ ॥ १५४ ॥**

सर्वेष्वपि सनत्कुमारकल्पादिषु जघन्यत उपपातविरहकाल एकः समयः ॥ १५४ ॥

साम्प्रतमुपपातविरहकालनिगमनपुरस्सरमुद्वर्तनाविरहकालमतिदेशत आह—

**उववायविरहकालो, इय एसो वण्णिओ अ देवेसुं । उव्वट्टणा वि एवं, सव्वेसिं होइ विन्नेया ॥ १५५ ॥**

व्याख्या—इत्येवमुक्तेन प्रकारेणैषोऽनन्तरोक्त उपपातविरहकालो देवेषु वर्णितः, एवमुपपातगतेनैव प्रकारेण सर्वेषां देवानामुद्वर्तनाऽपि विज्ञेया । तद्यथा—भवनवासिव्यन्तरज्योतिष्कसौधर्मेशानदेवानामुत्कृष्ट उद्वर्तनाविरहकालश्चतुर्विंशतिर्मुहूर्ताः । सनत्कुमारकल्पे नव दिनानि विंशतिर्मुहूर्ताः । माहेन्द्रकल्पे द्वादश दिनानि दश मुहूर्ताः । ब्रह्मलोके कल्पे सार्धद्वाविंशतिरहोरात्राः । लान्तके कल्पे पञ्चचत्वारिंशदहोरात्राः । महाशुक्रे कल्पेऽशीतिरहोरात्राः । सहस्रारे कल्पेऽहोरात्रशतं । आनतप्राणतकल्पयोः सङ्ख्येया मासाः । आरणाच्युतकल्पयोः सङ्ख्येयानि वर्षाणि । अधस्तनेषु त्रिषु ग्रैवेयकेषु सङ्ख्येयानि वर्षशतानि । मध्यमेषु त्रिषु ग्रैवेयकेषु सङ्ख्येयानि वर्षसहस्राणि । उपरितनेषु त्रिषु ग्रैवेयकेषु सङ्ख्ये-

यानि वर्षलक्षाणि । विजयादिषु चतुर्षु पल्योपमासङ्ख्येयभागः । सर्वार्थसिद्धे पल्योपमसङ्ख्येयभागः । एष उत्कृष्ट उद्वर्तनाविरहकालः । जघन्यः पुनः सर्वत्राप्युद्वर्तनाविरहकाल एकः समयः ॥ १५५ ॥

उक्तः सुराणामुपपातोद्वर्तनाविरहकालः । सम्प्रति सुराणामेवोपपातमुद्वर्त्तनं चाधिकृत्य सङ्ख्यामाह—

**एक्को व दो व तिन्नि व, संखमसंखा व एगसमएणं । उववज्जंतेवइया, उव्वट्टंता वि एमेव ॥ १५६ ॥**

व्याख्या—भवनवास्यादिषु सहस्रारपर्यन्तेषु प्रत्येकमेकस्मिन् समये जघन्यत एको द्वौ वोत्पद्येते । उत्कर्षतः सङ्ख्याता असङ्ख्याता वा । सहस्राराद्ध्वं तु सर्वेष्वपि देवलोकेषूत्कर्षतः सङ्ख्याता एवोत्पद्यन्ते, नासङ्ख्याताः, यतो मनुष्या एव सहस्राराद्ध्वं गच्छन्ति, न तिर्यञ्चः, मनुष्यास्तु सङ्ख्याता एव । आह च मूलटीकाकारो हरिभद्रसूरिः—"एक्को व दो व तिन्नि व, संखमसंखा व एगसमएणं । भवणवइवंतराइसु, उववज्जंते व एवइया ॥ १ ॥ जाव सहस्सारो कप्पो तेण परं संखेज्जा एवोववज्जंति" इति । "उव्वट्टंता वि एमेव त्ति" उद्वर्तमाना अपि सन्तो भवनपतिव्यन्तरादिदेवा इत्थमेवोद्वर्तन्ते । तद्यथा—जघन्यत एको द्वौ वा, उत्कर्षतः सङ्ख्याता असङ्ख्याता वा यावत्सहस्रारकल्पः । सहस्रारकल्पादूर्ध्वमुत्कर्षतः सङ्ख्याता एव च्यवन्ते ॥ १५६ ॥

तदेवमुक्तमुपपातमुद्वर्तनां चाधिकृत्य सङ्ख्याद्वारं । इदानीं गतिद्वारमाह—

**परिणामविसुद्धीए, देवाउयकम्मबंधजोगाए । पंचिंदिया उ गच्छे, नरतिरिया सेस पडिसेहो ॥ १५७ ॥**

व्याख्या—परिणमनं परिणामो मानसिको व्यापारविशेषः । स च द्विधा—विशुद्धोऽविशुद्धश्च । तत्र यो विशुद्धः स

देवगतिकारणमिति तत्प्रतिपादनार्थं विशुद्धिग्रहणं, परिणामस्य विशुद्धिः परिणामविशुद्धिस्तया, प्रशस्तेन मानसेन व्यापारेणेत्यर्थः। एतेन शुभाशुभगत्यवाप्तौ मनोव्यापारः प्रधानं कारणमित्यावेदयति । तथा चोक्तमेतदन्यैरपि तीर्थान्तरीयैः—"चित्तरत्नमसंक्लिष्टमान्तरं धनमुच्यते। यस्य तन्मुषितं दोषैस्तस्य शिष्टा विपत्तयः ॥ १ ॥" सापि च परिणामविशुद्धिः काप्युत्कर्षप्राप्ता मुक्तिपदघटनायैव प्रभवति, न देवगतिघटनाय, न च तया प्रयोजनमतस्तन्निवृत्त्यर्थमाह—देवायुःकर्मबन्धयोग्यया हेतुभूतया पञ्चेन्द्रियाः, च शब्द एवकारार्थः, पञ्चेन्द्रिया एव, नैकेन्द्रियद्वीन्द्रियादय इत्यर्थः, नरा मनुष्यास्तिर्यञ्चश्च देवेषु मध्ये गच्छन्ति, शेषाणां तु सुरनारकाणां देवगतिगमने प्रतिषेधो वेदितव्यः । न खलु देवा देवायुःक्षयानन्तरं भूयो देवत्वेनोत्पद्यन्ते, नापि नारका नारकभवानन्तरमिति प्रतीतमेतत्सर्वेषां प्रवचननिषण्णमानसानामिति ॥ १५७ ॥

अयं च तिर्यङ्मनुष्याश्रितो देवगतिविषयो विशेषः—

**नरतिरिअसंखजीवी, जोइसवज्जेसु जंति देवेसु । नियआउयसमहीणाउएसु ईसाणअंतेसु ॥ १५८ ॥**

तथा—

**सम्मुच्छिमतिरिया उण, भवणाहिववंतरेसु गच्छंति। जं तेसिं उववाओ, पलियासंखिज्जआउसु ॥१५९॥**

व्याख्या—"नरतिरिअसंखजीवी जोइसवज्जेसु" इति प्रतिषेधो विशेषविषयः, न सामान्यविषयः, विचित्रत्वात्सूत्रप्रवृत्तेः। विशेषश्चासङ्ख्येयवर्षायुषः खचरतिर्यक्पञ्चेन्द्रिया अन्तरद्वीपजमनुष्याश्च । तथाहि—असङ्ख्येयवर्षायुषो देवेषूत्पद्य-

माना निजायुषो हीनस्थितिषु समस्थितिषु वोत्पद्यन्ते नाधिकस्थितिषु, तत एतेऽन्तरद्वीपजखचरतिर्यक्पञ्चेन्द्रियरूपा नरतिर्यञ्चोऽसङ्ख्यजीविनो देवेषूत्पद्यमाना ज्योतिष्कवर्जेषु, उपलक्षणमेतज्ज्योतिष्कसौधर्मेशानवर्जेषूत्पद्यन्ते, न ज्योतिष्कादिष्वपि, अधिकस्थितिषु गत्यभावात्। शेषास्त्वसङ्ख्येयवर्षायुषो हैमवतादिक्षेत्रभाविनो निजायुषः समहीनायुष्केषु सर्वेष्वपीशानान्तेषु गच्छन्ति। "संमुच्छिमतिरिया" गाहा—संमूर्छिमतिर्यञ्चः पुनर्भुवनाधिपव्यन्तरेषु भवनपतिषु व्यन्तरेषु च गच्छन्ति। यद्यस्मात्तेषां संमूर्छिमतिरश्चामुपपात उत्पत्तिः पल्योपमासङ्ख्यांशायुःषु पल्योपमस्यासङ्ख्यांशोऽसङ्ख्यातो भाग आयुर्येषां ते पल्योपमासङ्ख्यांशायुषस्तेषु। तथा चोक्तं—"असन्निणो नेरइयतिरिक्खमणुअदेवेसु सव्वेसु वि अन्थि जेणं भणियं कइविहे णं भंते! असन्निआउए? गोयमा! चउव्विहे असन्निआउए, तं जहा—नेरइयअसन्निआउए, तिरियजोणियअसन्निआउए, मणुयजोणियअसन्निआउए, देवअसन्निआउए। तत्थ देवणेरियअसन्नियाउयस्स जहन्नेणं दसवाससहस्साइं ठिई, उक्कोसेणं पलिओवमस्स असंखिज्जइभागो। तिरियमणुयअसन्नियाउयस्स जहन्नेणं अंतोमुहुत्तं, उक्कोसेणं पलिओवमस्स असंखेज्जइभागो। तत्थ जे ते असन्नी नेरइया ते अप्पवेयणा, जे सन्नी ते महावेयणा।" प्रज्ञापनालघुवृत्तितः, द्वितीया तु गाथा पाठसिद्धा॥ १५९॥

तदेवं सामान्यतो गतिद्वारमुक्तं। इदानीं भवनपतिव्यन्तरादिषु ये यथा गच्छन्ति, तान् तथाऽभिधित्सुराह—

**बालतवे पडिबद्धा, उक्कडरोसा तवेण गारविया। वेरेण य पडिबद्धा, मरिउं असुरेसु उववाउ॥१६०॥**

व्याख्या—इह ये सर्वज्ञवचनपरिज्ञानपरिभ्रष्टास्ते परमार्थज्ञानशून्यत्वाद्बाला इव बालास्तेषां तपः पञ्चाग्न्यादिरूपं, तद्वि

तत्त्ववेदिनां तपो न भवति, सत्त्वोपघातहेतुत्वात्। उक्तं च परैस्तीर्थान्तरीयैरेवं—"चतुर्णां ज्वलतां मध्ये, यो नरः सूर्यपञ्चमम्। तपस्तपति कौन्तेय!, न तत्पञ्चतपः स्मृतम्॥ १॥ पञ्चानामिन्द्रियाग्नीनां, विषयेन्धनचारिणाम्। तेषां तिष्ठति यो मध्ये, तद्धि पञ्चतपः स्मृतम्॥ २॥" तस्मिन् बालतपसि ये प्रतिबद्धा आसक्ताः, अथवा ये बालतपसि स्थिताः, ये च तत्तद्द्रव्यक्षेत्रकालभावेषु प्रतिबद्धाः, तथोत्कटः प्रचुरो रोषो येषां ते तथा, तथा तपसानशनादिभेदभिन्नेन गौरविता वयं तपस्विन इति गर्वाध्मातमानसाः, ये च वैरेण कस्मिंश्चित् प्राणिविशेषे क्रोधानुशयरूपेण प्रतिबद्धा अनुबद्धा द्वीपायन इव तेषामेवंस्वरूपाणां मृत्वाऽसुरेष्वसुरादिषु भवनवासिषु मध्य उपपातो भवति॥ १६०॥

तथा—

रज्जुग्गहणे विसभक्खणे य जलणे य जलपवेसे य। तण्हा छुहा किलंता, मरिऊण हवंति वंतरिया॥१६१॥

व्याख्या—रज्जुग्रहणमुद्बन्धनं, विषभक्षणं प्रतीतं, ज्वलनो वैश्वानरो जलं तोयं तयोः प्रवेशे च काष्ठभक्षणे पानीयमध्ये पाते वा, उपलक्षणमेतद् भृगुप्रपातादौ वा ये म्रियन्ते तथाविधमन्दशुभपरिणामास्ते मृत्वा व्यन्तरा भवन्ति। तथा ये नरास्तृषा क्षुधा वा क्लान्ताः पीडिताः सन्तो मरणमश्नुवते तथाविधमन्दशुभपरिणामोपेताः शूलपाणिप्रभृतय इव तेऽपि व्यन्तरा जायन्ते॥ १६१॥

एतदेव किञ्चिद्विशेषत आह—

रज्जुग्गहणे विसभक्खणे य जलणे य गिरिसिरावडणे। मरिऊण वंतरातो, हविज्ज जइ सोहणं चित्तं १६२

व्याख्या— गतार्था। नवरं यदि शोजनं चित्तमिति यदि नरकादिगतियोग्यमत्यन्तरौद्रमार्तं वा चित्तं न जवतीति ॥१६२॥

**उववाउँ तावसाणं, उक्कोसेणं तु जाव जोइसिया। जावंति बंजलोगो, चरगपरिव्वायउववाउ ॥ १६३ ॥**

व्याख्या—तापसा नाम वनवासिनो मूलकन्दफलाहारास्तेषामुपपात उत्कर्षतो जवति यावज्ज्योतिष्का ज्योतिष्कनिकायः, तत ऊर्ध्वं नोत्पद्यन्त इति जावः। तथा चरका धाटिनिक्षाचराः परिव्राजकाः कपिलमतानुसारिणस्तेषामुत्कर्षत उपपातो यावद् ब्रह्मलोकः ॥ १६३ ॥

**पंचिंदियतिरियाणं, उववाउक्कोसउ सहस्सारे। उववा उँ सावगाणं, उक्कोसेणच्चुउ जाव ॥ १६४ ॥**

व्याख्या—पञ्चेन्द्रियाणां तिरश्चां हस्त्यादीनां सम्यग्दर्शनदेशविरतियुक्तानां तत्प्रजावादुत्कर्षत उपपातो यावत्सहस्रारे जवति। श्रावकाणां तु मनुष्याणां देशविरतिसमन्वितानां तत्प्रजावादुत्कर्षतो यावद् द्वादशोऽच्युतः कल्पस्तावदुपपातो जवति ॥ १६४ ॥

**जे दंसणवावन्ना, लिंगग्गहणं करिंति सामन्ने। तेसिं पि य उववाउ, उक्कोसो जाव गेविज्जे ॥ १६५ ॥**

व्याख्या—य इत्यनिर्दिष्टस्वरूपाः प्राणिनो गृह्यन्ते, दर्शनव्यापन्ना दर्शनात् सम्यग्दर्शनाद्व्यापन्ना व्यतीता दर्शनव्यापन्नाः सम्यक्त्वात् परिभ्रष्टा इत्यर्थः, लिङ्गग्रहणं रजोहरणादिलिङ्गधारणं श्रामण्ये श्रमणजावे श्रमणधर्मे दशप्रकारे क्षान्त्यादिक इत्यर्थः, एतेन किमुक्तं जवति? ये प्रशमसंवेगनिर्वेदानुकम्पास्तिक्याजिव्यक्तिलक्षणसमग्रसम्यक्त्वविकलाः

सन्तः परिपूर्णदशविधचक्रवालसामाचार्यनुष्ठानपरायणा भवन्ति, "तेसिं पि य" इत्यादि, तेषामपि परिपूर्णसामाचारीपरिपालनप्रभावत उत्कर्षेणोपपातो भवति यावद् ग्रैवेयका ग्रैवेयकान्त इत्यर्थः ॥ १६५ ॥

एतदेव किञ्चिद्विशेषतो भावयति—

**उववाओ एएसिं, उक्कोसो होइ जाव गेविज्जा । उक्कोसेण तवेणं, नियमा निग्गंथरूवेणं ॥ १६६ ॥**

व्याख्या—सुगमा । नवरमेतेषामिति दर्शनव्यापन्नानां निर्ग्रन्थरूपेणेति दशविधचक्रवालसामाचारीपरिपालनलक्षणेनेति ॥ १६६ ॥

इह ये दर्शनव्यापन्नास्ते मिथ्यादृष्टयस्तत एतत्प्रसङ्गान्मिथ्यादृष्टिलक्षणमाह—

**पयमक्खरं पि इक्कं, जो न रोएइ सुत्तनिद्दिट्ठं । सेसं रोयंतो वि हु, मिच्छद्दिट्ठी मुणेयव्वो ॥ १६७ ॥**

व्याख्या—सूत्रनिर्दिष्टमेकमपि पदमक्षरं वा यो न रोचयति न स्वचेतसि सत्यमेतदिति परिणमयति, स शेषं सकलमपि द्वादशाङ्गार्थमभिरोचयमानोऽपि मिथ्यादृष्टिर्ज्ञातव्यः, तस्य भगवति जगद्गुरौ प्रत्ययनाशात् ॥ १६७ ॥

अथ किं तत्सूत्रं यद्गतस्य पदस्याक्षरस्य वैकस्याप्यरोचनान्मिथ्यादृष्टिर्भवतीति सूत्रस्वरूपमाह—

**सुत्तं गणहररइयं, तहेव पत्तेयबुद्धरइयं च । सुयकेवलिणा रइयं, अभिन्नदसपुव्विणा रइयं ॥ १६८ ॥**

व्याख्या—यद् गणधरैः सुधर्मस्वामिप्रभृतिभिर्विरचितं यच्च प्रत्येकबुद्धैर्यच्च श्रुतकेवलिना चतुर्दशपूर्वधारिणा यच्चाभिन्नदशपूर्विणा परिपूर्णदशपूर्वधारिणा विरचितं तदेतत्सर्वं सूत्रमिति ॥ १६८ ॥

सम्प्रति चतुर्दशपूर्वधरस्योपपातं जघन्यत उत्कर्षतश्च कथयति—

**उववाओ लंतगम्मि उ, चउदसपुव्विस्स होइ उ जहन्नो। उक्कोसो सव्वट्ठे, सिद्धिगमो वा अकम्मस्स॥१६९॥**

व्याख्या—सुगमा ॥ १६९ ॥

**छउमत्थसंजयाणं, उववाउक्कोसओ उ सव्वट्ठे। भवणवणजोइवेमाणियाण एसो कमो भणिओ ॥१७०॥**

व्याख्या—छाद्यते यथावस्थितमात्मनः स्वरूपं येन तच्छद्म ज्ञानावरणीयादि कर्म तस्मिन् तिष्ठन्तीति छद्मस्थाः, ते च ते संयताश्च तेषामुत्कर्षत उपपातः सर्वार्थे सर्वार्थसिद्धे महाविमाने त्रैलोक्यतिलकभूते भवति। तदेवं भवनपतिव्यन्तरज्योतिष्कवैमानिकानां भवनपतिव्यन्तरज्योतिष्कवैमानिकेषु मध्य उत्कर्षत एष उपपातक्रमो भणितः, अधुना जघन्यतोऽभिधीयत इति शेषः ॥ १७० ॥

तमेवाह—

**अविराहियसामण्णस्स साहुणो सावगस्स य जहन्नो। सोहम्मे उववाओ, भणिओ तेलुक्कदंसीहिं ॥ १७१ ॥**

व्याख्या—साधोरविराधितश्रामण्यस्याखण्डितसर्वविरतिरूपचारित्रस्य श्रावकस्य चाविराधितश्रामण्यस्याखण्डितयथागृहीतदेशचारित्रस्य जघन्य उपपातो भणितस्त्रैलोक्यदर्शिभिस्तीर्थकरैः सौधर्मे सौधर्मदेवलोके ॥ १७१ ॥

**सेसाण तावसाईण जहन्नो वंतरेसु उववाओ। भणिओ जिणेहिं सो पुण, नियकिरियठिआण विन्नेओ॥१७२॥**

व्याख्या—शेषाणां तापसादीनां तापसचरकपरिव्राजकादीनां जघन्य उपपातो जिनैस्तीर्थंकरैर्भणितो व्यन्तरेषु व्यन्तरनिकायमध्ये, स पुनर्व्यन्तरेषु मध्ये तेषामुपपातो विज्ञेयो निजक्रियास्थितानां निजनिजागमप्रतिपादिताचारपरिपालनरतानां, न तु स्वाचारपरिभ्रष्टानामिति ॥ १७२ ॥

अथ योऽयं बालप्रभृतिभिः कारणैर्भवनपत्यादिष्वनुत्तरपर्यवसानेषु भणित उपपातः, स किं सर्वदा सर्वेषामुत नेति ? उच्यते—न सर्वदा न सर्वेषां, किं तु संहननविशेषयुक्तानां, अतस्तान्येव संहननानि प्ररूपयति—

**वज्जरिसहनारायं, पढमं बीयं च रिसहनारायं । नारायमद्धनारायं कीलिआ तह य छेवट्ठं ॥ १७३ ॥**

व्याख्या—प्रथमं संहननं वज्रर्षभनाराचं, द्वितीयमृषभनाराचं, तृतीयं नाराचं, चतुर्थमर्धनाराचं, पञ्चमं कीलिका, षष्ठं सेवार्तं । तत्र वज्रं कीलिका, ऋषभः परिवेष्टनपट्टः, नाराचमुभयतो मर्कटबन्धः ॥ १७३ ॥

तथा चाह—

**रिसहो अ होइ पट्टो, वज्जं पुण कीलिया मुणेयव्वा । उभओ मक्कडबंधं, नारायं तं वियाणाहि ॥ १७४ ॥**

व्याख्या—सुगमा । ततो द्वयोरस्थ्नोरुभयतो मर्कटबन्धेन बद्धयोः पट्टाकृतिना तृतीयेनास्थ्ना परिवेष्टितयोरुपरि तदस्थित्रयभेदि कीलिकाख्यं वज्रनामकमस्थि यत्र भवति, तद्वज्रर्षभनाराचसंज्ञं प्रथमं संहननम् । यत् पुनः कीलिकारहितं संहननं भवति, तदृषभनाराचं द्वितीयं संहननम् । यत्र त्वस्थ्नोर्मर्कटबन्ध एव केवलो भवति, तन्नाराचसंज्ञं तृतीयं संहननम् । यत्र पुनरेकपार्श्वे मर्कटबन्धो द्वितीयपार्श्वे च कीलिका तदर्धनाराचसंज्ञं चतुर्थं संहननम् । तथा यत्रास्थीनि

कीलिकामात्रबद्धान्येव भवन्ति, तत् कीलिकाख्यं पञ्चमं संहननम्। यत्र पुनः परस्परं पर्यन्तमात्रसंस्पर्शलक्षणां सेवामागतान्यस्थीनि भवन्ति, नित्यमेव च स्नेहाभ्यङ्गादिरूपां परिशीलनामपेक्षन्ते, तत्सेवार्तं षष्ठं संहननमिति ॥ १७४ ॥

संहननं च संस्थानाविनाभावि, ततः संस्थानानि प्ररूपयति—

**समचउरंसे निग्गोहमंडले साइवामणे खुज्जे। हुंडे वि य संठाणा, जीवाणं छ मुणेयव्वा ॥ १७५ ॥**

व्याख्या—जीवानां षट् संस्थानानि भवन्ति, तद्यथा—समचतुरस्रं, न्यग्रोधमण्डलं, सादि, वामनं, कुब्जं, हुण्डमिति। तत्र समाः सामुद्रिकशास्त्रोक्तप्रमाणलक्षणाविसंवादिन्यश्चतस्रोऽस्रयश्चतुर्दिग्विभागोपलक्षिताः शरीरावयवा यत्र तत्समचतुरस्रं संस्थानं, समासान्तोऽत्प्रत्ययः। न्यग्रोधवत्परिमण्डलं यस्य तन्न्यग्रोधपरिमण्डलं, यथा न्यग्रोध उपरि सम्पूर्णप्रमाणोऽधस्तु हीनस्तथा यत् संस्थानं नाभेरुपरि सम्पूर्णप्रमाणमधस्तु न तथा तन्न्यग्रोधपरिमण्डलमित्यर्थः। तथाऽऽदिरिहोत्सेधाख्यो नाभेरधस्तनो देहभागो गृह्यते, ततः सहादिना नाभेरधस्तनभागेन यथोक्तप्रमाणलक्षणेन वर्तत इति सादि। यद्यपि च सर्वमपि शरीरमादिना सह वर्तते, तथापि सादित्वविशेषणान्यथानुपपत्त्या विशिष्ट एव प्रमाणलक्षणोपपन्न आदिरिह लभ्यते, तत उक्तं यथोक्तप्रमाणलक्षणेनेति। इदमुक्तं भवति—यत् संस्थानं नाभेरधः प्रमाणोपपन्नमुपरि च हीनं तत्सादीति। तथा यत्र शिरोग्रीवं हस्तपादादिकं च यथोक्तप्रमाणलक्षणोपेतमुरउदरादि च मडभं तद्वामनं संस्थानं। यत्र पुनरुरउदरादि प्रमाणलक्षणोपेतं हस्तपादादिकं (च) हीनं तत् कुब्जं संस्थानं। यत्र तु सर्वेऽप्यवयवाः प्रमाणलक्षणपरिभ्रष्टास्तत् हुण्डं संस्थानम् ॥ १७५ ॥

एतदेव संस्थानव्याख्यानमाह—

तुल्लं विञ्चरबहुलं, उस्सेहबहुं च मडहकोठं च । हेठिल्लकायमडहं सव्वत्थासंठियं हुंडं ॥ १७६ ॥

व्याख्या—समचतुरस्रं संस्थानं तुल्यं सर्वासु दिक्षु शास्त्रोक्तेन प्रकारेण समप्रमाणं । न्यग्रोधमण्डलं नाभेरुपरि विस्तृतबहुलं विस्तारबहुलं । सादिसंस्थानमुत्सेधबहूत्सेधबहुलं प्रमाणोपपन्नोत्सेधमित्यर्थः । वामनं मडहकोष्ठं मडहो न्यूनाधिकप्रमाणः कोष्ठो यत्र तन्मडहकोष्ठं परिपूर्णप्रमाणपाणिपादशिरोग्रीवाद्यवयवं न्यूनाधिकप्रमाणकोष्ठं वामनमित्यर्थः । कुब्जमधस्तनकायमडहमधस्तनाः पाणिपादशिरोग्रीवादिरूपा अवयवा मडहा यस्य तत्तथा यत् प्रमाणहीनहस्तपादशिरोग्रीवाद्यवयवं परिपूर्णप्रमाणकोष्ठं तत् कुब्जमित्यर्थः । अन्ये तु वामनकुब्जयोर्व्यत्यासेन लक्षणं प्रतिपेदिरे, अधस्तनकायमडहं वामनं मडहकोष्ठं कुब्जमिति । तथा सर्वत्र सर्वेषु शरीरावयवेष्वसंस्थितं न शास्त्रोक्तेन प्रमाणेन संस्थितं तत् हुण्डं हुण्डसंस्थानमिति ॥ १७६ ॥

अथ कानि संस्थानानि केषु जीवेषु भवन्तीत्येतन्निरूपयति—

समचउरंसे निग्गोह साइ खुज्जा य वामणा हुंडा । पंचिंदियतिरियनरा, सुरा समा हुंडया सेसा ॥ १७७ ॥

व्याख्या—पञ्चेन्द्रियतिर्यञ्चो नराश्च यथायोगं षड्भिरपि संस्थानैः परिकलिताः । तथाहि—केचित्समचतुरस्राः समचतुरस्रसंस्थानोपेताः, केचिन्न्यग्रोधपरिमण्डलाः, केचित्सादिसंस्थानाः, केचिद्वामनाः, केचित् कुब्जाः, केचिद्धुण्डाः ।

सुरा देवाः पुनः सर्वेऽपि समाः समचतुरस्रसंस्थानोपेताः । शेषा एकेन्द्रियादयश्चतुरिन्द्रियपर्यवसाना नारकाश्च हुण्मा हुण्रूसंस्थानाः ॥ १७७ ॥

सम्प्रति कति संहननानि केषु जीवेषु नवन्तीत्येतन्निरूपयति—

**नरतिरिश्राणं ठप्पिय, हवंति विगलेंदियाण ठेवठं। सुरनेरइश्रा एगिंदिया य सव्वे असंघयणी ॥ १७८ ॥**

व्याख्या—नराणां मनुष्याणां तिरश्चां च पञ्चेन्द्रियाणां षडपि वज्रर्षभनाराचप्रभृतीनि संहननानि नवन्ति । विकलेन्द्रियाणां द्वित्रिचतुरिन्द्रियाणां सेवार्तं । ये तु सुरा नवनवास्यादयो देवा ये च नैरयिका ये चैकेन्द्रियास्ते सर्वेऽप्यसंहनिनः संहननरहिताः, संहननं हि नामास्थिरचनाविशेषो, न च तेषामस्थीनि सन्तीति नावः ॥ १७८ ॥

सम्प्रति कस्य संहननस्य प्रन्नाववशात्केषु देवेषु मध्य उत्पद्यत इत्येतन्निरूपयति—

**ठेवठेण उ गम्मइ, चत्तारि श्र जाव श्राइमा कप्पा। वड्डिज्ज कप्पजुश्रलं संघयणे कीलियाइए ॥ १७९ ॥**

व्याख्या—सेवार्तेन सेवार्ताख्येन षष्ठेन संहननेन, तुर्विशेषणे, स च "परिणामविसुद्धीए, देवाउश्रकम्मबंधजोगाए" इत्यादि विशिनष्टि, गम्यंते यावदादिमाः सौधर्मेशानसनत्कुमारमाहेन्द्राख्याः कल्पाः, यावदिति सीमाकरणाच्च नवनपत्यादिष्ववाक्तनेषु गच्छन्त्येवेति लभ्यते । ततः कीलिकादिके संहनने प्रत्येकं कल्पयुगलं वर्धयेद् यावदृषभनाराचं संहननं, यथा—कीलिकाख्येन संहननेन ब्रह्मलोकलान्तकौ यावद्गम्यते, अर्धनाराचसंज्ञेन संहननेन महाशुक्रसहस्रारकल्पौ यावत्,

नाराचसंहननेनानतप्राणतकल्पौ यावत्, ऋषभनाराचेनारणाच्युतकल्पौ, कल्पानामुपरि ग्रैवेयकानुत्तरविमानेषु पुनरवशिष्टेन वज्रर्षभनाराचसंहननेन गम्यते ॥ १७९ ॥

उक्तं सप्रपञ्चं सुराणां गतिद्वारं, सम्प्रति ते देवाः स्वस्थानाच्च्युताः कस्यां गतावागच्छन्तीत्येतन्निरूपणारूपमागतिद्वारमाह—

**पुढवीआउवणस्सइगप्भे पज्जत्त संखजीवीसु । सग्गचुआणं वासो, सेसा पडिसेहिया ठाणा ॥ १८० ॥**

व्याख्या—स्वर्गाद् भवनपत्यावासादिरूपाच्चतुर्विधाद् देवलोकाच्च्युतानां देवानां वासो वसनमुत्पत्तिरित्यर्थः, पृथिवीकायेऽप्काये वनस्पतिकाये तथा गर्भव्युत्क्रान्तेषु "पज्जत्त त्ति" विभक्तिलोपात् पर्याप्तेषु पृथिव्यादिषु सर्वेष्वपि सङ्ख्यातवर्षजीविषु तिर्यङ्मनुष्येषु भवति, शेषाणि पुनः स्थानानि तेजस्कायवायुकायद्वित्रिचतुरिन्द्रियसंमूर्च्छिमपञ्चेन्द्रियदेवनारकरूपाणि प्रतिषिद्धानि तीर्थंकरगणधरैः ॥ एष च विशेषोऽवगन्तव्यः—"वायरपज्जत्तेसुं, सुराण भूदगवणेसु उप्पत्ती । ईसाणंताणं चिय, तह वि न उ उड्ढगाणं पि ॥१॥" तथा—"आणयपभिईहिंतो, जा णुत्तरवासिणो उ चविऊणं । मणुएसुं चिय जायइ, नियमा संखेज्जजीवीसु ॥ १ ॥" ॥ १८० ॥

आह—किमेतेषां देवानां देव्युपभोगो भवति किं वा न ? उच्यते—केषाञ्चिद्भवति केषाञ्चिन्न । तत्र येषां यथा भवति, येषां च सर्वथा न, तांस्तथा दर्शयति—

**दो कायप्पवियारा, कप्पा फरिसेण दोन्नि दो रूवे । सद्दे दो चउर मणे, उवरिं पवियारणा नत्थि ॥ १८१ ॥**

व्याख्या—द्वौ प्रथमौ सौधर्मेशाननामानौ कल्पौ कायप्रवीचारौ तात्स्थ्यात्तद्व्यपदेश इति सौधर्मेशानदेवाः कायप्रवी-

चाराः कायेन शरीरेण मनुष्यस्त्रीपुंसानामिव प्रवीचारो मैथुनोपसेवनं येषां ते तथा । द्वौ चेमावादिमौ कल्पौ मर्यादार्थौ, तेन किमुक्तं भवति ? भवनपत्यादय ईशानदेवलोकपर्यन्ताः संक्लिष्टोदर्कपुरुषवेदकर्मप्रभावतो मनुष्यवन्मैथुनसुखमनुप्रलीयमानाः सर्वाङ्गीणं कायक्लेशजं संस्पर्शसुखमवाप्य प्रीतिमासादयन्ति, नान्यथेति । ततः परौ द्वौ कल्पौ सनत्कुमारमाहेन्द्ररूपौ स्पर्शेन स्तनभुजोरुजघनादिगात्रसंस्पर्शतः प्रवीचारवन्तौ, अत्रापि तात्स्थ्यात्तद्व्यपदेश इति न्यायात्सनत्कुमारमाहेन्द्रदेवाः स्पर्शप्रवीचारा इति प्रतिपत्तव्यं, तथाहि—सनत्कुमारमाहेन्द्रदेवाः प्रवीचाराभिलाषुकतया देवीनां स्तनाद्यवयवानां संस्पर्शेन कायप्रवीचारादनन्तगुणं सुखमनुभुञ्जते तृप्ताश्च भवन्ति । देवीनामपि च तया संस्पर्शे दिव्यप्रभावतः शुक्रपुद्गलसंचारतोऽनन्तगुणं सुखमुपजायते । तथोपरितनौ द्वौ कल्पौ ब्रह्मलोकलान्तकाभिधानौ रूपेण रूपमात्रदर्शनेन प्रवीचारवन्तौ, ब्रह्मलोकलान्तकदेवा हि सुरसुन्दरीणां मनोभवराजधानीस्थानीयं दिव्यमुन्मादजनकं रूपमुपलभ्य कायप्रवीचारादनन्तगुणं सुरतसुखमासादयन्ति तृप्ताश्च जायन्ते । देवीनामपि च तैस्तथारूपावलोकने दिव्यप्रभावतः शुक्रपुद्गलसङ्क्रमेण कायप्रवीचारादनन्तगुणमुपजायते कामसुखं । तत उपरितनौ द्वौ कल्पौ शब्दे शब्दमात्रश्रवणेन प्रवीचारवन्तौ प्रवीचारेच्छाविषयीकृतदेवीसत्कगीतहसितसविकारभाषितनूपुरादिदिव्यध्वनिश्रवणमात्रत एव तत्रत्यदेवानां कायप्रवीचारादनन्तगुणसुखमुद्भवति । देवीनामपि च दिव्यप्रभावतः शरीरेषु शुक्रपुद्गलसङ्क्रमतो महत्सुखमुपजायत इति भावः । तथोपरितनाश्चत्वार आनतप्राणतारणाच्युतकल्पवास्तव्या देवा मनसा प्रवीचारवन्तः, ते हि यदा प्रवीचारेच्छया देवीर्मनसो विषयीकुर्वन्ति, तदैव ताः कृताद्भुतशृङ्गारा मनसैव स्वस्थानस्थिता एवोच्चावचानि मनांसि संप्रधारयन्त्यो

भोगायोपतिष्ठन्ते । तत इत्थं परस्परं मनःसंकल्पे दिव्यप्रभावतो देवीषु शुक्रपुद्गलसङ्क्रमत उभयेषां कायप्रवीचारादनन्तगुणं सुखमुपजायते तृप्तिश्चोल्लसति । तत उपरि ग्रैवेयकादिषु प्रवीचारणा नास्ति, अत्यन्तमन्दपुरुषवेदोदयत्वात् । एते च यथोत्तरमनन्तगुणसुखभाजः । तथाहि—कायप्रवीचारेभ्योऽनन्तगुणसुखाः स्पर्शप्रवीचाराः, तेभ्योऽप्यनन्तगुणसुखा रूपप्रवीचाराः, तेभ्योऽप्यनन्तगुणसुखाः शब्दप्रवीचाराः, तेभ्योऽप्यनन्तगुणसुखा मनःप्रवीचाराः, तेभ्योऽप्यनन्तगुणसुखा अप्रवीचारास्तेषां प्रतनुमोहोदयतया प्रशमसुखान्तर्लीनत्वात् । यद्येवं कथं न ते ब्रह्मचारिण इति ? उच्यते—चारित्रपरिणामाभावात् ॥ १७१ ॥

अनन्तगुणसुखयुक्तत्वमेव तेषां शेषदेवेभ्यः प्रकटयति—

तत्तो परं तु देवा, बोधव्वा हुंति अप्पवीयारा । सप्पविआरठिईणं अनंतगुणसोक्खसंजुत्ता ॥ १७२ ॥

व्याख्या—ततस्तस्मादच्युतदेवलोकात्परमूर्ध्वं ये देवास्तेऽप्रवीचाराः प्रवीचाररहिता बोद्धव्याः, ते च सप्रवीचारस्थितिभ्यः सकाशादनन्तगुणसौख्यसंयुक्ताः, प्रवीचारसुखादुपशमसुखस्यानन्तगुणत्वात् ॥ १७२ ॥

तदेवाह—

जं च कामसुहं लोए, जं च दिव्वं महासुहं । वीयरायसुहस्सेयं, णंतभागं पि नग्घइ ॥ १७३ ॥

व्याख्या—सुगमा ॥ १७३ ॥

सम्प्रति देवदेवीनामुत्पत्तिस्थानमाह—

**आईसाणा कप्पे, उववाओ होइ देवदेवीणं । तत्तो परं तु नियमा, देवीणं नत्थि उववाओ ॥ १७४ ॥**

व्याख्या—आईशानादीशानकल्पमभिव्याप्य, किमुक्तं भवति ? भवनपतिव्यन्तरज्योतिष्कसौधर्मेशानेषु देवानां देवीनां चोपपातो जन्म भवति । तत ईशानकल्पात् परमूर्ध्वं सनत्कुमारादिषु कल्पेषु देवीनामुपपातो नास्ति, किंतु देवानामेव केवलानां । केवलं सनत्कुमारादिदेवानां रताभिलाषे सति देव्यः स्वल्पपरिगृहीताः सौधर्मादीशानाच्चासहस्रारं यावद्गच्छन्ति ॥ १७४ ॥

सम्प्रति गमनागमनपरिमाणमेव देवदेवीनां कथयति—

**आरेण अच्चुआओ,गमणागमणं तु देवदेवीणं । तत्तो परंतु नियमा,उभएसिं नत्थि तं कह वि ॥१७५॥**

व्याख्या—आरेण अर्वागच्युतादच्युतकल्पपर्यन्तादच्युतं कल्पं यावदित्यर्थः, गमनमागमनं च देवानां देवीनां च भवति। यद्यप्येवं सामान्येनोक्तं तथापि देवीनां सहस्रारं कल्पं यावद्गमनमागमनं चावसेयं, न परतः, यत आनतादिदेवाः प्रवीचारेच्छायां स्थानस्थिता एव देवीः संकल्पविषयीकुर्वन्ति, स्थानस्थिताभिरेव च ताभिर्मनःप्रवीचारणां कुर्वन्ति । तथा चोक्तं प्रज्ञापनायां—"तत्थ णं जे ते मणपरियारगा देवा तेसिं इच्छा मणे समुप्पज्जइ इच्छामि णं अच्छराहिं मणपरिआरणं करित्तए । तओ णं तेहिं देवेहि एवं मणसी कए समाणे खिप्पामेव ताओ अच्छराओ तत्थगयाओ चेव समाणीओ अणुत्तराइं उच्चावयाइं मणाइं संपहारेमाणीओ संपहारेमाणीओ चिट्ठंति । तओ णं ते देवा ताहिं अच्छराहिं सद्धिं मणपरियारणं

करिंति" इत्यादि । ततो न प्रवीचारणनिमित्तमानतादिषु कल्पेषु देवीनां गमनागमनसंभवः, नाप्यन्यतः कारणान्तरात्, इति सहस्रारं कल्पं यावद्देवीनां गमनागमने । तथा चास्या एव सङ्ग्रहणेर्मूलटीकाकारोऽप्याह हरिभद्रसूरिः—"देव्यः खल्वपरिगृहीताः सहस्रारं यावद्गच्छन्तीति । "तत्तो परं तु" इत्यादि, ततोऽच्युतकल्पात् परमूर्ध्वं नियमाद्भजनेषां देवानां देवीनां च गमनमागमनं च कथमपि नास्ति, तत्रार्वाक्तनानामूर्ध्वं शक्त्यभावात् गमनागमनप्रतिषेधः । तत्रत्यानां त्विहागमने प्रयोजनाभावात्, ते हि जिनजन्ममहिमादिष्वपि नात्रागच्छन्ति, किंतु स्थानस्थिता एव भक्तिमातन्वते संशयविषयं च स्थानस्थिताः पृच्छन्ति, पृष्टं चार्थं भगवता व्याकृतमवधिज्ञानतो भगवत्प्रयुक्तानि मनोद्रव्याणि साक्षादेवावेत्य तदाकारान्यथानुपपत्त्या परिभावयन्ति । न चान्यत्प्रयोजनान्तरमस्ति, ततस्तेषामिहागमनासंभवः ॥ १०५ ॥

अथ ये वैमानिकाः किल्बिषिका देवास्तेषां कियती स्थितिः ? क्व वा तेषां निवासाः ? इत्येतदभिधित्सुराह—

**तिन्नि पलिया तिसारा, तेरससारा य किब्बिसा भणिया । सोहम्मीसाणसणंकुमारलंतस्स हिट्ठाउ ॥१०६॥**

व्याख्या—किल्बिषाः किल्बिषिका देवास्तीर्थकरगणधरैस्त्रिषु स्थानेषु भणिताः । तद्यथा—सौधर्मेशानयोरधस्तात् सनत्कुमारकल्पस्याधस्ताल्लान्तककल्पस्याधस्ताच्च, ते च यथासङ्ख्यं त्रिपल्याद्दिस्थितयः । किमुक्तं भवति ! सौधर्मेशानयोरधस्ताद्ये किल्बिषिका देवास्ते त्रिपल्योपमस्थितयः । सनत्कुमारकल्पस्याधस्तात्त्रिसागरोपमायुषः । लान्तककल्पस्याधस्तात्त्रयोदशसागरोपमायुष इति ॥ १०६ ॥

साम्प्रतमाभियोगिकानां किल्बिषिकाणां चोत्पत्तिस्थाननियममाह—

**कप्पेसु आभियोगा देवा उवरिं न आरणचुयओ। लंतगउवरि नियमा, न हुंति देवा उ किब्बिसिया ॥१८७**

व्याख्या—आभियोग्या आभियोगिका देवाः कल्पेषु द्वादशस्वप्युत्पद्यन्ते, आरणाच्युतयोरुपरि तु सर्वथा नेति। तथा लान्तककल्पस्योपरि किल्बिषिका देवा नियमान्न भवन्ति, तथास्वाभाव्यात् ॥ १८७ ॥

इह सनत्कुमारादिदेवानां रताभिलाषे सति देव्यः खल्वपरिगृहीताः सौधर्मादीशानाच्च सहस्रारं यावद्गच्छन्ति, तासां चापरिगृहीतानां देवीनामुत्पत्तिविमानानि पृथगेव, न तत्र देवा उत्पद्यन्ते, ततस्तत्सङ्ख्याप्रतिपादनार्थमाह—

**सोहम्मि विमाणाणं, छच्चेव हवंति सयसहस्साइं। चत्तारि य ईसाणे, अपरिग्गहिआण देवीणं ॥१८८॥**

व्याख्या—सौधर्मकल्पेऽपरिगृहीतानां देवीनां संबन्धीनि यानि विमानानि तेषां षट् शतसहस्राणि, ईशाने कल्पेऽपरिगृहीतानां देवीनां संबन्धिनां विमानानां चत्वारि शतसहस्राणि ॥ १८८ ॥

सम्प्रति या यथाविधायुष्कादियुक्ता येषामुपभोगाय भवन्ति तास्तथा निरूपयति—

**पलिओवमाइ समयाहिआ ठिई जासि जाव दस पलिया। सोहम्मगदेवीसुं, ताओ उ सणंकुमाराणं ॥१८९**

व्याख्या—यासां सौधर्मकल्पनिवासिनीनां देवीनां स्थितिः पल्योपमादिका पल्योपममूला समयाधिका समयैकद्वित्र्यादिकैर्यावदसङ्ख्येयैरधिका सती यावद्दशपल्योपमा दशपल्योपमप्रमाणा ताः सौधर्मकल्पनिवासिन्यो देव्यः सनत्कुमाराणां सनत्कुमारकल्पदेवानामुपभोगयोग्याः। इयमत्र भावना—यासां सौधर्मकल्पदेवीनामेकं परिपूर्णं पल्योपम-

मायुस्ताः सौधर्मकल्पदेवानामेवोपभोगयोग्याः । यासां तु पल्योपमं समयाधिकं द्विसमयाधिकं त्रिसमयाधिकं सङ्ख्येयसमयाधिकमसङ्ख्येयसमयाधिकं यावद्यासां परिपूर्णानि दश पल्योपमानि ताः सर्वा अपि सनत्कुमारकल्पदेवानामुपभोगयोग्याः, उपरितनास्तु देवास्ताः सर्वथा नेच्छन्ति, तथास्वाभाव्यादिति ॥ १८९ ॥

**एएण कमेण भवे, समयाहिय दसगपलिअवुड्ढीए । बंभमहासुक्काणयआरणदेवाण पन्नासा ॥ १९० ॥**

व्याख्या—एतेनानन्तरोक्तेन क्रमेण परिपाट्या समयैरेकद्वित्र्यादिकैर्यावदसङ्ख्येयैरधिकानि दश पल्योपमानि तेषामुपरि समयवृद्धितो या पल्योपमदशकवृद्धिस्तया हेतुभूतया ब्रह्मलोके महाशुक्र आनतकल्प आरणकल्पे च वास्तव्यानां देवानामुपभोगयोग्या द्रष्टव्या यावदारणकल्पवास्तव्यदेवोपभोगयोग्यदेवीनां स्थितिः पञ्चाशत्पल्योपमानि भवन्ति । इयमत्र भावना—याः सौधर्मकल्पवासिन्यो देव्यः समयाद्यधिकदशपल्योपमस्थितयो यावद्विंशतिपल्योपमस्थितिकास्ता ब्रह्मलोकदेवानामुपभोगयोग्याः, यास्तु समयाद्यधिकविंशतिपल्योपमस्थितयो यावत्त्रिंशत्पल्योपमस्थितिकास्ता महाशुक्रकल्पदेवानामुपभोगयोग्याः, यास्तु समयाद्यधिकत्रिंशत्पल्योपमस्थितयो यावच्चत्वारिंशत्पल्योपमस्थितिकास्ता आनन्तकल्पदेवानां तत्र स्थिता एव प्रवीचारणाप्रवृत्तमनोव्यापारावलम्बनं भवन्ति, यास्तु समयाद्यधिकचत्वारिंशत्पल्योपमस्थितयो यावत्पञ्चाशत्पल्योपमस्थितिकास्ता आरणकल्पवास्तव्यानां देवानां तत्रस्था एव चित्तालम्बनं भवन्ति ॥ १९० ॥

तदेवमुक्तः सौधर्मदेवीनामपरिगृहीतानां विधिरधुनेशानदेवीनां प्रतिपादयति—

**साहिअपलिया समयाहिआ ठिई जासि जाव पन्नरसा । ईसाणगदेवीउ ताउ माहिंददेवाणं ॥ १९१ ॥**

व्याख्या—यासामीशानदेवलोकवास्तव्यानां देवीनां स्थितिः साधिकपल्योपमा समयाधिका समयैरेकद्वित्र्यादिभिर्या-वदसङ्ख्येयैरधिका यावद्यासां परिपूर्णानि पञ्चदशपल्योपमानि ता माहेन्द्रकल्पवास्तव्यानां देवानामुपभोगयोग्याः। इय-मत्र भावना—यासां साधिकपल्योपमायुःस्थितिस्ता ईशानकल्पवास्तव्यानामेव देवानां योग्याः। आह च मूलटीकाकारो हरिभद्रसूरिः—"ईसाणे जासिं देवीणं पलिओवममहियमाउगं ताओ तद्देवाणं चेव हवंति त्ति"। यासां तु साधिकं पल्योपमं समयाधिकं द्विसमयाधिकं त्रिसमयाधिकं सङ्ख्येयसमयाधिकमसङ्ख्येयसमयाधिकं यावद्यासां परिपूर्णानि पञ्चदश पल्योपमानि ताः सर्वा अपि माहेन्द्रकल्पदेवानामुपभोगं गच्छन्ति ॥ १९१ ॥

**एएण कमेण भवे, समयाहियदसगपलियवुड्ढीए। लंतसहस्सारपाणयअचुअदेवाण पणपन्ना ॥ १९२ ॥**

व्याख्या—एतेनानन्तरोक्तक्रमेण समयैरेकद्वित्र्यादिकैर्यावदसङ्ख्येयैरधिकैर्यानि यानि जायन्ते दश पल्योपमानि तेषां वृद्ध्या हेतुभूतया लान्तके सहस्रारे प्राणतेऽच्युते च देवानामुपभोगाय तावद्वेदितव्या यावद्देवीनां पञ्चपञ्चाशत् पल्यो-पमानि स्थितिः। इयमत्र भावना—या ईशानदेवलोकभाविन्यो देव्यः समयाद्यधिकपञ्चदशपल्योपमस्थितयो यावत् पञ्च-विंशतिपल्योपमस्थितिकास्ता लान्तककल्पदेवानामुपभोगयोग्याः। यास्तु समयाद्यधिकपञ्चविंशतिपल्योपमस्थितयो याव-त्पञ्चत्रिंशत्पल्योपमस्थितिकास्ताः सहस्रारकल्पदेवानामुपभोगयोग्या भवन्ति। यास्तु समयाद्यधिकपञ्चत्रिंशत्पल्योपम-स्थितयो यावत्पञ्चचत्वारिंशत्पल्योपमस्थितिकास्ताः प्राणतकल्पदेवानां तत्र स्थिता एव प्रवीचारप्रवृत्तमनोविषया

भवन्ति । यास्तु समयाद्यधिकपञ्चचत्वारिंशत्पल्योपमस्थितयो यावत्पञ्चपञ्चाशत्पल्योपमस्थितयस्तास्तत्रस्था एवाच्युतकल्पदेवानां चित्तालम्बनं भवन्ति ॥ १९२ ॥

सम्प्रति देवाधिकारप्रक्रम एव प्रसङ्गतो देवानां लेश्या अभिधित्सुराह—

**किण्हा नीला काऊ तेऊ लेसा य भवणवंतरिया । जोइससोहम्मीसाण तेऊ लेसा मुणेयव्वा ॥ १९३ ॥**

व्याख्या—लिश्यते श्लिष्यते जीवः कर्मणा सहानयेति लेश्या कृष्णादिद्रव्यसाचिव्यादात्मनः शुभाशुभरूपः परिणामविशेषः । उक्तं च—"कृष्णादिद्रव्यसाचिव्यात्परिणामो य आत्मनः । स्फटिकस्येव तत्रायं लेश्याशब्दः प्रवर्तते ॥ १ ॥" तत्र पदैकदेशे पदसमुदायोपचारात् "भवण त्ति" भवनवासिनो व्यन्तराश्च यथासंभवं कृष्णनीलकापोततेजोलेश्याः । तत्रापि परमाधार्मिकाः कृष्णलेश्याः । तथा ज्योतिष्काः सौधर्मेशानदेवाश्च तेजोलेश्याः, सा च तेजोलेश्याऽमीषामुपर्युपरि विशुध्यमानाऽवगन्तव्या । इदं च प्राचुर्यमधिकृत्योच्यते, यावता पुनः षडपि लेश्याः प्रतिनिकायं यथासंभवं प्रतिपत्तव्याः । आह च तत्त्वार्थटीकाकारो हरिभद्रसूरिः—"भावलेश्याः षडपीष्यन्ते देवानां प्रतिनिकायमिति" ॥ १९३ ॥

तथा—

**कप्पे सणंकुमारे, माहिंदे चेव बंभलोए अ । एएसु पम्हलेसा, तेण परं सुक्कलेसा उ ॥ १९४ ॥**

व्याख्या—कल्पे सनत्कुमारे माहेन्द्रे ब्रह्मलोके चैतेषु त्रिषु कल्पेषु देवाः पद्मलेश्याः, केवलमुपर्युपरितना विशुध्यमानलेश्याका वेदितव्याः । "तेण परं सुक्कलेसा उ त्ति" ततो ब्रह्मलोकात्परमूर्ध्वं लान्तकादिषु कल्पेषु ग्रैवेयकादिषु च देवाः

शुक्ललेश्याः, सा च शुक्ललेश्या यथोत्तरं विशुध्यमाना प्रतिपत्तव्या यावदनुत्तरवैमानिका इति । इह केचिद्व्याचक्षते—किलैता देवानां लेश्या बाह्यवर्णरूपा द्रव्यलेश्याः प्रतिपत्तव्या इति, तदयुक्तं, अमीषां (अमूषां) भावलेश्यानामेव सूत्रकृता विवक्षितत्वात् । यथा चामूर्भावलेश्या भवन्ति तथा नारकलेश्याभिधानप्रस्तावे प्रतिपादयिष्यते । किं च यद्येता बाह्यवर्णरूपा द्रव्यलेश्या भवेयुस्तर्हि यदनन्तरमेव देवानां बाह्यवर्णप्रतिपादनं करिष्यत्याचार्यस्तदनर्थकतामश्नुवीत, तस्माद्भावलेश्या एवैता इति ॥ १९४ ॥

सम्प्रति वैमानिकदेवानां वर्णविभागमाह—

**कणगत्तयरत्ताभा, सुरवसभा दोसु होंति कप्पेसु । तिसु होंति पम्हगोरा, तेण परं सुक्किला देवा ॥१९५॥**

व्याख्या—द्वयोरादिमयोः कल्पयोः सौधर्मेशानरूपयोः सुरवृषभा भवन्ति कनकत्वग्रक्ताभाः कनकत्वगिव रक्ताऽऽभा छाया येषां ते तथा त्रिषु सनत्कुमारमाहेन्द्रब्रह्मलोकेषु देवाः पद्मगौराः पद्मपक्ष्मगौराः पद्मकेसरतुल्यावदातवर्णा इत्यर्थः । ततो ब्रह्मलोकात् परमूर्ध्वं लान्तकादिष्वनुत्तरविमानपर्यवसानेषु शुक्ला यथोत्तरं शुक्लशुक्लतरशुक्लतमावदातवर्णा देवाः । आह—नन्वेवं सति सूत्रेण सह विरोधः, यत एवमुक्तं जीवाभिगमे—"सोहम्मीसाणेसु णं भंते ! देवाणं सरीरगा केरिसया वन्नेणं पन्नत्ता ? गोयमा ! कणगत्तयरत्ताभा । सणंकुमारमाहिंदेसु णं भंते ! देवाणं सरीरगा केरिसया वन्नेणं पन्नत्ता ? गोयमा ! पम्हगोरा । बंभलोयलंतएसु णं पुच्छा, गोयमा ! अल्लमहुयपुप्फवण्णाभा । सेसेसु पुच्छा, गोयमा ! सेसेसु सुक्किल त्ति । उच्यते, न विरोधः सूत्रेण, यतो ब्रह्मलोककल्पवासिनो देवाः परिणततरार्द्रमधूकपुष्पवर्णाभा अपि सन्तो

मनाग्गौरत्वचस्ततः पद्मपद्मगौरेष्वन्तर्भवन्ति, लान्तकदेवास्त्वपरिणततरार्द्रमधूकपुष्पवर्णाभत्वे सत्यपि प्राय आपाण्डु-तनव इति तेषां शुक्लेष्वन्तर्भावस्तत आर्द्रमधूकपुष्पवर्णाभत्वमुभयोरविरुद्धमिति न कश्चिद्दोषः ॥ १९५ ॥

तदेवं प्रतिपादितो वर्णविभागः, साम्प्रतमाहारोच्छ्वासविधिप्रतिपादनार्थमाह—

**दसवाससहस्साइं, जहन्नमाउं धरंति जे देवा। तेसिं चउत्थाहारो, सत्तहिं थोवेहिं ऊसासो ॥ १९६ ॥**

व्याख्या—ये देवा भवनपतयो व्यन्तराश्च जघन्यमायुर्धारयन्ति बिभ्रति दशवर्षसहस्राणि, तेषामाहार आहाराभिलाषो भवति चतुर्थात्। अत्र चतुर्थशब्देनाहोरात्रमुच्यते, तेनाहोरात्रादित्यर्थः। सति चाहाराभिलाषे मनसैव तृप्तिमासादयन्ति, न पुनर्मनुष्या इव कावलिकमाहारमाहारयन्ति, एतच्चाग्रे सूत्रकारः स्वयमेव व्यक्तीकरिष्यति। तथा तेषां दशवर्षसहस्रधारिणां देवानामुच्छ्वासः सप्तभिः स्तोकैः प्राणसप्तकप्रमाणैः कालविशेषैः सप्तसप्तस्तोकादिक्रमेण तेषामुच्छ्वासः प्रवर्तत इत्यर्थः। आह च तत्त्वार्थभाष्यकृत्—"उच्छ्वासः सर्वजघन्यस्थितीनां देवानां सप्तसु स्तोकेष्वाहारश्चतुर्थकाल इति" ॥ १९६ ॥

सम्प्रति यतिविध आहारो यथा च य आहारस्तदेतन्निरूपयति—

**सरिरेणोयाहारो, तया य फासे य लोमआहारो। पक्खेवाहारो पुण, कावलिउ होइ नायव्वो ॥१९७॥**

व्याख्या—शरीरेण तैजसकार्मणादिना ओजआहारः, किमुक्तं भवति? तैजसशरीरसहितेन कार्मणशरीरेण पूर्वशरीरपरित्यागे विग्रहेण चोत्पत्तिदेशं प्राप्तः सन् यत् प्रथमत औदारिकादिशरीरप्रायोग्यान् पुद्गलानाहारयति, यच्च

द्वितीयादिषु समयेषु यावच्छरीरनिष्पत्तिस्तावदौदारिकादिमिश्रेणाहारयति, एष सर्वोऽप्याहार ओजआहारः । तथा त्वचा त्वगिन्द्रियेण स्पर्शे स्पर्शने सति य आहारः शरीरोपष्टम्भकपुद्गलसङ्ग्रहः स लोमाहारः लोमभिर्लोमरन्ध्रैराहारो लोमाहार इति व्युत्पत्तेः । प्रक्षेपाहारः पुनः कावलिको मुखे कवलप्रक्षेपरूपो भवति ज्ञातव्यः ॥ १९७ ॥

अथ कस्यामवस्थायां क आहार इत्येतन्निरूपयति—

**ओयाहारा जीवा, सव्वे अपजत्तगा मुणेयव्वा । पज्जत्तगा य लोमे, पक्खेवे होंति भइअव्वा ॥ १९८ ॥**

व्याख्या—ओज उत्पत्तिदेशे स्वशरीरयोग्यपुद्गलसङ्घातः ओज आहारयन्तीत्योजआहारा जीवाः प्राणिनः सर्वेऽप्येकेन्द्रियादयः पञ्चेन्द्रियपर्यवसाना अपर्याप्तकाः शरीरपर्याप्त्याऽपर्याप्तका ज्ञातव्याः, न त्वाहारपर्याप्त्याऽपर्याप्तकाः, आहारपर्याप्त्याऽपर्याप्तकानामनाहारकत्वात् । केषांचिन्मतेन सर्वाभिः स्वयोग्याभिः पर्याप्तिभिरपर्याप्ता ओजआहाराः । तथा पर्याप्ताः शरीरपर्याप्त्या पर्याप्ता मतान्तरेण सर्वाभिः स्वयोग्याभिः पर्याप्तिभिः पर्याप्ताः सर्वे जीवा लोम्नि लोमाहारे नियमतो भवन्ति, प्रक्षेपे प्रक्षेपाहारे भवन्ति भजनीयाः केचिद्भवन्ति केचिन्न, द्वित्रिचतुःपञ्चेन्द्रियतिर्यङ्मनुष्या भवन्ति शेषा न भवन्तीत्यर्थः । द्वीन्द्रियादयोऽपि कदाचिद्भवन्ति कदाचिन्नेति ॥ १९८ ॥

एतदेवाह—

**एगिंदियदेवाणं, नेरइयाणं च नत्थि पक्खेवो । सेसाणं जीवाणं, संसारत्थाण पक्खेवो ॥ १९९ ॥**

व्याख्या—एकेन्द्रियाणां देवानां भवनपत्यादीनां वैमानिकपर्यन्तानां नैरयिकाणां च नास्ति प्रक्षेपः प्रक्षेपाहारः, कावलिकाहारोऽमीषां न भवतीत्यर्थः । शेषाणां संसारस्थानां जीवानां प्रक्षेपः प्रक्षेपाहारो भवति ॥ १९९ ॥

एतदेव व्यक्तीकुर्वन्नेकेन्द्रियादीनां पृथगाहारनैयत्यमाह—

**लोमाहारा एगिंदिया य नेरइअ सुरगणा चेव । सेसाणं आहारो, लोमे पक्खेवओ चेव ॥ २०० ॥**

व्याख्या—शरीरपर्याप्त्या पर्याप्ता मतान्तरेण सर्वस्वयोग्यपर्याप्तिपर्याप्ता एकेन्द्रिया नैरयिकाः सुरगणाश्च सर्वे लोमाहारा ज्ञातव्याः । शेषाणां तु शरीरपर्याप्त्या पर्याप्तानां मतान्तरेण सर्वस्वयोग्यपर्याप्तिपर्याप्तानामाहारो लोम्नि लोमविषयः प्रक्षेपतश्च भवति, तत्र लोमाहारः सततभावी, प्रक्षेपाहारस्तु कदाचिद्भवति कदाचिन्न ॥ २०० ॥

तथा—

**ओयाहारा मणभक्खिणो य सव्वे वि सुरगणा होंति । सेसा हवंति जीवा लोमाहारा मुणेयव्वा ॥ २०१ ॥**

व्याख्या—सर्वेऽपि भवनपत्यादिभेदभिन्नाः सुरगणा अपर्याप्तावस्थायामोजआहाराः, पर्याप्तावस्थायां मनोभक्षिणो, मनसा चिन्तयोपस्थितान् सकलेन्द्रियाह्लादकमनोज्ञपुद्गलान् भक्षयन्तीव भक्षयन्ति वैक्रियशरीरेणात्मसात् कुर्वन्तीत्येवंशीला मनोभक्षिणः । शेषाः सुरव्यतिरिक्ता जीवा एकेन्द्रियाः पृथिव्यादयोऽपर्याप्तावस्थायामोजआहाराः, पर्याप्तास्तु लोमाहारा ज्ञातव्याः ॥ २०१ ॥

तथा—

**अपजत्ताण सुराणमणाजोगनिवत्तिजे ज आहारो । पज्जत्ताणं मणजक्खणेण आजोगनिम्माजे ॥२०२॥**

व्याख्या—अपर्याप्तकानां सुराणामाहारोऽनाजोगनिर्वर्तितोऽनाजोगसंपादितो जवति, मनःपर्याप्तेरजावादाजोगासंजवात् । पर्याप्तानां पुनर्यो मनोजक्षणेन मनसा संचिन्त्य विशिष्टपुजलाज्यवहरणेनाहारः स आजोगनिर्मात आजोगसंपादितो जवति ॥ २०२ ॥

किं च—

**सच्चित्ताचित्तोजयरूवो आहार सवतिरियाणं । सवनराणं च तहा, सुरनेरइआण अच्चित्तो ॥२०३॥**

व्याख्या—सर्वेषां तिरश्चामाहारः सचित्ताचित्तोजयरूपः कदाचित्सचित्तः कदाचिदचित्तः कदाचिदुजयरूपः । तथा सर्वेषामपि नराणामाहारः सचित्ताचित्तोजयरूपः । सुरनैरयिकाणां पुनराहारः सर्वदैवाचित्तः ॥ २०३ ॥

तथा—

**आजोगाणाजोगा, सवेसिं होइ लोम आहारो । नेरइयाणऽमणुन्नो, परिणमइ सुराण सुमणुन्नो ॥२०४॥**

व्याख्या—सर्वेषां पर्याप्तानां लोमाहार जपजायमान आजोगतोऽनाजोगतश्च जवति, स जपजायमानः कदाचित्संवेद्यते कदाचिन्नेति जावः । तत्र नैरयिकाणामुपजायमानो लोमाहारोऽमनोज्ञोऽमनोज्ञतया परिणमति, तथाविधाशुजकर्मोदयवशात् । सुराणां तु सुमनोज्ञः सुमनोज्ञतया परिणमति, जवस्वजावतया तथाविधशुजकर्मोदयवशात् ॥ २०४ ॥

**इगविगलिंदियनारयजीवाणंतोमुहुत्तमुक्कोसो । पंचिंदियतिरियाणं, छट्ठउ मणुआण अट्ठमउ ॥२०५॥**

व्याख्या—एकेन्द्रियाणां विकलेन्द्रियाणां नारकजीवानां चाहारे गृहीते सति भूय आहारेच्छोपजायत उत्कर्षतोऽन्तर्मुहूर्त्तादूर्ध्वं । पञ्चेन्द्रियतिरश्चामुत्कर्षतः षष्ठादहोरात्रद्वयरूपात् । मनुजानां मनुष्याणामष्टमादहोरात्रत्रयरूपात् । एतच्च त्रिपल्योपमप्रमाणोत्कृष्टायुषामवसेयं न शेषाणां इदं च तिर्यक्पञ्चेन्द्रियाणां मनुष्याणां चाहाराभिलाषान्तरपरिमाणं तपोविधिमन्तरेण स्वभावसंसिद्धं प्रतिपत्तव्यं, तपःसमाचरणवाञ्छया मासद्विमासादिकमपि यावदवसेयं ॥ २०५ ॥

**आहारो देवाणं, सायरमज्झम्मि दिणपुहुत्तंतो । सायरसंखाए पुण, वाससहस्सेहि भणिउं अ ॥ २०६ ॥**

व्याख्या—येषां देवानां सागरोपममध्ये पल्योपममादिं कृत्वा यावत् किञ्चिन्न्यूनं सागरोपममायुस्तेषामाहार आहारे गृहीते सति भूय आहारेच्छोपजायते दिनपृथक्त्वान्तरहोरात्रपृथक्त्वमध्ये, पृथक्त्वं द्विप्रभृतिरानवभ्यः सागरसङ्ख्यया सागरोपमसङ्ख्यानेन पुनरायुषि वर्षसहस्रैराहारो भणितः । किमुक्तं भवति ? यस्य यावन्ति सागरोपमाणि तस्य तावत्सु वर्षसहस्रेष्वाहारो भवति । एतच्चाग्रे स्वयमेव व्यक्तीकरिष्यति ॥ २०६ ॥

सप्तभिः स्तोकैरुच्छ्वासो देवानामित्युक्तं, ततः स्तोकपरिमाणं प्रसङ्गतो मुहूर्त्तादिपरिमाणं च प्रतिपादयति—

**हट्ठस्स अणवगल्लस्स, निरुवकिट्ठस्स जंतुणो । एगे ऊसासनीसासे, एस पाणु त्ति वुच्चइ ॥ २०७ ॥**

व्याख्या—जायत इति जन्तुः प्राणी तस्य हृष्टस्य विषादरहितस्य विषण्णस्य हि श्वसनमन्यथाऽपि स्यादतो हृष्टस्येत्युक्तं । तथाऽनपकल्पस्य भावप्रधानः कल्पशब्दस्ततोऽयमर्थः—अपगतः परिभ्रष्टः कल्पात् कल्पत्वात् नीरोगत्वादि-

त्यपकल्पः सरोगस्तदभावोऽनपकल्पो नीरोगस्तस्य, सरोगस्यापि प्रायोऽन्यथा श्वसनं भवति, ततस्तद्व्यवच्छेदार्थमनपकल्पस्येत्युक्तं । अनपकल्पोऽपि कश्चिच्छ्रमबुभुक्षादिना कृष्टो भवति, कृष्टस्य च श्वासान्यथासंभवस्ततस्तद्व्यवच्छेदार्थं विशेषणान्तरमाह—निरुपकृष्टस्य श्रमबुभुक्षादिजनितोपक्लेशरहितस्य य एक उच्छ्वासनिश्वास ऊर्ध्वं श्वसनमुच्छ्वासो नीचैरधस्ताच्छ्वसनं निश्वासः तदुभयरूप एष प्राण इत्युच्यते विशेषेणागमभणिततत्त्वरूपेण प्रतिपाद्यते ॥ २०७ ॥

सत्तपाणूणि से थोवे, सत्तथोवाणि से लवे । लवाणं सत्तहत्तरीए, एस मुहुत्ते वित्राहिए ॥ २०८ ॥

व्याख्या—से तस्य पूर्वनिर्दिष्टस्य जन्तोः संबन्धिनः सप्त प्राणास्तोकः । सप्त स्तोकाः से तस्य जन्तोः संबन्धिनो लवः । लवानां सप्तसप्तत्या मुहूर्त्तो व्याख्यातः । अस्मिंश्च मुहूर्त्ते आवलिकानामेका कोटी सप्तषष्टिर्लक्षाः सप्तसप्ततिसहस्राणि द्वे शते षोडशाधिके । उक्तं च—"एगा कोडी सत्तट्ठिलक्खा सत्तत्तरी सहस्साय । दो य सया सोलहिआ, आवलिआणं मुहुत्तम्मि ॥ १ ॥" इति ॥ २०८ ॥

अथैकस्मिन्मुहूर्त्ते कियन्तः प्राणा इति मुहूर्त्तं प्रति प्राणसङ्ख्याह—

तिन्नि सहस्सा सत्त य, सयाइं तेवत्तरिं च ऊसासा । एस मुहुत्तो भणिओ, सव्वेहिं अणंतनाणीहिं ॥२०९॥

व्याख्या—सर्वैरप्यनन्तज्ञानिभिः सर्वज्ञैरेष मुहूर्त्तो भणितस्त्रीणि सहस्राणि सप्त शतानि त्रिसप्तत्यधिकान्युच्छ्वासानां । तथाहि—सप्तभिः प्राणैरेकः स्तोकः, सप्तभिश्च स्तोकैरेको लव इति सप्त सप्तभिर्गुण्यन्ते, जातैकोनपञ्चाशत् । लवानां च सप्तसप्तत्या मुहूर्त्त इति सैकोनपञ्चाशत् सप्तसप्तत्या गुण्यते, जातानि त्रीणि सहस्राणि सप्त शतानि त्रिसप्तत्यधिकानि ३७७३ ॥

सम्प्रति यावन्तः प्राणा एकस्मिन्नहोरात्रे मासे वर्षे वर्षशते च भवन्ति तावतः प्रतिपिपादयिषुर्गाथाचतुष्टयमाह—

एगं च सयसहस्सं, ऊसासाणं तु तेरससहस्सा। नउअसएणं अहिआ, दिवसनिसिं हुंति विन्नेया २१०
मासे वि अ ऊसासा, लक्खा तेत्तीस सहस पणनउई। सत्त य सयाइं जाणसु कहिआइं पुव्वसूरीहिं॥२११॥
चत्तारि य कोमीउ, लक्खा सत्तेव हुंति नायव्वा। अरूयालीस सहस्सा, चारिसया हुंति वरिसाणं॥२१२
चत्तारि उ कोमिसया, कोमीउ सत्त लक्ख अरूयाला। चत्तालीस सहस्सा, वास सए हुंति ऊसासा २१३

व्याख्या—निगदसिद्धाः। नवरं यदेकमुहूर्त्तगतं प्राणपरिमाणं त्रीणि सहस्राणि सप्त शतानि त्रिसप्तत्यधिकानि तदाहोरात्रे त्रिंशन्मुहूर्त्ता इति त्रिंशता गुण्यन्ते, ततो यथोक्तमहोरात्रे प्राणपरिमाणं भवति। एवं मासादिष्वपि भावना भावनीया ॥ २१०–२११–२१२–२१३ ॥

सम्प्रति प्रतिसागरोपममुच्छ्वासपरिमाणमाहारपरिमाणं च प्रतिपादयति—

जस्स जइ सागराइं, ठिई तस्स तत्तिएहिं पक्खेहिं। ऊसासो देवाणं, वाससहस्सेहिं आहारो ॥ २१४ ॥

व्याख्या—देवानां मध्ये यस्य देवस्य यावन्ति सागरोपमाणि स्थितिस्तस्य तावद्भिः पक्षैरुच्छ्वासः, तावद्भिर्वर्षसहस्रैराहारः। तथाहि—यस्य देवस्यैकं सागरोपमं तस्यैकस्मिन् पक्ष उच्छ्वासः, एकस्मिन् वर्षसहस्र आहारः। यस्य द्वे सागरो-

पमे स्थितिस्तस्य पक्षद्वय उच्छ्वासः, वर्षसहस्रद्वय आहारः । यावत्त्रयस्त्रिंशत्सागरोपमाणि यस्य स्थितिस्तस्य त्रयस्त्रिंशत्पक्षातिक्रम उच्छ्वासः, त्रयस्त्रिंशद्वर्षसहस्रातिक्रम आहारः ॥ २१४ ॥

अथ वर्षसहस्रदशकस्थितेरारभ्य यावत्सागरोपमं संपूर्णं न भवति तावदेतस्मिन्नपान्तराले आहारोच्छ्वासकरणेकालप्रमाणमाह—

**दसवाससहस्साइं, समयाइं जाव सागरं ऊणं । दिवसमुहुत्तपुहुत्ता, आहारूसास सेसाणं ॥ २१५ ॥**

व्याख्या—येषां देवानां दश वर्षसहस्राणि समयादीन्येकद्वित्रिसमयाद्यधिकानि यावत् किञ्चिदूनं सागरोपमायुःस्थितिस्तेषां शेषाणां दिवसमुहूर्त्तपृथक्त्वादाहारोच्छ्वासौ दिवसपृथक्त्वादाहारो मुहूर्त्तपृथक्त्वादुच्छ्वासः । इयमत्र भावना—येषां दशवर्षसहस्राण्यायुस्तेषां सप्तभिः स्तोकैरुच्छ्वासः, चतुर्थाच्चाहारः । ततः समयमुहूर्त्तदिवसादिवृद्ध्योच्छ्वासकालप्रमाणमाहारकालप्रमाणं च शनैः शनैः प्रवर्धनीयं यावत्पल्योपमस्थितीनां मुहूर्त्तपृथक्त्वेनोच्छ्वासो दिवसपृथक्त्वाच्चाहारः । तत एतदूर्ध्वमप्येतदनुसारेण पल्योपमादिवृद्धौ मुहूर्त्तपृथक्त्वानि दिवसपृथक्त्वानि च तावद्वर्धनीयानि यावदेकसागरोपमस्थितीनां पक्षादुच्छ्वासो वर्षसहस्रादाहारः । केवलं तदा दिवसमुहुत्तपुहुत्ता इति वचनविपरिणामेन बहुवचनं व्याख्येयमिति ॥२१५

सम्प्रति प्रसङ्गादेव देवानां शरीरस्वरूपमुपदर्शयति—

**कणगमिव निरुवलेवा, निम्मलगत्ता सुगंधिनिस्सासा । सव्वंगभूसणधरा, समचउरंसा य संठाणा ॥२१६**

व्याख्या—देवाः सर्वेऽपि कनकमिव जात्यस्वर्णमिव रजःप्रस्वेदाद्युपलेपरहिताः । तथा निर्मलगात्रा अवदातशरी-

रपरमाणवः । सुगन्धिनिश्वासा विशिष्टपरिमलोपेतमुखमारुताः । तथा सर्वेष्वङ्गेष्वङ्गावयवेषु कर्णग्रीवादिषु भूषणधराः । संस्थाने च चिन्त्यमानाः समचतुरस्राः समचतुरस्रसंस्थानाः ॥ २१६ ॥

किं च—

केसनहमंसरोमे, चम्मवसारुहिरमुत्तपुरिसं वा । नेवट्ठी नेव सिरा, देवाण सरीरसंठाणे ॥ २१७ ॥

व्याख्या—देवानां शरीरसंस्थाने शरीराकृतौ केशनखश्मश्रुरोमाणि चर्मवसारुधिरमूत्रपुरीषं च नैव भवन्ति । तथा नैवास्थीनि, नैव शिरा स्नायुरूपा, वैक्रियपुद्गलमयत्वात्तेषां शरीराकृतेः, केशनखादीनां चौदारिकशरीरभावित्वादिति ॥२१७॥

कीदृक् तर्हि तेषां शरीरमित्यत आह—

वन्नरसरूवगंधे, उत्तमदव्वं गुणेहिं संजुत्तं । गिण्हइ देवो बोंदी(दिं), सुचरियकम्माणुभावेणं ॥ २१८ ॥

व्याख्या—देवः सुचरितकर्मानुभावेन पूर्वभवोपार्जितशोभनकर्मोदयप्रभावतो बोन्दिं तनुं गृह्णाति, उत्तमद्रव्यां उत्तमानि वैक्रियशरीरप्रायोग्यानि द्रव्याणि पुद्गलस्कन्धरूपाणि यस्यां सा तथा तां । कोत्तमानि द्रव्याणीत्याह—वर्णरसरूपगन्धे, सूत्रे चैकवचनं समाहारत्वात्, किमुक्तं भवति ? सर्वोत्तमवर्णादिकलितद्रव्यनिष्पादितामित्यर्थः । तथा गुणैः सौभाग्यादिभिः संयुक्ताम् ॥ २१८ ॥

अथ देवानामुत्पद्यमानानां कियता कालेन पर्याप्तिनिष्पत्तिः कथं वा भवतीत्येतन्निरूपयति—

पज्जत्ती पज्जत्तो, भिन्नमुहुत्तेण होइ नायव्वो । अणुसमयं पज्जत्तिं, गिण्हइ दिव्वेण रूवेणं ॥ २१९ ॥

व्याख्या—पर्याप्त्या शरीरपर्याप्तिलक्षणया पर्याप्तो भवति ज्ञातव्यो देवो भिन्नमुहूर्त्तेनान्तर्मुहूर्त्तेन । तथाऽनुसमयमेकैकेन समयेन पर्याप्तीराहारेन्द्रियानप्राणभाषामनःपर्याप्तीर्गृह्णाति दिव्येन रूपेण दिव्यप्रभावपरिकलितः । इयमत्र भावना—इह सर्वेषामपि जीवानामाहारपर्याप्तिरेकसमयेनैव निष्पत्तिमासादयति, एतच्च पञ्चसङ्ग्रहटीकादौ चर्चितमिति न भूयश्चर्च्यते । वैक्रियाहारकशरीरिणां त्वाहारेन्द्रियानप्राणभाषामनःपर्याप्तयः पञ्चाप्येकैकेनैव समयेन समाप्यन्ते, शरीरपर्याप्तिस्त्वन्तर्मुहूर्त्तेन, औदारिकशरीरिणां त्वाहारपर्याप्तिं मुक्त्वा शेषाः पञ्चापि प्रत्येकमन्तर्मुहूर्त्तेन समाप्तिमश्नुवते, आहारपर्याप्तिस्त्वेकेन समयेनेति ॥ २१९ ॥

इह देवाः सहभाविनाऽवधिज्ञानेन परिकलिता भवन्ति । यदुक्तं—"भवप्रत्ययो नारकदेवानां" इति, तत्र के देवाः कियत्क्षेत्रमवधिना पश्यन्त्येतन्निरूपणार्थमाह—

**सक्कीसाणा पढमं, दुच्चं च सणंकुमारमाहिंदा । तच्चं च बंभलंतग सुक्कसहस्सार य चउत्थिं ॥२२०॥**

व्याख्या—शक्रेशानाविन्द्रौ, उपलक्षणमेतत्, इन्द्रसामानिकादयश्चोत्कृष्टायुषः, एवं सर्वत्राप्युपलक्षणव्याख्यानं द्रष्टव्यं, प्रथमां रत्नप्रभाख्यां पृथिवीं यावद्रत्नप्रभायाः पृथिव्या अधस्तनं भागं यावदित्यर्थः, अवधिना पश्यतः । सनत्कुमारमाहेन्द्राविन्द्रौ द्वितीयां शर्कराप्रभां पृथिवीं यावच्छर्कराप्रभायाः पृथिव्या अधस्तनं सर्वान्तिमं चरमं भागं यावदित्यर्थः । एवमुत्तरत्रापि भावनीयं । ब्रह्मलोकलान्तकौ तृतीयां वालुकाप्रभां यावत् । शुक्रसहस्रारौ चतुर्थीं पङ्कप्रभां यावत् ॥ २२० ॥

**आणयपाणयकप्पे, देवा पासंति पंचमिं पुढविं । तं चेव आरणच्चुय, ओहीनाणेण पासंति ॥ २२१ ॥**

व्याख्या—आनतप्राणतकल्पयोर्देवा इन्द्रतत्सामानिकादयः पञ्चमीं पृथिवीं धूमप्रभाख्यां यावदवधिना पश्यन्ति । आरणाच्युतदेवा अपि इन्द्रतत्सामानिकादयस्तामेव पञ्चमीं पृथिवीं यावदवधिना पश्यन्ति ॥ २२१ ॥

**छट्ठिं हिट्ठिममज्झिमगेविज्जा सत्तमिं च उवरिल्ला । संभिन्नलोगनालिं, पासंति अणुत्तरा देवा ॥२२२॥**

व्याख्या—अधस्तनमध्यमग्रैवेयकाः षष्ठीं तमःप्रभां पृथिवीं यावदवधिना पश्यन्ति । उपरितना उपरितनग्रैवेयकाः सप्तमीं पृथिवीं यावत् सप्तम्यास्तमस्तमःप्रभायाः पृथिव्या अधस्तनभागं यावदित्यर्थः । संभिन्नां किञ्चिदूनां लोकनालिमनुत्तरा अनुत्तरविमानवासिनो देवाः पश्यन्ति ॥ २२२ ॥

तदेवमधस्तादवधिविषयभूतं क्षेत्रमुक्तं, सम्प्रति तदेव तिर्यगूर्ध्वं चाह—

**एएसिमसंखेज्जा, तिरियं दीवा य सागरा चेव । बहुययरं उवरिमगा, उड्ढं च सकप्पथूभाई ॥२२३॥**

व्याख्या—एतेषां शक्रेशानादीनां देवानां तिर्यक् तिरश्चीनमवधिविषयं क्षेत्रमसङ्ख्येया द्वीपाः सागराश्च, केवलं "उवरिमगा" इति उपर्युपरिकल्पवासिनो देवा बहुतरं, उपलक्षणमेतत् बहुतमं च क्षेत्रं तिर्यगवधिना पश्यन्ति । ऊर्ध्वं पुनः सर्वेऽपि शक्रेशानप्रभृतयो देवाः स्वकल्पस्तूपादीन् स्वस्वविमानचूलाध्वजादिकं यावत् पश्यन्ति ॥ २२३ ॥

तदेवं तिर्यगूर्ध्वं चावधिविषयभूतं क्षेत्रपरिमाणमुक्तं । सम्प्रति स्थितिविशेषतस्तद्विशेषं दर्शयति—

**संखेज्जजोयणा खलु, देवाणं अद्धसागरे ऊणे । तेण परमसंखेज्जा, जहन्नयं पन्नवीसं तु ॥ २२४ ॥**

व्याख्या—देवानां भवनपत्यादीनामर्धसागरेऽर्धसागरोपमप्रमाणे किञ्चिदून आयुष्यवधिविषयं क्षेत्रं खलु सङ्ख्येयानि योजनानि सङ्ख्येययोजनात्मकमेवेत्यर्थः, खलुशब्द एवकारार्थः । "तेण परमसंखेज्जा त्ति" ततः किञ्चिदूनार्धसागरोपमात् परमूर्ध्वं प्रवृद्ध आयुषि देवानामसङ्ख्येयानि योजनान्यवधिविषयः, केवलं यथायुर्वृद्धिस्तथा योजनासङ्ख्येयत्वस्यापि वृद्धिरवसेया । "जहन्नयं पणवीसं तु त्ति" तुरेवकारार्थः, येषां भवनपत्यादीनां जघन्यं दशवर्षसहस्रप्रमाणमायुस्तेषामवधिविषयक्षेत्रं पञ्चविंशतिरेव योजनानि ॥ २२४ ॥

सम्प्रति प्रसङ्गत एव नारकतिर्यङ्नरामराणामवधिक्षेत्रस्य संस्थानविशेषान्निरूपयति—

**नेरइयभवणवणयरजोइसकप्पालयाणमोहिस्स । गेविज्जणुत्तराण य, हुंतागारा जहासंखं ॥ २२५ ॥**

**तप्पागारे पल्लगपडहगझल्लरिमुइंगपुप्फजवे । तिरिअमणुएसु ओहि, नाणाविहसंठिओ भणिओ ॥२२६॥**

व्याख्या—नैरयिकभवनपतिव्यन्तरज्योतिष्ककल्पालयानां ग्रैवेयकाणामनुत्तरविमानानां च देवानामवधेरवधिविषयस्य क्षेत्रस्याकारा यथासङ्ख्यममी भवन्ति, तद्यथा—नैरयिकाणामवधिस्तप्राकारः, तप्रो नाम काष्ठसमुदायविशेषो यो नदीप्रवाहेण प्लाव्यमानो दूरादानीयते, स चायतस्त्र्यस्रश्च भवति, तदाकारोऽवधिर्नारकाणां । भवनपतीनां पल्लकाकारः, पल्लको नाम लाटदेशे धान्याधारविशेषः, स चोर्ध्वायत उपरि च किञ्चित्संक्षिप्तः । व्यन्तराणां पटहाकारः, पटह आतोद्यविशेषः, स च किञ्चिदायत उपर्यधश्च समप्रमाणः । ज्योतिष्कदेवानां झल्लर्याकारः, झल्लरी चर्मावनद्धा विस्तीर्णवलयाकाराऽऽतोद्यविशेषरूपा देशविशेषे प्रसिद्धा । कल्पालयानां सौधर्मदेवादीनामच्युतदेव पर्यन्तानां मृदङ्गाकारो मृदङ्गो

वाद्यविशेषः, स चाधस्ताद्विस्तीर्ण उपरि च तनुकः सुप्रतीतः। ग्रैवेयकदेवानां गुंफितपुष्पसशिखाकभृतचङ्गेरीसंस्थानसंस्थितः। अनुत्तरोपपातिनां कन्याचोलकापरपर्यायजवनालकसंस्थितः। तथा चेदमेव तप्रादीनां व्याख्यानमाचार्येण विशेषावश्यके कृतं—"तप्पेण समागारो, तप्पागारो स चाययत्तंसो। उद्धायतं य पल्लो, उवरिं च स किंचि संखित्तो ॥ १ ॥ नज्ञयउं समो वि य, पटहो हिठोवरिं पईउं सो चम्मावणद्धविच्छिन्नवलयरूवा य झल्लरिया ॥ २ ॥ उद्धायउं मुइंगो, हिठा रुंदो तहोवरिं तणुउं। पुप्फसिहावलिरइया, चंगेरी पुप्फचंगेरी ॥ ३ ॥ जवनालउं त्ति जन्नइ उञ्जो सरकंचुउं कुमारीए" इति। तिर्यङ्मनुष्याणामवधिर्नानासंस्थानसंस्थितः, यथा स्वयंभूरमणोदधौ मत्स्याः। अपि च तत्र मत्स्यानां वलयाकारं संस्थानं निषिद्धं, तिर्यङ्मनुष्यावधिस्तु तदपि भवति। उक्तं च—"नाणागारो तिरियमणुएसु मच्छा-सयंभुरमणुव्व। तत्थ वलयं निसिद्धं, तस्स पुण तयं पि हुज्जाहि ॥ १ ॥" तथा भवनपतिव्यन्तराणामूर्ध्वं प्रभूतोऽवधिः, वैमानिकानामधः, ज्योतिष्कनारकाणां तिर्यक्, विचित्रो नरतिरश्चाम् ॥ उक्तं च—"भवणवइवणयराणं, उड्ढं बहुगो अहो य सेसाणं। नारगजोइसिआणं, तिरिअं उरालिउं चित्तो ॥ १ ॥" २२५–२२६ ॥

अधुना देवानामेव पुनः किञ्चित्स्वरूपमाह—

**अणिमिसनयणा मणकज्जसाहणा पुप्फदाममिलाणा। चउरंगुलेण भूमिं, न छिवंति सुरा जिणा बिंति**

व्याख्या—सर्वेऽपि सुराः स्वभावत एवानिमिषनयना निमेषरहितनयनाः। तथा मनसा कार्यं साधयन्तीति मनःकार्यसाधनाः, अपरिमितसामर्थ्ययुक्तत्वात्, "नन्द्यादिभ्योऽनः" इत्यनप्रत्ययः। तथा "पुप्फदाममिलाणत्ति" प्राकृत-

त्वाद्विशेषणविशेष्यपदपूर्वापरीभावव्यत्ययो मकारस्त्वलाक्षणिकः, अम्लानपुष्पदामानो म्लानिरहितवक्षःस्थलावलम्बिपुष्पदामानः । तथा महीतलमवतीर्णा अपि स्वभावत एव चतुरङ्गुलैर्भूमिं न स्पृशन्तीति जिनास्तीर्थकरा ब्रुवते ॥ २२७ ॥

सम्प्रति येन कारणेन वैमानिकसुरा इहागच्छन्ति तत्कारणमाह—

जिणपंचसु कल्लाणेसु चेव महरिसितवाणुभावाउ । जम्मंतरनेहेण य, आगच्छन्ति सुरा इहइं ॥ २२८ ॥

व्याख्या—जिनानां तीर्थकृतां जन्मादिषु पञ्चसु कल्याणकेषु, तथा महर्षीणां तपोऽनुभावतस्तपःप्रभावाकृष्टचेतस्तया, तथेहत्ये क्वापि प्राणिविशेषे शालिभद्रादिप्रख्ये जन्मान्तरस्नेहेन जन्मान्तरानुगतस्नेहप्रतिबद्धतया सुरा इहागच्छन्ति॥ २२८॥

जिनानां पञ्चसु कल्याणकेषु सुरा इहागच्छन्तीत्युक्तमेतदेव भावयति—

अवयरणजम्मनिक्खमणनाणनिव्वाणपंचकल्लाणे । तित्थयराणं नियमा, करंति सेसेसु खित्तेसु ॥ २२९ ॥

व्याख्या—निगदसिद्धा । नवरं शेषेषु क्षेत्रेषु पञ्चदशस्वपि कर्मभूमिषु ॥ २२९ ॥

यथोक्तनिमित्तमन्तरेणान्यदा किमिति सुरा नागच्छन्तीत्यत आह—

संकंतदिव्वपेमा, विसयपसत्तासमत्तकत्तव्वा । अणहीणमणुअकज्जा, नरभवमसुहं न इंति सुरा ॥ २३० ॥

व्याख्या—"निमित्तकारणहेतुषु सर्वासां विभक्तीनां प्रायो दर्शनं" इति वचनात्सर्वत्र हेतौ प्रथमा । ततोऽयमर्थः—यदैव देवलोकेषु देवा उत्पद्यन्ते तदैव तेषां दिव्यं देवलोकभावि देवाङ्गनादिविषयं परमं प्रेम संक्रामति दिव्याङ्गनादीनामतिमनोहारित्वात् । तथा विषयेषु देवलोकसंबन्धिष्विच्छामात्रोपनतेषु मनोज्ञेषु शब्दरूपरसगन्धस्पर्शेषु-

त्पत्त्यनन्तरमेव प्रसक्ता अत्यन्तमासक्ता भवन्ति । अत एवासमाप्तकर्तव्या इदं मज्जनादिकं कृत्वेदं प्रेक्षणकनिरीक्षणादिकं कर्तव्यमित्यसमाप्तकर्तव्यपरम्पराः । तथाऽनधीनमनुष्यकार्या न खलु तेषां किमपि कार्यं मनुष्याधीनं भवति, येन स्वप्रयोजननिष्पत्तये ते मनुष्यसमीपे समागच्छेयुः, अनुपमसामर्थ्ययुक्ततया तेषां स्वत एव स्वप्रयोजननिष्पादनात् । तत एतैः कारणैरिमं नरभवं नराणां भवो यत्रासौ नरभवो मनुष्यलोकस्तं, अशुभमशुभगन्धोपेतं न सुरा आगच्छन्ति ॥२३०॥

अशुभगन्धोपेतत्वमेव मनुष्यलोकस्य ख्यापयति—

**चत्तारि पंच जोअणसयाइं गंधो य मणुअलोअस्स । उड्ढं वच्चइ जेणं, न हु देवा तेण आवंति ॥२३१॥**

व्याख्या—येन कारणेन चत्वारि पञ्च वा योजनशतानि यावन्मनुष्यलोकस्य सम्बन्धिमृतककलेवरमूत्रपुरीषादिप्रभवोऽशुभो गन्ध ऊर्ध्वं गच्छति, तेन कारणेन देवा वैमानिका न तु नैव मनुष्यलोक आगच्छन्ति, तीर्थंकरादिकाले तु तीर्थंकरादिपुण्यप्रभावादागच्छन्ति स्म । ननु नवभ्यो योजनेभ्यः परतो गता गन्धपुद्गला घ्राणेन्द्रियविषया न भवन्ति, ततः कथमुच्यते चत्वारि पञ्च वा योजनशतानि मनुष्यलोकस्याशुभो गन्ध ऊर्ध्वं गच्छति, तेन देवा नागच्छन्तीति ? सत्यमेतत्, किं तु य इतः स्थानादूर्ध्वं गन्धपुद्गला गच्छन्ति, ते नवभ्यो योजनेभ्यः परतो गता घ्राणेन्द्रियविषया न भवन्ति, ये त्वितः स्थानादूर्ध्वं निरन्तरं गच्छद्भिरपान्तरालेऽन्ये गन्धपुद्गला वास्यन्ते, ततोऽप्यूर्ध्वं गच्छन्ति, तैरपि निरन्तरमूर्ध्वं गच्छद्भिरन्येऽपान्तरालवर्तिनो गन्धपुद्गला भाव्यन्ते, ततोऽप्यूर्ध्वं गच्छन्ति, तैरप्यूर्ध्वं गच्छद्भिरन्ये वास्यन्ते, इत्येवं परंपरया चत्वारि पञ्च वा योजनशतान्यूर्ध्वं गन्धस्य संभवः । तत्र यदा मनुष्यक्षेत्रे प्रभूता मनुष्या मृतककलेवराणि च तिर्यग्म-

नुष्याणां नूयांसि नवन्ति तदा पञ्च योजनशतानि यावदूर्ध्वं गन्धस्य संजवः, शेषकालं तु चत्वारि योजनशतानीति चत्वारि पञ्च वेत्युक्तम् ॥ २३१ ॥

सम्प्रति देवाधिकारपरिसमाप्तिप्रदर्शनार्थं नरकाधिकारवक्तव्यतोपक्षेपार्थं चाह—

**एवं देवोगाहणजवणाऊ वन्निआ समासेणं । ठिइपुढवीउगाहण; नरएसु अउ परं वुच्छं ॥ २३२ ॥**

व्याख्या—एवमुक्तेन प्रकारेण देवानामवगाहनाजवनायूंषि, उपलक्षणमेतत्, उपपातोद्वर्तनाविरहकाल उपपातोद्वर्तनायां च देवानां सङ्ख्या गत्यागती प्रसङ्गतो वर्णादीनि च वर्णितानि जणितानि । अतः परं नरकेषु नारकाणां स्थितिमायुष्कं, पृथिवी रत्नप्रजाद्या, अवगाहनाः शरीराणि वक्ष्ये ॥ २३२ ॥

तत्र यथोद्देशं निर्देश इति न्यायात् प्रथमतः स्थितिर्वक्तव्या, सा च द्विधा—जघन्योत्कृष्टा च, तत्र प्रथमत उत्कृष्टां स्थितिमाह—

**सागरमेगं तिअ सत्त, दस य सत्तरस तह य बावीसा । तित्तीसं चेव ठिई, सत्तसु पुढवीसु उक्कोसा ॥२३३**

व्याख्या—सप्तसु पृथिवीष्वियं यथासङ्ख्यमुत्कृष्टा स्थितिः । तद्यथा—रत्नप्रजायां पृथिव्यामेकं सागरोपममुत्कृष्टा स्थितिः । शर्कराप्रजायां त्रीणि सागरोपमाणि । वालुकाप्रजायां सप्त । पङ्कप्रजायां दश । धूमप्रजायां सप्तदश । तमःप्रजायां द्वाविंशतिः । तमस्तमःप्रजायां त्रयस्त्रिंशदिति ॥ २३३ ॥

सं०

॥

सम्प्रति सप्तस्वपि पृथिवीषु जघन्यां स्थितिमाह—

**जा पढमाए जिट्ठा, सा बीआए कणिट्ठिआ भणिआ। तरतमजोगो एसो, दसवाससहस्स रयणाए २३४**

व्याख्या—या प्रथमायां रत्नप्रभाभिधायां पृथिव्यां ज्येष्ठोत्कृष्टा स्थितिः सागरोपमलक्षणा सा द्वितीयस्यां पृथिव्यां शर्कराप्रभायां कनिष्ठा जघन्या भणिता। एष तरतमयोगो जघन्योत्कृष्टस्थितियोगः सर्वास्वपि पृथिवीषु भावनीयः। तद्यथा—या द्वितीयस्यामुत्कृष्टा सा तृतीयस्यां जघन्या। या तृतीयस्यामुत्कृष्टा सा चतुर्थ्यां जघन्या। एवं या षष्ठ्यामुत्कृष्टा सा सप्तम्यां जघन्या। "दस वाससहस्स रयणाए" इति प्रथमायां रत्नप्रभायां पृथिव्यां जघन्या स्थितिर्दश वर्षसहस्राणि। इयमत्र भावना—रत्नप्रभायां पृथिव्यां जघन्या स्थितिर्दश वर्षसहस्राणि। शर्कराप्रभायामेकं सागरोपमं। वालुकाप्रभायां त्रीणि सागरोपमाणि। पङ्कप्रभायां सप्त। धूमप्रभायां दश। तमःप्रभायां सप्तदश। तमस्तमःप्रभायां कालादिषु नरकावासेषु द्वाविंशतिरिति ॥ २३४ ॥

इह रत्नप्रभायां त्रयोदश नरकप्रस्तटाः, शर्कराप्रभायामेकादश, वालुकाप्रभायां नव, पङ्कप्रभायां सप्त, धूमप्रभायां पञ्च, तमःप्रभायां त्रयः, तमस्तमः प्रभायामेकः। उक्तं च—"नरकपटलान्यधोऽधो द्वाभ्यां द्वाभ्यां हीनानि"। ततः प्रतिप्रस्तटं जघन्यामुत्कृष्टां च स्थितिं विवक्षुः प्रथमतो रत्नप्रभायां गाथात्रयेणाह—

**दसनउई य सहस्सा, पढमे पयरम्मि ठिई जहन्नियरा। सा सयगुणिआ बिइए, तइयम्मि पुणो इमा होइ**

नउई लक्ख जहन्ना, उक्कोसा पुव्वकोडि निद्दिठा। आईल्लपुव्वकोडी, दसभागो सायरस्सियरा ॥ २३६ ॥
दसभागो पंचमए, दो दसभागा य होइ उक्कोसा । एगुत्तरवुड्ढीए, दसेव भागा भवे जाव ॥ २३७ ॥

व्याख्या—रत्नप्रभायां प्रथमे प्रस्तटे दश वर्षसहस्राणि जघन्या स्थितिः, उत्कृष्टा नवतिर्वर्षसहस्राणि । सैवेयं ( सा चेयं ) जघन्योत्कृष्टा च शतगुणिता द्वितीये प्रस्तटे जघन्योत्कृष्टा च स्थितिर्भवति । तद्यथा—दश लक्षा जघन्या स्थितिः १०००००० । नवतिर्लक्षाः ९०००००० उत्कृष्टा । तृतीये प्रस्तटे पुनरियं वक्ष्यमाणा जघन्योत्कृष्टा च स्थितिर्भवति, तामेवाह—"नउई" इत्यादि, नवतिर्लक्षाः ९०००००० जघन्या, उत्कृष्टा पूर्वकोटिर्निर्दिष्टा तीर्थंकरगणधरैः । चतुर्थे प्रस्तट आदौ जघन्यपदे स्थितिः पूर्वकोटिः, इतरोत्कृष्टा सागरोपमस्य दशभागो दशमो भागः । पञ्चमे प्रस्तटे सागरोपमस्यैको दशभागो जघन्या स्थितिः, द्वौ दशभागावुत्कृष्टौ । अत ऊर्ध्वमेकैको दशभागः प्रतिप्रस्तटं तावद्वृद्धिं नेतव्यो यावत्त्रयोदशे प्रस्तटे दशैव भागा उत्कृष्टा स्थितिर्भवति परिपूर्णं सागरोपमं भवतीत्यर्थः । तद्यथा—षष्ठ प्रतरे द्वौ दशभागौ सागरोपमस्य जघन्या स्थितिः, त्रय उत्कृष्टा । सप्तमे प्रस्तटे त्रयो जघन्या, चत्वार उत्कृष्टा । अष्टमे प्रस्तटे चत्वारो जघन्या, पञ्चोत्कृष्टा । नवमे पञ्च जघन्या, षडुत्कृष्टा । दशमे षड् जघन्या, सप्तोत्कृष्टा । एकादशे सप्त जघन्या, अष्टावुत्कृष्टा । द्वादशेऽष्टौ जघन्या, नवोत्कृष्टा । त्रयोदशे नव जघन्या, दशोत्कृष्टा परिपूर्णसागरोपममुत्कृष्टमित्यर्थः ॥ २३५–२३६–२३७ ॥ स्थापना—

रत्नप्रभानरकेषु प्रतरजघन्योत्कृष्टमायुः—

| प्रतर | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | १३ |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| जघन्यसागर | १०००० | १०००००० | ९०००००० | पूर्वकोटी | सा० १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ |
| जघन्यभाग | ० | ० | ० | ० | भाग १० | १० | १० | १० | १० | १० | १० | १० | १० |
| उत्कृष्टसागर | ९०००० | ९०००००० | पूर्वकोटी | सागर १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० |
| उत्कृष्टभाग | ० | ० | ० | भाग १० | १० | १० | १० | १० | १० | १० | १० | १० | १० |

तदेवं प्रथमायां पृथिव्यां प्रतिप्रस्तटं जघन्यामुत्कृष्टां च स्थितिमभिधाय सम्प्रति शेषासु पृथिवीषु प्रतिप्रस्तटमुत्कृष्टां स्थितिं प्रतिपादयन् करणमाह—

उवरिखिइठिइविसेसो, सगपयरविभाग इछसंगुणिउं ।
उवरिमखिइठिइसहिउं, इछियपयरम्मि उक्कोसा ॥ २३८ ॥

व्याख्या—उपरितन्यां क्षितौ योत्कृष्टा स्थितिस्तस्या विश्लेषो विवक्षितपृथिव्युत्कृष्टस्थितेः सकाशादपनयनं, विश्लेषे च कृते यदवतिष्ठते, तस्य स्वकप्रतरैर्विभागो भागहरणं, भागे च हृते यल्लब्धं तदिष्टप्रतरमानेन गुण्यते, गुणिते च सति यदागच्छति, तदुपरितनस्थितिसत्कोत्कृष्टस्थितिसहितं तत्र प्रतर उत्कृष्टा स्थितिः । तद्यथा—शर्कराप्रभायामुत्कृष्टा स्थितिस्त्रीणि सागरोपमाणि, तेभ्यो रत्नप्रभापृथिव्युत्कृष्टा स्थितिरेकसागरोपमप्रमाणा विश्लिष्यते, स्थिते शेषे द्वे सागरोपमे, तयोः शर्कराप्रभागतैरेकादशभिः प्रस्तटैर्भागो ह्रियते, लब्धौ द्वौ सागरोपमस्यैकादशभागौ, तदिष्टप्रतरेणैकेन गुण्यते, एकेन च गुणितं तदेव भवतीति तावेव द्वौ सागरोपमस्यैकादशभागौ जातौ, तावुपरितनपृथिव्युत्कृष्टस्थितिसहितौ शर्कराप्रभायाः प्रथमे प्रस्तटे उत्कृष्टस्थितिरेकं सागरोपमं द्वौ च सागरोपमस्यैकादशभागौ तत्रोत्कृष्टा स्थितिरित्यर्थः । यदि पुनर्द्वितीये प्रस्तट उत्कृष्टा स्थितिर्ज्ञातुमिष्यते तर्हि तौ द्वौ सागरोपमस्यैकादशभागौ द्वाभ्यां गुण्येते, जाताश्चत्वार एकादशभागाः, ते रत्नप्रभापृथिव्युत्कृष्टस्थितिसहिताः क्रियन्ते, द्वितीये प्रस्तट उत्कृष्टा स्थितिः । एवं तृतीये षट् । चतुर्थेऽष्टौ । एवं प्रतिप्रस्तटं भागद्वयवृद्धिस्तावदवसेया यावदेकादशं प्रस्तटं । एकादशभिश्च भागैः सागरोपमं कर्तव्यं । तत्र एकादशे प्रस्तटे त्रीणि सागरोपमाणि ज्ञातव्यानि । या च पूर्वप्रस्तट उत्कृष्टा सोत्तरस्मिन् प्रस्तटे जघन्या । ततोऽयं तात्पर्यार्थः—शर्कराप्रभाया प्रथमे प्रस्तटे जघन्या स्थितिरेकं सागरोपमं, उत्कृष्टैकं सागरोपमं द्वौ च सागरोपमस्यैकादशभागौ । द्वितीये प्रस्तटे जघन्या स्थितिरेकं सागरोपमं द्वौ च सागरोपमस्यैकादशभागौ, उत्कृष्टैकं सागरोपमं चत्वारः सागरोपमस्यैकादशभागाः । तृतीये जघन्या स्थितिरेकं सागरोपमं चत्वारः सागरोपमस्यैकादशभागाः, उत्कृष्टैकं सागरोपमं षट् सागरो-

पमस्यैकादशभागाः । चतुर्थे प्रस्तटे जघन्या स्थितिरेकं सागरोपमं षट् सागरोपमस्यैकादशभागाः, उत्कृष्टैकं सागरोपममष्टौ सागरोपमस्यैकादश भागाः । पञ्चमे प्रस्तटे जघन्यैकं सागरोपममष्टौ सागरोपमस्यैकादशभागाः, उत्कृष्टैकं सागरोपमं दश सागरोपमस्यैकादशभागाः । षष्ठे प्रस्तटे जघन्यैकं सागरोपमं दश सागरोपमस्यैकादशभागाः, उत्कृष्टा द्वे सागरोपमे एकः सागरोपमस्यैकादशभागः । सप्तमे प्रस्तटे जघन्या द्वे सागरोपमे एकः सागरोपमस्यैकादशभागः, उत्कृष्टा द्वे सागरोपमे त्रयः सागरोपमस्यैकादशभागाः । अष्टमे प्रस्तटे जघन्या द्वे सागरोपमे त्रयः सागरोपमस्यैकादशभागाः, उत्कृष्टा द्वे सागरोपमे पञ्च सागरोपमस्यैकादशभागाः । नवमे प्रस्तटे जघन्या द्वे सागरोपमे पञ्च सागरोपमस्यैकादशभागाः, उत्कृष्टा द्वे सागरोपमे सप्त सागरोपमस्यैकादशभागाः । दशमे जघन्या द्वे सागरोपमे सप्त सागरोपमस्यैकादशभागाः, उत्कृष्टा द्वे सागरोपमे नव सागरोपमस्यैकादशभागाः । एकादशे जघन्या द्वे सागरोपमे नव सागरोपमस्यैकादशभागाः, उत्कृष्टा त्रीणि सागरोपमाणि ॥ स्थापना—

शर्कराप्रभानरकेषु प्रतरजघन्योत्कृष्टमायुः—

| प्रतर | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ |
|---|---|---|---|---|---|---|---|---|---|---|---|
| जघन्यसागर | १ | १—२ | १—४ | १—६ | १—८ | १—१० | २—१ | २—३ | २—५ | २—७ | २—९ |
| जघन्यभाग | ० | ११ | ११ | ११ | ११ | ११ | ११ | ११ | ११ | ११ | ११ |
| उत्कृष्टसागर | १—२ | १—४ | १—६ | १—८ | १—१० | २—१ | २—३ | २—५ | २—७ | २—९ | ३ |
| उत्कृष्टभाग | ११ | ११ | ११ | ११ | ११ | ११ | ११ | ११ | ११ | ११ | ११ |

तथा वालुकाप्रभायामुत्कृष्टा स्थितिः सप्त सागरोपमाणि, तेभ्यः शर्कराप्रभापृथिव्युत्कृष्टा स्थितिः सागरोपमत्रयप्रमाणा विश्लिष्यते, स्थितानि शेषाणि चत्वारि सागरोपमाणि, तेषां वालुकागतैर्नवभिः प्रतरैर्भागो ह्रियते, लब्धाश्चत्वारः सागरोपमस्य नवभागाः, त इष्टप्रतरेणैकेन गुण्यन्ते, जातास्त एव चत्वारो नवभागाः, त उपरितनशर्कराप्रभापृथिव्युत्कृष्टस्थितिसहिता वालुकाप्रभायाः प्रथमे प्रस्तट उत्कृष्टा स्थितिः । एवं करणवशतः प्रतिप्रस्तटं भागचतुष्टयवृद्ध्या प्रतिप्रस्तटमुत्कृष्टा स्थितिस्तावद्वाच्या यावच्चरमे प्रस्तटे सप्त सागरोपमाण्युत्कृष्टा स्थितिः, पूर्वपूर्वप्रस्तटगता चोत्कृष्टा स्थितिरुत्तरस्मिन्नुत्तरस्मिन् जघन्या । तद्यथा—वालुकाप्रभायाः प्रथमे प्रस्तटे जघन्या स्थितिस्त्रीणि सागरोपमाणि, उत्कृष्टा त्रीणि सागरोपमाणि चत्वारश्च सागरोपमस्य नवभागाः । द्वितीये प्रस्तटे जघन्या त्रीणि सागरोपमाणि चत्वारः सागरस्य नवभागाः, उत्कृष्टा त्रीणि सागरोपमाण्यष्टौ सागरोपमस्य नवभागाः । तृतीये प्रस्तटे जघन्या त्रीणि सागरोपमाण्यष्टौ सागरोपमस्य नवभागाः, उत्कृष्टा चत्वारि सागरोपमाणि त्रयः सागरोपमस्य नवभागाः । चतुर्थे प्रस्तटे जघन्या चत्वारि सागरोपमाणि त्रयः सागरोपमस्य नवभागाः, उत्कृष्टा चत्वारि सागरोपमाणि सप्त सागरोपमस्य नवभागाः । पञ्चमे प्रस्तटे जघन्या चत्वारि सागरोपमाणि सप्त सागरोपमस्य नवभागाः, उत्कृष्टा पञ्च सागरोपमाणि द्वौ सागरोपमस्य नवभागौ । षष्ठे प्रस्तटे जघन्या पञ्च सागरोपमाणि द्वौ सागरोपमस्य नवभागौ, उत्कृष्टा पञ्च सागरोपमाणि षट् सागरोपमस्य नवभागाः । सप्तमे प्रस्तटे जघन्या पञ्च सागरोपमाणि षट् सागरोपमस्य नवभागाः, उत्कृष्टा षट् सागरोपमाण्येकः सागरोपमस्य नवभागः ।

अष्टमे प्रस्तटे जघन्या षट् सागरोपमाण्येकः सागरोपमस्य नवभागः, उत्कृष्टा षट् सागरोपमाणि पञ्च सागरोपमस्य नवभागाः। नवमे प्रस्तटे जघन्या षट् सागरोपमाणि पञ्च सागरोपमस्य नवभागाः, उत्कृष्टा परिपूर्णानि सप्त सागरोपमाणि॥

वालुकाप्रभानरकेषु प्रतरजघन्योत्कृष्टमायुः—

| प्रतर | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ |
|---|---|---|---|---|---|---|---|---|---|
| जघन्यसागर | ३ | ३—४ | ३—८ | ४—३ | ४—७ | ५—२ | ५—६ | ६—१ | ६—५ |
| जघन्यभाग | ० | ९ | ९ | ९ | ९ | ९ | ९ | ९ | ९ |
| उत्कृष्टसागर | ३—४ | ३—८ | ४—३ | ४—७ | ५—२ | ५—६ | ६—१ | ६—५ | ७ |
| उत्कृष्टभाग | ९ | ९ | ९ | ९ | ९ | ९ | ९ | ९ | ० |

तथा चतुर्थपृथिव्यामुत्कृष्टा स्थितिः दश सागरोपमाणि, तेभ्यो वालुकाप्रभापृथिव्युत्कृष्टा स्थितिः सागरोपमसप्तकप्रमाणा विश्लिष्यते, स्थितानि शेषाणि त्रीणि सागरोपमाणि, तेषां पङ्कप्रभागतैः सप्तभिः प्रस्तटैर्भागो ह्रियते, लब्धास्त्रयः सागरोपमस्य सप्तभागाः, त इष्टप्रतरेणैकेन गुण्यन्ते, जातास्त एव त्रयः सागरोपमस्य सप्तभागाः, त उपरितनवालुकापृथिव्युत्कृष्टस्थितिसहिताः पङ्कप्रभायाः प्रथमे प्रस्तट उत्कृष्टा स्थितिः। एवं करणवशतो भागत्रयवृद्ध्या प्रतिप्रस्तटमुत्कृष्टा स्थितिस्तावद्वाच्या यावच्चरमे प्रस्तटे दश सागरोपमाण्युत्कृष्टा स्थितिः, पूर्वपूर्वप्रस्तटगता चोत्कृष्टा स्थितिरुत्तरस्मिन्नुत्तरस्मिन् जघन्या। तद्यथा—पङ्कप्रभायाः प्रथमे प्रस्तटे जघन्या स्थितिः सप्त सागरोपमाणि, उत्कृष्टा सप्त सागरोपमाणि

त्रयः सागरोपमस्य सप्तभागाः । द्वितीये प्रस्तटे जघन्या सप्त सागरोपमाणि त्रयः सागरोपमस्य सप्तभागाः, उत्कृष्टा सप्त सागरोपमाणि षट् सागरोपमस्य सप्तभागाः । तृतीये प्रस्तटे जघन्या सप्त सागरोपमाणि षट् सागरोपमस्य सप्तभागाः, उत्कृष्टाऽष्टौ सागरोपमाणि द्वौ सागरोपमस्य सप्तभागौ । चतुर्थे प्रस्तटे जघन्याऽष्टौ सागरोपमाणि द्वौ सागरोपमस्य सप्तभागौ, उत्कृष्टाऽष्टौ सागरोपमाणि पञ्च सागरोपमस्य सप्तभागाः । पञ्चमे प्रस्तटे जघन्याऽष्टौ सागरोपमाणि पञ्च सागरोपमस्य सप्तभागाः, उत्कृष्टा नव सागरोपमाण्येकः सागरोपमस्य सप्तभागः । षष्ठे प्रस्तटे जघन्या नव सागरोपमाण्येकः सागरोपमस्य सप्तभागः, उत्कृष्टा नव सागरोपमाणि चत्वारः सागरोपमस्य सप्तभागाः । सप्तमे प्रस्तटे जघन्या नव सागरोपमाणि चत्वारः सागरोपमस्य सप्तभागाः, उत्कृष्टा परिपूर्णानि दश सागरोपमाणि ॥ स्थापना—

पङ्कप्रभानरकेषु प्रतरजघन्योत्कृष्टमायुः—

| प्रतर | १ | २ | ३ | ४ | ५ | ६ | ७ |
|---|---|---|---|---|---|---|---|
| जघन्यसागर | ७ | ७—३ | ७—६ | ८—२ | ८—५ | ९—१ | ९—४ |
| जघन्यभाग | ० | ७ | ७ | ७ | ७ | ७ | ७ |
| उत्कृष्टसागर | ७—३ | ७—६ | ८—२ | ८—५ | ९—१ | ९—४ | १० |
| उत्कृष्टभाग | ७ | ७ | ७ | ७ | ७ | ७ | ० |

तथा पञ्चमपृथिव्या उत्कृष्टा स्थितिः सप्तदश सागरोपमाणि, तेभ्यः पङ्कप्रभोत्कृष्टा स्थितिर्दशसागरोपमप्रमाणा विश्लिष्यते, स्थितानि शेषाणि सप्त सागरोपमाणि, तेषां धूमप्रभापृथिवीगतैः पञ्चभिः प्रतरैर्भागो ह्रियते, हृते च भागे लब्धमेकं सागरोपमं, द्वौ च सागरोपमस्य पञ्चभागौ, एतच्चेष्टप्रतरेणैकेन गुण्यते, एकेन च गुणितं तदेव भवतीति ततस्तदुपरितनपङ्कपृथिवीगतदशसागरोपमप्रमाणोत्कृष्टस्थितिसहितं धूमप्रभायाः पृथिव्याः प्रथमे

प्रस्तट उत्कृष्टस्थितिपरिमाणं । एवं करणवशतः प्रतिप्रस्तटमुत्कृष्टा स्थितिर्भावनीया, पूर्वपूर्वप्रस्तटगता चोत्कृष्टा स्थितिरुत्तरस्मिन्नुत्तरस्मिन् जघन्या वेदितव्या । सा चैवं—धूमप्रभायाः प्रथमे प्रस्तटे जघन्या स्थितिर्दश सागरोपमाणि, उत्कृष्टैकादश सागरोपमाणि द्वौ सागरोपमस्य पञ्चभागौ । द्वितीये प्रस्तटे जघन्यैकादश सागरोपमाणि द्वौ च सागरोपमस्य पञ्चभागौ, उत्कृष्टा द्वादश सागरोपमाणि चत्वारः सागरोपमस्य पञ्चभागाः । तृतीये प्रस्तटे जघन्या द्वादश सागरोपमाणि चत्वारः सागरोपमस्य पञ्चभागाः, उत्कृष्टा चतुर्दश सागरोपमाण्येकः सागरोपमस्य पञ्चभागः । चतुर्थे प्रस्तटे जघन्या चतुर्दश सागरोपमाण्येकः सागरोपमस्य पञ्चभागः, उत्कृष्टा पञ्चदश सागरोपमाणि त्रयः सागरोपमस्य पञ्चभागाः । पञ्चमे प्रस्तटे जघन्या पञ्चदश सागरोपमाणि त्रयः सागरोपमस्य पञ्चभागाः, उत्कृष्टा परिपूर्णानि सप्तदश सागरोपमाणि। तथा तमःप्रभापृथिव्यामुत्कृष्टा स्थितिर्द्वाविंशति सागरोपमाणि, तेभ्यो धूमप्रभोत्कृष्टा स्थितिः सप्तदशसागरोपमप्रमाणा विश्लिष्यते, स्थितानि शेषाणि पञ्च सागरोपमाणि, तेषां तमःप्रभागतैस्त्रिभिः प्रस्तटैर्भागो ह्रियते, हृते च भागे लब्धमेकं सागरोपमं द्वौ च सागरोपमस्य त्रिभागौ, तच्चेष्टप्रतरेणैकेन गुण्यते, एकेन च गुणितं तदेव भवति, ततस्तदुपरितनधूमप्रभागतसप्तदशसागरोपमप्रमाणोत्कृष्टस्थितिसहितं, एतावत्तमःप्रभायाः पृथिव्याः प्रथमे प्रस्तट उत्कृष्टस्थितिपरिमाणं । एवं करणवशात् प्रतिप्रस्तटमुत्कृष्टा स्थितिर्वेदितव्या, या च पूर्वपूर्वप्रस्तटोत्कृष्टा स्थितिः सोत्तरस्मिन्नुत्तरस्मिन् प्रस्तटे जघन्या । तद्यथा—तमःप्रभायाः पृथिव्याः प्रथमे प्रस्तटे जघन्या स्थितिः सप्तदश सागरोपमाणि, उत्कृष्टाऽष्टादश सागरोपमाणि द्वौ सागरोपमस्य त्रिभागौ । द्वितीये प्रस्तटे जघन्या स्थितिरष्टादश सागरोपमाणि द्वौ च सागरोपमस्य त्रिभागौ,

उत्कृष्टा विंशतिसागरोपमाण्येकः सागरोपमस्य त्रिभागः। तृतीये प्रस्तटे जघन्या विंशतिः सागरोपमाण्येकः सागरोपमस्य त्रिभागः, उत्कृष्टा परिपूर्णानि द्वाविंशतिः सागरोपमाणि। सप्तम्यां तु तमस्तमःप्रभायां पृथिव्यां द्वाविंशतिः सागरोपमाणि जघन्या स्थितिः, उत्कृष्टा स्थितिस्त्रयस्त्रिंशत् सागरोपमाणि ॥ त्रयाणां स्थापना—

| | धूमप्रभानरकेषु प्रतरजघन्यो० | | | | | तमःप्रभानरके० | | | तमस्तमःप्रभानरके० |
|---|---|---|---|---|---|---|---|---|---|
| प्रतर | १ | २ | ३ | ४ | ५ | १ | २ | ३ | १ |
| ज० सा० | १० | ११–२ | १२–४ | १४–१ | १५–३ | १७ | १८–२ | २०–१ | २२ |
| ज० भाग | ० | ५ | ५ | ५ | ५ | ० | ३ | ३ | ० |
| उ० सा० | ११–२ | १२–४ | १४–१ | १५–३ | १७ | १८–२ | २०–१ | २२ | ३३ |
| उ० भा० | ५ | ५ | ५ | ५ | ० | ३ | ३ | ० | ० |

नरकेषु च यस्य यावती स्थितिः स तावन्तं कालं निरन्तरमनुबद्धां दुःखवेदनामनुभवति, न त्वक्षिनिमीलनकालमात्रमपि सुखं। उक्तं च ( जीवाभिगमे )—"अच्छिनिमीलणमित्तं नत्थि सुहं दुक्खमेव अणुबद्धं। नरए नेरइयाणं, अहोनिसिं पच्चमाणाणं ॥ १ ॥" दुःखवेदना नरकेषु त्रिविधा, तद्यथा—क्षेत्रस्वभावजा, परस्परोदीरिता, संक्लिष्टाऽसुरोदीरिता च। क्षेत्रस्वभावजा नरकेष्वधोधोऽशुभाशुभतराऽशुभतमा। तत्र रत्नप्रभायां पृथिव्यामुष्णवेदना, सा चातितीव्रा, तस्याश्च स्वरूपमेवं प्रवचनवेदिनः प्रदर्शयन्ति, यथा कस्यापि पुंसो निदाघचरमकाले पित्तव्याधिप्रकोपाभिभूतस्य सर्वतः

प्रदीप्ताग्निराशिपरिवृतस्य मेघविनिर्मुक्ते नभसि मध्याह्ने वातप्रचाररहिते तिरस्कृतातपत्रस्य यादृगुष्णवेदनारूपं दुःखं, ततोऽनन्तगुणं रत्नप्रभायां नारकेषु । अपि च स नारको यदि किल तस्मात् स्थानादुत्पाट्य सुसंभृतखादिराङ्गारराशावुद्दीप्ते प्रक्षिप्यते, ततः सुशीतमृदुमारुतां शीतलां छायामिव प्राप्तः सुखमनुपमं विन्द्यात्, निद्रां चोपलभेत । रत्नप्रभातोऽपि शर्कराप्रभायामुष्णवेदना तीव्रतरा । ततोऽपि वालुकाप्रभायां तीव्रतमा । पङ्कप्रभायां चतुर्थ्यां पृथिव्यां बहुषूपरितनेषु नरकावासेषूष्णवेदना, स्तोकेषु शेषेष्वधस्तनेषु नरकावासेषु शीतवेदना । तस्याश्च स्वरूपमित्थं प्रवचनवेदिनः प्रकटयन्ति—पौषे माघे वा मासे रात्रौ तुषारकणक्लिप्तगात्रस्य हृदयकरचरणदशनाधरोष्ठप्रकम्पकारिणि प्रतिसमयप्रवृद्धमाने प्रवाति शीतमारुते निरग्नेर्निराश्रयस्य निष्प्रावरणस्य यादृक् शीतसमुद्भवं दुःखं, ततोऽनन्तगुणं शीतवेदनेषु नरकेषु । अपि चैवं संभाव्यते—स यदि नारकः शीतवेदनान्नरकादुत्क्षिप्य माघमासे रात्रौ नभसि तुषारराशौ सकलशरीरप्रकम्पकारिणि प्रक्षिप्यते ततः स सुखमनुपमं विन्द्यात्, निद्रां चोपलभेत । पञ्चम्यां तु धूमप्रभायां पृथिव्यां बहुषु नरकावासेषु शीतवेदना स्तोकेषूष्णवेदना । एते च द्वे अपि वेदने चतुर्थपृथिव्यपेक्षयाऽनन्तगुणे । षष्ठ्यां च तमःप्रभाभिधानायां पृथ्व्यां केवला शीतवेदना, सा च पञ्चमपृथिव्यपेक्षयाऽतिकष्टतरा । ततोऽपि या सप्तम्यां शीतवेदना साऽतिकष्टतमा । योऽपि च पुद्गलानां बन्धनगतिसंस्थानभेदवर्णगन्धरसस्पर्शागुरुलघुशब्दरूपो दशविधः परिणामः सोऽपि नरकेषु तथाक्षेत्रस्वाभाव्यादतिपीडाजनकः । तथाहि—यस्तैः तैः पुद्गलैः प्रतिक्षणमाहार्यैः सह संबन्धलक्षणो बन्धनपरिणामः स महाग्न्यादिसंबन्धादप्यधिकवेदनः । योऽपि चोष्ट्रादिरूपो गतिपरिणामः स तप्तलोहादिपदन्यासादधिकतरपीडा-

जनकः । संस्थानपरिणामोऽप्यत्यन्तजघन्यहुण्डरूपः स्वस्यापि च दृश्यमानो महोद्वेगजनकः । संस्थानं च नारकाणां लून-
पक्षस्याण्डजपक्षिण इव पूर्वसूरयो व्यावर्णयन्ति । भेदपरिणामो नाम कुड्यादिभ्यो यत् पुद्गलविचटनं तच्छस्त्रोपनिपाता-
दप्यतिपीडाकारि । वर्णपरिणामः परमनिकृष्टो बिभीषणः । तथाहि—ते नरकावासा अविद्यमानद्वाराः सर्वासु दिक्षु
विदिक्षूर्ध्वमधश्चोपमातीतेन भयानकेनादृष्टपर्यन्तेन तमसा नित्यान्धकाराः श्लेष्ममूत्रपुरीषस्रो(स्रो)तोमलरुधिरवसा-
मेदः पूत्यानुलिप्तभूतलप्रदेशाः श्मशानमिव पूतिमांसकेशास्थिचर्मदन्तनखास्तीर्णभूमयः । गन्धपरिणामः शृगालमा-
र्जारनकुलसर्पमूषकहस्त्यश्वगोमनुष्याणां यानि जीवविप्रमुक्तानि कलेवराणि तत्क्वाथादप्यधिकमशुभतरः । रसपरिणामो
घोषातक्यादिनिस्यन्दादप्यतिकटुकः । स्पर्शपरिणामो वृश्चिककपिकच्छ्वादिस्पर्शादप्यधिकतरदुःखावहः । अगुरुलघुपरि-
णामोऽतितीव्रानेकदुःखसमाश्रयः । शब्दपरिणामोऽपि तेषामतीवाशुभः, तथाहि—ते सदैव पीडयाक्रान्तमनसः करुणै-
रार्तस्वरैर्विलापैरारटन्तस्तिष्ठन्ति, क्षुत्पिपासे अपि नारकाणामतिकष्टतमरूपे, ते हि नारका अनुपरतशुष्केन्धनोपादाने-
नाग्निनेवातितीक्ष्णेन प्रततेन क्षुदग्निना दह्यमानशरीराः सदा व्यवतिष्ठन्ते । अपिच यदि ते सर्वानपि सकलजगद्वर्तिनो
घृतादिपुद्गलानाहारयेयुस्तथापि न ते तृप्तिमासादयन्ति । पिपासयाऽपि च ते तीव्रानुषक्तया सदैव शुष्ककण्ठोष्ठतालु-
जिह्वा वर्तन्ते । अपिच यदि सर्वानपि समुद्रान् पिबेयुस्तथापि न ते तृप्तिमश्नुवते । किं तु वर्धेयातामेवाधिके अधिकतरे
क्षुत्पिपासे तेषामिति । यदपि च नारकाणामवधिज्ञानं विभङ्गज्ञानं वा तदपि तेषां दुःखकारणं, ते हि दूरत एव तिर्य-
गूर्ध्वमधश्च निरन्तरं दुःखहेतुमागच्छन्तं पश्यन्ति, दृष्ट्वा च भयेन कम्पमाना अवतिष्ठन्ते । इयं समस्तापि क्षेत्रस्वभावजा

दुःखवेदना । सम्प्रति परस्परोदीरिता कथ्यते—इह द्विविधा नारकाः, तद्यथा—सम्यग्दृष्टयो मिथ्यादृष्टयश्च । तत्र ये मिथ्यादृष्टयस्ते मिथ्याज्ञानावलिप्तचेतसः परमार्थमजानानाः परस्परमुदीरयन्ति दुःखानि । सम्यग्दृष्टयस्तु नूनमस्माभिः कृतं जन्मान्तरेऽपि तत् किमपि पापं प्राणिहिंसारूपं येन निमग्ना वयं परमदुःखाम्भोधाविति परिभावयन्तः सहन्ते सम्यक् परोदीरितानि दुःखानि, न पुनरन्येषां दुःखमुत्पादयन्ति, दृष्टविपाकत्वात्, अत एव च ते मिथ्यादृष्टिभ्योऽधिकतरदुःखाः प्रवचने प्रतिपाद्यन्ते, भूयिष्ठतया मानसिकदुःखसंभवात् । येऽपि च मिथ्यादृष्टयः परस्परमुदीरयन्ति दुःखानि तेऽप्येवं यथेह जगत्यपूर्वान् ग्रामान्तरादागच्छतः शुनो दृष्ट्वा तद्ग्रामवास्तव्याः श्वानो निर्दयं क्रुध्यन्ति परस्परं प्रहरन्ति च । तथा तेषामपि नारकाणां विभङ्गज्ञानबलेन दूरत एवान्योऽन्यमालोक्य तीव्रानुशयो महान् क्रोध उपजायते । ततः क्रोधाग्निनोद्दीपितमनसो दुःखसमुद्घातनिपतिता अतर्किता. श्वान इव समुद्धता वैक्रियभयानकं रूपमाधाय तेष्वेव स्वस्वनरकावासेषु क्षेत्रानुभावजनितानि पृथिवीपरिणामरूपाणि यान्ययःशूलशिलामुद्गरकुन्ततोमरासिपट्टखड्गयष्टिपरशुप्रभृतीनि प्रहरणानि वैक्रियकृतानि वा तान्यादाय तैः करचरणदशनैश्च परस्परमभिघ्नन्ति । ततः परस्पराभिघाततो विकृताङ्गा निःस्वनन्तो गाढवेदना सूनाघातनप्रविष्टा महिषादय इव रुधिरकर्दमे विचेष्टन्ते । एवमादिका परस्परोदीरिता दुःखवेदना । संक्लिष्टाऽसुरोदीरिता नाम परमाधार्मिकोदीरिता । ते च परमाधार्मिकाः पञ्चदश, तद्यथा—अम्बाः १, अम्बरीषाः २, श्यामाः ३, शबलाः ४, रुद्राः ५, अपरुद्राः ६, कालाः ७, महाकालाः ८, असयः ९, धनुर्नामानः १०, कुम्भीनामानः ११, वालुकानामानः १२, वैतरणीनामानः १३, खरस्वराः १४, महाघोषाः १५ ॥ एते चित्राभिरु-

पपर्तिभिर्नारकाणां वेदनाः समुदीरयन्ति । तद्यथा—कदाचित्तप्तायोरसपानं कारयन्ति, कदाचित्तप्तायःस्तम्भालिङ्गनं, तथा कूटशाल्मलीनामग्रभागेष्वारोपणं कुर्वन्ति, अयोघनेनाभिघातं, वासीक्षुरादिभिस्तक्षणं तच्छित्वा च तदुपरि क्षारतप्ततैलाभिषेकं, अयस्कुन्ताग्रेषु प्रोतनं, अम्बरीषेषु भर्जनं, तिलवद्यन्त्रेषु पीडनं, क्रकचेन पाटनं, तथा सिंहव्याघ्रद्वीपिशृगालगृध्रकङ्कोलूकश्येनादीन् नानाविधान् वैक्रियान् कृत्वा तैरनेकधा कदर्थनं, तप्तवालुकासु मध्येऽवतारणं, असिपत्रवनमध्ये प्रवेशनं, वैतरण्यां नद्यामवतारणं, परस्परमायोधनमित्यादि । अपिच ते कुम्भीषु नैरयिकान् पचन्ति, ते च पच्यमानाः परितापमसहन्तो यदि प्रयत्नविशेषादूर्ध्वमुत्प्लवन्ते तत उत्कर्षतः पञ्च योजनशतान्यूर्ध्वं गच्छन्ति, ततो निपतन्तोऽपान्तराले द्रोणकाकैर्वज्रतुण्डाभिश्च भूभिरितश्चेतश्च त्रोट्यमानाः किञ्चिच्छेषा भूमौ निपतन्ति, निपतिताश्च सन्तो विकुर्वितैर्व्याघ्रादिभिर्विलुप्यन्ते । उक्तं च सूत्रकृताङ्गचूर्णौ—"ते नेरइया पिठपयणगमाइसु पयणगेसु भिज्जिगाइ व रुब्भमाणा उप्फिडंति नेरइयाणुप्पाउ उड्ढं पंचेव जोयणसयाइं ततो उप्फिडिया वि संता उड्ढं काएहिं विविहेहिं अउमुहेहिं खज्जमाणा भक्खियसेसा भूमि संपत्ता वग्घसियालाइएहिं खज्जंति" । किमर्थमेत एवं ? इति चेदुच्यते—ते हि प्राग्जन्मनि संक्लिष्टक्रूरकर्माणः पापाभिरतिशीलाः पञ्चाग्न्यादिरूपं मिथ्याकष्टतपः कृत्वा रौद्रीमासुरीं गतिमनुप्राप्ताः सन्तस्तांस्तान् नारकाणामुक्तस्वरूपा वेदनाः समुदीरयन्ति, यथा चेह मनुष्यलोके मेषकुक्कुटवर्तकलावकान् मुष्टिमल्लांश्च युध्यमानान् परस्परं चाभिघ्नतः पश्यतां रागद्वेषाभिभूतानामकुशलानुबन्धिपुण्यानां परा प्रीतिः संजायते, तथा तेषां परमाधार्मिकाणां तथा तथा नारकान् यातयतां परस्परमभिघ्नतश्च पश्यतां महान् प्रमोद उपजायते, प्रमोदवशाच्च ते महतोऽट्टहासान्

कुर्वन्ति, चेलोत्क्षेपं विदधति, हस्ततलेन च हृष्टा भूमिमाघ्नन्ति। न च तेषां प्रेक्षणादौ शुभेऽपि तादृशी प्रीतिर्यादृशी नारकाणां कदर्थनोत्पादने। तथाकर्मोदयवशात् तेषामपि च नारकाणामित्थं कदर्थ्यमानानामसाधारणं दुःखमनुभवतां मरणमपि काङ्क्षतां न विपत्तिरकाले संपद्यते, तथारूपायुःकर्मविपाकोदयप्रभावात्। तत्र क्षेत्रस्वभावजा दुःखवेदना सप्तस्वपि पृथिवीषु, परस्परोदीरिता षष्ठीं पृथिवीं यावत्, परमाधार्मिकोदीरिताद्यासु तिसृषु पृथिवीषु। तथा चोक्तं—"सत्तसु खित्तसहावा, अन्नुन्नुदीरिआ य जा छट्ठिं। तिसु आइमासु वियणा, परमाहम्मियसुरकया य॥ १॥" इह परस्परोदीरिता षष्ठीं पृथिवीं यावदित्युच्यते विचित्रासिकुन्तादिविकुर्वितप्रहरणाभिघातरूपं परस्परोदीरणमधिकृत्य, यावता पुनः सप्तम्यामपि परस्परोदीरिता वेदितव्या। तथाहि—तेऽपि सप्तमपृथिवीनारका लोहितकुन्थुरूपाण्यनेकानि विकुर्वित्वा परस्परमुदीरयन्ति दुःखं। तथा चोक्तं जीवाभिगमे—"छट्ठसत्तमासु णं पुढवीसु नेरइया लोहियकुंथुरूवाइं वइरामयतुंडाइं गोमयकीडसमाणाइं विउव्वित्ता अन्नमन्नस्स कायं समतुरंगेमाणा समतुरंगेमाणा सयपोरा किमिया इव चालेमाणा चालेमाणा अंतो अंतो अणुप्पविसमाणा अणुप्पविसमाणा वेयणं उदीरयंति" इति। अत्र समतुरंगेमाणा इति देशीवचनत्वात् भक्षयन्तो भक्षयन्तः, "सयपोरा किमिया इव त्ति" शतपर्वकृमय इव इक्षुकृमय इवेत्यर्थः॥ २३८॥

सम्प्रति नरकपृथिवीनामभिधानगोत्रप्रतिपादनार्थमाह—

**घम्मा वंसा सेला, अंजण रिट्ठा मघा य माघवई। पुढवीणं नामाइं, रयणाइं हुंति गोत्ताइं॥ २३९॥**

व्याख्या—इह यन्निरन्वयमभिधानं तन्नामेत्यभिधीयते, यत्पुनः सान्वयं तद्गोत्रं। तत्र सप्तानामपि पृथिवीनां यथा

सप्तममूनि नामानि, तद्यथा—प्रथमा पृथिवी घर्मा १, द्वितीया वंशा २, तृतीया शैला ३, चतुर्थ्यञ्जना ४, पञ्चमी रिष्टा ५, षष्ठी मघा ६, सप्तमी माघवती ७ इति । रत्नादीनि पदैकदेशे पदसमुदायोपचाराद्रत्नप्रभादीनि नामानि गोत्राण्यन्वर्थयुक्तानि, तद्यथा—रत्नानि वज्रादीनि, प्रभाशब्दोऽत्र सर्वत्रापि रूपवाची. रत्नानि प्रभा रूपं स्वभावो यस्याः सा रत्नप्रभा रत्नस्वभावा रत्नमयी रत्नबहुलेत्यर्थः । एवं शर्कराप्रभादीन्यपि नामानि वाच्यानि ॥ २३९ ॥

सम्प्रति घर्मादिपृथिवीनामेव प्रतिष्ठानविधिं संस्थानविधिं च प्रतिपादयति—

**उदहीघणतणुवाया, आगासपइट्ठिया उ सव्वाओ । घम्माई पुढवीओ, छत्ताइछत्तसंठाणा ॥ २४० ॥**

व्याख्या—सर्वा अपि घर्मादिपृथिव्यः प्रत्येकमुदधिघनतनुवाताकाशप्रतिष्ठिताः घनग्रहणमुदधौ वाते च संबध्यते, घनोदधिघनवाततनुवाताकाशप्रतिष्ठिता इत्यर्थः । तथाहि—घर्मा पृथिव्यनन्तरं घनोदधौ प्रतिष्ठिता, घनोदधिरपि घनवाते, घनवातोऽपि तनुवाते, तनुवातोऽप्याकाशे, आकाशं च स्वप्रतिष्ठितमिति । तत्र घनोदधिः कठिनस्तिमितोदकरूपः, स च तथास्वाभाव्यान्न प्रस्यन्दते, नापि तत्राश्रिता पृथिवी विलयमुपगच्छति । घनवातो घनापरिस्यन्दवायुरूपः, स च तथारूपः तथाविधानादिपारिणामिकस्वभावत्वात् । तनुवाताकाशे तु प्रतीते । एवं वंशादिष्वपि पृथिवीषु प्रत्येकं वाच्यं । ताश्च सप्तापि पृथिव्यः समुदायेन संस्थानतश्छत्रातिछत्रसंस्थानाः छत्रमतिक्रम्य छत्रं छत्रातिछत्रं तद्वत् संस्थानं यासां ताश्छत्रातिछत्रसंस्थाना, यथा ह्युपरितनं छत्रं लघु, तदधोवर्ति महत्, ततोऽप्यधोवर्ति महत्, एवमेता अपि घर्मादिपृथिव्योऽधोधोवर्तिन्यो महाविस्तारा इति ॥ २४० ॥

साम्प्रतं घर्मादिपृथिवीनामुच्चैस्त्वमाह—

**पढमा असीइसहस्सा, बत्तीसा अट्ठवीस वीसा य। अट्ठारसोलसट्ठ य, सहस्स लक्खोवरिं कुज्जा ॥२४१॥**

व्याख्या—अत्र प्राकृतत्वात् प्रथमाशब्दात् परत्र विभक्तेर्लोपः, प्रथमायां घर्माभिधायां पृथिव्यामुच्चैस्त्वपरिमाणं परिभावयन्नशीतिसहस्राणि लक्षस्योपरि कुर्यात्। किमुक्तं भवति? प्रथमाया रत्नप्रभायाः पृथिव्या अशीतियोजनसहस्राधिको योजनलक्षो बाहल्यमिति। एवं द्वितीयादिष्वपि पृथिवीषु बाहल्यपरिभावने द्वात्रिंशदादीनि योजनसहस्राणि लक्षस्योपरि कुर्यात्। अत्राप्ययं भावार्थः—द्वितीयस्यां पृथिव्यां बाहल्यमानं द्वात्रिंशद्योजनसहस्राधिको लक्षः। तृतीयस्यां पृथिव्यामष्टाविंशतियोजनसहस्राधिकः। चतुर्थ्यां पृथिव्यां विंशतियोजनसहस्राधिकः। पञ्चम्यामष्टादशयोजनसहस्राधिकः। षष्ठ्यां षोडशयोजनसहस्राधिकः। सप्तम्यामष्टयोजनसहस्राधिक इति। योजनं चेह प्रमाणाङ्गुलनिष्पन्नं द्रष्टव्यं। रत्नप्रभायां च पृथिव्यामशीतियोजनसहस्राधिको लक्षः एवं, षोडशसहस्रप्रमाणं प्रथमं खरकाण्डं, द्वितीयं पङ्कबहुलं काण्डं चतुरशीतियोजनसहस्रमानं, तृतीयमशीतियोजनसहस्रप्रमाणं जलबहुलं काण्डमिति। शेषास्तु पृथिव्यः सर्वा अपि पृथिवीस्वरूपाः, केवलं शर्कराप्रभा शर्कराबहुला वालुकाप्रभा वालुकाबहुलेत्येवं नामानुसारतो विशेषस्वरूपं परिभावनीयं। उक्तं च—"तत्थ सहस्सा सोलस, खरकंडं पंकबहुलकंडं तु। चुलसीइ सहस्साइं, असीइ जलबहुलकंडं तु ॥ १ ॥ एवं असीइ लक्खो, खरकंडाईहि घम्मपुढवीए। सेसा पुढविसरूवा, पुढवीउ हुंति बाहल्ले ॥ २ ॥" ॥ २४१ ॥

अधुना सर्वासु पृथिवीषु घनोदध्यादीनामुच्चैस्त्वमानमाह—

**सव्वे वीस सहस्सा, बाहल्लेणं घणोदही नेया। सेसाणं तु असंखा, अहो अहो जाव सत्तमिया॥ २४२॥**

व्याख्या—सर्वासु पृथिवीष्वनन्तरमधो ये वर्तन्ते घनोदधयस्ते सर्वेऽपि मध्यभागे बाहल्येनोच्चैस्त्वेन विज्ञेयाः प्रत्येकं विंशतिर्योजनसहस्राणि, विंशतियोजनसहस्रप्रमाणं सर्वेषामपि घनोदधीनां मध्यभागे बाहल्यमिति भावः। शेषाणां तु घनवाततनुवाताकाशानामसङ्ख्येयानि योजनसहस्राण्युच्चैस्त्वेन मध्यभागे विज्ञेयानि। नवरं घनवातासङ्ख्येयकादसङ्ख्येयगुणं तनुवातासङ्ख्येयकं, तनुवातासङ्ख्येयकादसङ्ख्येयगुणमाकाशासङ्ख्येयकं। एतच्च घनवातादीनामसङ्ख्येययोजनात्मकं बाहल्यपरिमाणमधोऽधस्तावदवगन्तव्यं यावत्सप्तमी तमस्तमाभिधाना पृथिवीति॥ २४२॥

आह—किमेता घर्मादयः पृथिव्य आयामविष्कम्भाभ्यामलोकं स्पृशन्ति किं वा नेति, उच्यते—

**न वि अ फुसंति अलोगं, चउसुं पि दिसासु सव्वपुढवीओ। संगहिया वलएहिं, विक्खंभं तेसि वुच्छामि २४३**

व्याख्या—नापि च नैव सर्वा अपि पृथिव्यश्चतसृष्वपि दिक्ष्वलोकं स्पृशन्ति, किं तु संगृहीताः परिवेष्टितावलयैर्घनोदधिघनवाततनुवातवलयैः। तथाहि—सर्वासामपि पृथिवीनामधो ये वर्तन्ते घनोदध्यादयस्ते मध्यभागे यथोक्तप्रमाणबाहल्याः, ततः प्रदेशहान्या हीयमाना हीयमानाः स्वस्वपृथिवीपर्यन्तेषु तनुतरा भूत्वा स्वां स्वां पृथिवीं वलयाकारेण वेष्टयित्वा स्थिताः। तत्र तेषां घनोदध्यादिवलयानामुच्चैस्त्वं सर्वत्रापि स्वस्वपृथिव्यनुसारेण स्वयं परिभावनीयं। विष्कम्भं पुनस्तेषां वलयानामिदानीं वक्ष्ये॥ २४३॥

प्रतिज्ञातमेव निर्वाहयति—

**छच्चेव अद्धपंचम, जोअणमद्धं च होइ रयणाए । उदहीघणतणुवाया, जहासंखेण निद्दिठा ॥ २४४ ॥**

व्याख्या—रत्नप्रभायां पृथिव्यां घनोदधिघनवाततनुवाता घनोदधिघनवाततनुवातवलया यथासङ्ख्येन निर्दिष्टाः षड् योजनान्यर्धपञ्चमान्यर्धपञ्चमयोजनानि योजनमेकमर्धं च । इयमत्र भावना—रत्नप्रभायां पृथिव्यामुपरितलसमश्रेण्या घनोदधिवलयविष्कम्भः षड् योजनानि, घनवातवलयविष्कम्भोऽर्धपञ्चमानि योजनानि, तनुवातवलयविष्कम्भः सार्धं योजनं । ततः परमलोकः ॥ २४४ ॥

सम्प्रति शेषपृथिवीनां घनोदध्यादिवलयविष्कम्भप्रतिपादनार्थमाह—

**तिभागो गाउअं चेव, तिभागो गाउअस्स य । आइधुवे पक्खेवो, अहो अहो जाव सत्तमिया ॥ २४५ ॥**

व्याख्या—आदिध्रुवे प्रथमपृथिवीगतघनोदध्यादिवलयपरिमाणे यथासङ्ख्यं त्रिभागो योजनस्य, गव्यूतं, गव्यूतस्य च त्रिभागः प्रक्षेप्यः । किमुक्तं भवति ? योजनत्रिभागो घनोदधिवलयपरिमाणे प्रक्षेप्तव्यः, घनवातवलये गव्यूतं, तनुवातवलये गव्यूतस्य त्रिभागः । एतावच्चाधोऽधः प्रतिपृथिवि तावत्प्रक्षेप्तव्यं यावत्सप्तमनरकपृथिवीति ॥ २४५ ॥

साम्प्रतमित्थं प्रक्षेपे प्रतिपृथिवि यावद्घनोदध्यादिवलयानां विष्कम्भपरिमाणं भवति तावन्निर्दिदिक्षुराह—

**छच्च तिभागा पउणा, य पंच वलयाण जोअणपमाणं । एगं बारस भागा, सत्त कमा बीयपुढवीए ॥ २४६ ॥**

व्याख्या—द्वितीयस्यां शर्कराप्रभाभिधानायां पृथिव्यां वलयानां-घनोदध्यादिवलयानां क्रमात्-क्रमेण योजनप्रमाण-

मिदं विष्कम्भे । तद्यथा—घनोदधिवलयस्य विष्कम्भपरिमाणं षड् योजनानि योजनस्य त्रिभागः । घनवातवलयस्य पादोनानि पञ्च योजनानि । तनुवातवलयस्यैकं योजनं सप्त च द्वादशभागा योजनस्य । किमुक्तं भवति ? एकं योजनं द्वे गव्यूते गव्यूतस्य च त्रिभाग इति ॥ २४६ ॥

**जोअणसत्ततिभागूण पंच एगं च वलयपरिमाणं । बारस भागा अठ उ, तइआए जहक्कमं नेयं ॥२४७॥**

व्याख्या—तृतीयस्यां-वालुकाप्रभाभिधानायां पृथिव्यां वलयपरिमाणं-घनोदध्यादिवलयविष्कम्भपरिमाणं यथाक्रममिदं ज्ञेयं, तद्यथा—घनोदधिवलयस्य विष्कम्भपरिमाणं त्रिभागोनानि सप्त योजनानि, घनवातवलयस्य परिपूर्णानि पञ्च योजनानि, तनुवातवलयस्यैकं योजनमष्टौ च द्वादशभागा योजनस्य ॥ २४७ ॥

**सत्त सवाया पंच उ, पउणा दो जोयणा चउत्थीए । घणउदहिमाइआणं वलयाणमाणमेयं तु ॥ २४८ ॥**

व्याख्या—चतुर्थ्यां-पङ्कप्रभायां पृथिव्यां घनोदध्यादीनां सम्बन्धिनां वलयानां विष्कम्भमधिकृत्य मानमेतद्यथाक्रममवसेयं, तद्यथा—घनोदधिवलयस्य विष्कम्भपरिमाणं परिपूर्णानि सप्त योजनानि । घनवातवलयस्य सपादानि पादान्यधिकानि पञ्च योजनानि । तनुवातवलयस्य पादोने द्वे योजने सप्त गव्यूतानीत्यर्थः ॥ २४८ ॥

**सतिभाग सत्त तह अद्ध छठवलयाण माणमेयं तु । जोअणमेगं बारस, भागा दस पंचमाए तहा॥२४९॥**

व्याख्या—पञ्चम्यां-धूमप्रभायां पृथिव्यां वलयानां-घनोदध्यादिवलयानां यथाक्रमं विष्कम्भमानमेतत् । तद्यथा—

घनोदधिवलयस्य विष्कम्भमानं सत्रिभागानि-त्रिभागाभ्यधिकानि सप्त योजनानि । घनवातवलयस्यार्धषष्ठानि योजनानि सार्धानि पञ्च योजनानीत्यर्थः । तनुवातवलयस्यैकं योजनं दश च द्वादशभागा योजनस्य ॥ २४९ ॥

**अट्ठ तिभागूणाइं, पउणाइं छच्च वलयमाणं तु । छट्ठीए जोअणं तह, बारस भागा य इक्कारा ॥ २५० ॥**

व्याख्या—षष्ठ्यां पृथिव्यां-तमःप्रभाभिधानायां वलयमानं-घनोदध्यादिवलयविष्कम्भपरिमाणं यथाक्रममिदं, तद्यथा-घनोदधिवलयस्य विष्कम्भपरिमाणमष्टौ योजनानि त्रिभागोनानि । घनवातवलयस्य पादोनानि षड् योजनानि । तनुवातवलयस्य योजनमेकमेकादश च द्वादशभागा योजनस्य ॥ २५० ॥

**अट्ठ य छच्चिय दुन्नि य, घणोदहीमाइयाण माणं तु । सत्तमम्हिए नेयं, जहासंखेण तिण्हं पि ॥ २५१ ॥**

व्याख्या—सप्तम्यां तमस्तमःप्रभायां पृथिव्यां त्रयाणां घनोदध्यादीनां-घनोदधिप्रभृतिवलयानां विष्कम्भमधिकृत्य मानं-प्रमाणमिदं यथासङ्ख्येन ज्ञेयं, तद्यथा—घनोदधिवलयस्य परिपूर्णान्यष्टौ योजनानि । घनवातवलयस्य षड् योजनानि । तनुवातवलयस्य द्वे योजने । एवं च सति रत्नप्रभायाः पृथिव्याः सर्वासु दिक्षु तिर्यग्द्वादशभिर्योजनैरलोकः । द्वितीयस्यास्त्रिभागोनैस्त्रयोदशभिर्योजनैः । वालुकाप्रभायाः सत्रिभागैस्त्रयोदशभिर्योजनैः । पङ्कप्रभायाश्चतुर्दशभिर्योजनैः । धूमप्रभायास्त्रिभागोनैः पञ्चदशभिर्योजनैः । तमःप्रभायाः सत्रिभागैः पञ्चदशभिर्योजनैः । तमस्तमःप्रभायाः परिपूर्णैः षोडशभिर्योजनैरिति ॥ २५१ ॥

आह—किमेतासु घर्मादिषु पृथिवीषु सर्वत्र नरकावासाः सन्ति, आहोस्विन्न ? उच्यते—न सर्वत्र

**हिट्ठोवरिं सहस्सं, सद्धा बावन्न सत्तममहीए। एयं निरयविहूणं, सेसेसु निरंतरा निरया ॥ २५२ ॥**

व्याख्या—षष्ठीं पृथिवीं यावदेकैकस्याः पृथिव्या अध उपरि च प्रत्येकं योजनसहस्रं, सप्तमपृथिव्यास्तमस्तमःप्रभाया अध उपरि च प्रत्येकं सार्धानि द्विपञ्चाशद्योजनसहस्राणि, एतावत्प्रमाणं क्षेत्रं नरकविहीनं। शेषेषु तु क्षेत्रविभागेषु प्रायो निरन्तरा नरका नरकनिवासाः ॥ २५२ ॥

ते च प्रस्तटरूपतया, प्रस्तटा नाम वेश्मभूमिकाकल्पा नरकावासपङ्क्तयः, ततः साम्प्रतं घर्मादिषु पृथिवीषु यथाक्रमं प्रस्तटसङ्ख्यामाह—

**तेरिक्कारस नव सत्त पंच तिन्नेव हुंति इक्को य। पत्थडसंखा एसा, सत्तसु वि कमेण पुढवीसु ॥ २५३ ॥**

व्याख्या—सप्तस्वपि पृथिवीषु क्रमेणैषा प्रस्तटसङ्ख्या, तद्यथा—प्रथमायां पृथिव्यां त्रयोदश, द्वितीयस्यामेकादश, तृतीयस्यां नव, चतुर्थ्यां सप्त, पञ्चम्यां पञ्च, षष्ठ्यां त्रयः, सप्तम्यामेक इति। एते च प्रस्तटाः सर्वेऽपि प्रत्येकं सहस्रत्रयप्रमाणोच्छ्रयाः। तथाहि—योजनसहस्रमेकमधस्ताद्घनपृथिवीरूपं पीठं, योजनसहस्रं मध्ये शुषिरं, योजनसहस्रमुपरि संकोचतश्चूलिकान्तं यावदिति ॥ तथा चाह—"हिट्ठा घणा सहस्सं, उप्पि संकोअओ सहस्सं तु। मज्झे सहस्स सुसिरा, तिन्नि सहस्सूसिआ निरया ॥ १ ॥" सुगमा ॥ २५३ ॥

सम्प्रति सर्वासु पृथिवीषु प्रस्तटान्तरपरिमाणमभिधित्सुराह—

**बिसहस्सूणा पुढवी, सगपयरेहिं तिसहस्सगुणिएहिं । ऊणा रूवूणणियपयरभाइआ पत्थडंतरयं ॥२५४॥**

व्याख्या—एकैका पृथिवी बाहल्यपरिमाणमधिकृत्य द्विसहस्रोना-योजनसहस्रद्वयहीना क्रियते, अध उपरि च प्रत्येकं योजनसहस्रं नरकहीनत्वात् । ततो यत्र पृथिव्यां यावन्तः प्रस्तटाः सा द्विसहस्रोना तावद्भिः प्रस्तटैस्त्रिसहस्रगुणितैरूना कर्तव्या । ततः स्वप्रस्तटै रूपोनैर्भागो ह्रियते, भागे हृते सति यदागच्छति तत् प्रस्तटस्य प्रस्तटस्यान्तरमवगन्तव्यं । अथ कस्मात् प्रस्तटैरेकरूपोनैर्भागो ह्रियते, न संपूर्णैः ? उच्यते—इह प्रस्तटानामन्तरमवगन्तुमिष्टं, अन्तराणि च सर्वत्रापि रूपोनानि भवन्ति, यथा चतसृणामङ्गुलीनामन्तराणि त्रीण्येव भवन्ति, ततो रूपोनैः स्वप्रस्तटैर्भागो ह्रियते । सम्प्रत्येतदेव करणं प्रतिपृथिवि भाव्यते—रत्नप्रभाया बाहल्यमशीतियोजनसहस्राधिकं योजनलक्षं, तच्चोपरितनेनाधस्तनेन च योजनसहस्रेण हीनं क्रियते, जातमष्टसप्ततिसहस्राधिकं लक्षं, तत एतस्मात्त्रयोदश प्रस्तटास्त्रिसहस्रगुणिताः सर्वसङ्ख्ययैकोनचत्वारिंशत्सहस्ररूपा अपनीयन्ते, ततः स्थितमेकोनचत्वारिंशत्सहस्राधिकं लक्षं, तस्य रूपोनैः प्रस्तटैर्द्वादशभिर्भागो ह्रियते, हृते च भागे लब्धमेकादश योजनसहस्राणि पञ्च शतानि त्र्यशीत्यधिकानि ११५८३, शेषं च तिष्ठतीदं ४ । अस्योभयस्यापि चतुर्भिरपवर्तने लब्धो योजनत्रिभागः, एतावत्प्रमाणं रत्नप्रभायां प्रस्तटानां परस्परमन्तरं । तथा चोक्तम्—"तेसीया पंच सया, इक्कारस चेव जोअणसहस्सा । रयणाए पत्थडंतरमेगो वि अ जोअणतिभागो ॥ १ ॥" शर्कराप्रभाया बाहल्यं द्वात्रिंशत्सहस्राधिकं लक्षं, तच्चोपरितनेनाधस्तनेन च योजनसहस्रेण हीनं क्रियते, जातं त्रिंशत्स-

हस्राधिकं लक्षं, तत एतस्मात् स्वप्रस्तटा एकादश । त्रसहस्रगुणिताः सर्वसङ्ख्या त्रयस्त्रिंशतसहस्ररूपाः शोध्यन्ते, जातानि सप्तनवतिसहस्राणि, तत एतेषां स्वप्रस्तटैरेकरूपोनैर्दशभिर्भागो ह्रियते, लब्धानि सप्तनवतिशतानि ९७००, एतावच्छर्कराप्रभायां प्रस्तटानां परस्परमन्तरं । वालुकाप्रभाया बाहल्यमष्टाविंशतिसहस्राधिकं योजनलक्षं, तच्चोपरितनेनाधस्तनेन च योजनसहस्रेण हीनं क्रियते, जातं षड्विंशतिसहस्राधिकं लक्षं, तत एतस्मात्स्वप्रस्तटा नव त्रिसहस्रगुणिताः सर्वसङ्ख्यया सप्तविंशतिसहस्ररूपाः शोध्यन्ते, जातानि नवनवतिसहस्राणि, तत एतेषां स्वप्रस्तटैरेकरूपोनैरष्टभिर्भागो ह्रियते, लब्धानि द्वादश सहस्राणि त्रीणि शतानि पञ्चसप्तत्यधिकानि १२३७५ । एतावद्वालुकाप्रभायां प्रस्तटानां परस्परमन्तरं । उक्तं च—"सत्ताणउइ सयाइं, बीआए पत्थरंतरं होइ । पणसत्तरि तिन्नि सया, बारस य सहस्स तइयाए ॥ १ ॥" पङ्कप्रभाया बाहल्यं विंशतिसहस्राधिकं योजनलक्षं, तच्चोपरितनेनाधस्तनेन च योजनसहस्रेण हीनं क्रियते, जातमष्टादशसहस्राधिकं लक्षं, तत एतस्मात् स्वप्रस्तटाः सप्त त्रिसहस्रगुणिताः सर्वसङ्ख्ययैकविंशतिसहस्ररूपा अपनीयन्ते, जातानि सप्तनवतिसहस्राणि, तत एतेषां स्वप्रस्तटैरेकरूपोनैः षड्भिर्भागो ह्रियते, लब्धानि षोडश सहस्राणि शतं षट्षष्ट्यधिकं योजनस्य च द्वौ त्रिभागौ १६१६६$\frac{2}{3}$ । एतत् पङ्कप्रभायां प्रस्तटानां परस्परमन्तरं । धूमप्रभाया बाहल्यमष्टादशसहस्राधिकं योजनलक्षं, तच्चोपरितनेनाधस्तनेन च योजनसहस्रेण हीनं क्रियते, जातं षोडशसहस्राधिकं लक्षं, तत एतस्मात् स्वप्रस्तटाः पञ्च त्रिसहस्रगुणिताः सर्वसङ्ख्यया पञ्चदशसहस्ररूपा अपनीयन्ते, ततो जातमेकसहस्राधिकं लक्षं, तस्य प्रस्तटैरेकरूपोनैश्चतुर्भिर्भागो ह्रियते, लब्धानि पञ्चविंशतिसहस्राणि द्वे शते पञ्चाशदधिके २५२५० । एतावद्धूमप्रभायां प्रस्तटानां परस्पर-

धूमाए ॥१॥" ... अड्डाइज्जा सयाइं, पणवीससहस्स धूमाए ॥१॥"

मन्तरं । उक्तं च—"छावट्ठसयं सोलस, सहस्स पंकाए दो तिभागा य । अड्डाइज्जा सयाइं, पणवीससहस्स धूमाए ॥१॥" तमःप्रभाया बाहल्यं षोडशसहस्राधिकं योजनलक्षं, तच्चोपरितनेनाधस्तनेन च योजनसहस्रेण रहितं जातं चतुर्दशसहस्राधिकं लक्षं, तत एतस्मात्स्वप्रस्तटास्त्रयस्त्रिसहस्रगुणिताः सर्वसङ्ख्यया नव सहस्राः शोध्यन्ते, जातं पञ्चसहस्राधिकं लक्षं, तस्य स्वप्रस्तटैरेकरूपोनैर्द्वाभ्यामित्यर्थः, भागो ह्रियते, लब्धानि द्विपञ्चाशत्सहस्राणि पञ्च शतानि ५२५०० । एतावत्तमः-प्रभायां प्रस्तटानां परस्परमन्तरं । तथा चोक्तं—"बावन्न सहस्साइं, पंचेव हवंति जोअणसयाइं । पत्थरूमंतरमेयं, तु छट्ठपुढवीइ नेयव्वं ॥ १ ॥" सप्तम्यां तु पृथिव्यामेक एव प्रस्तट इति न तत्र प्रस्तटान्तरसंभवः ॥ २५४ ॥

सम्प्रति प्रतिपृथिवि नरकावासानां सामस्त्येन सङ्ख्यामभिधित्सुराह—

**तीसा य पन्नवीसा, पनरस दस चेव तिन्नि य हवंति । पंचूण सयसहस्सं, पंचेव अणुत्तरा निरया ॥२५५॥**

व्याख्या—प्रथमायां रत्नप्रभायां पृथिव्यां त्रिंशच्छतसहस्राणि नरकावासानां ३०००००० । द्वितीयस्यां पञ्चविंशति शतसहस्राणि २५००००० । तृतीयस्यां पञ्चदश १५००००० । चतुर्थ्यां दश १०००००० । पञ्चम्यां त्रीणि ३००००० षष्ठ्यां पञ्चोनं शतसहस्रं ९९९९५ । सप्तम्यां पञ्चैव ५ अनुत्तराः सर्वाधोवर्तिनो नरकावासाः । ते चैवं—पूर्वस्यां दिशि काळनामा नरकावासोऽपरस्यां दिशि महाकालो दक्षिणस्यां रोरुक उत्तरस्यां महारोरुको मध्येऽप्रतिष्ठानः । उक्तं च—"पुव्वेण होइ कालो, अवरेणं अप्पइट्ठ महकालो । रोरू दाहिणपासे उत्तरपासे महारोरू ॥ १ ॥" अत्रैवमक्षरयोजना—

"अप्पइट्ठ त्ति" अप्रतिष्ठस्याप्रतिष्ठानस्य मध्यवर्तिनो नरकावासस्य पूर्वेण पूर्वस्यां दिशि कालोऽपरस्यां दिशि महाकालो दक्षिणस्यां दिशि रोरुक उत्तरस्यां दिशि महारोरुक इत्यादि ॥ २५५ ॥

सम्प्रति कियन्त आवलिकाप्रविष्टाः कियन्तः पुष्पावकीर्णका इति प्रतिपिपादयिषुः प्रथमतः प्रतरे प्रतरे दिशि विदिशि च प्रत्येकं यावन्त आवलिकाप्रविष्टास्तावतो निरूपयति—

**रयणाए पढमपयरे, दिसि दिसि एगूणवन्न नरयाउ। विदिसासेढीए पुणो अडयाला इंदउ मज्झे ॥२५६॥**

**बिइयाइसु पयरेसुं दिसासु विदिसासु हीयमाणेणं। इक्किकेणं पयरे, अउणावन्ने दिसिसु चउरो ॥२५७॥**

व्याख्या—रत्नप्रभायां प्रथमपृथिव्यां प्रथमे प्रस्तटे दिशि दिश्येकैकस्यां दिश्येकोनपञ्चाशन्नरका नरकावासाः। विदिक्श्रेण्यामेकैकस्यां विदिग्भाविन्यां श्रेणावष्टाचत्वारिंशन्नरकावासाः। तासां च दिग्विदिग्भाविनीनां श्रेणीनां मध्य इन्द्रको नरकेन्द्रकः। द्वितीयादिषु तु प्रतरेषु दिक्षु विदिक्षु च प्रत्येकमेकैकेन नरकावासेन हीयमाना नरकावासश्रेणयो वेदितव्याः, तद्यथा—द्वितीये प्रस्तटे चतसृष्वपि दिक्षु प्रत्येकमष्टचत्वारिंशन्नरकावासाः, विदिक्षु प्रत्येकं सप्तचत्वारिंशत्। तृतीये प्रस्तटे चतसृषु दिक्षु प्रत्येकं सप्तचत्वारिंशत्, विदिक्षु प्रत्येकं षट्चत्वारिंशदित्येवं तावद्वक्तव्यं यावदेकोनपञ्चाशत्तमे प्रस्तटे दिक्षु-पूर्वादिषु प्रत्येकमेकैकनरकावासभावेन सर्वसङ्ख्यया चत्वारो नरकावासाः, विदिक्षु च तत्रैकोऽपि नरकावासो न समस्ति, मध्ये च तत्राप्यप्रतिष्ठानाभिधो नरकेन्द्रक इति सर्वसङ्ख्यया तत्र पञ्च नरकावासाः। सर्वेष्वपि च प्रस्तटेषु प्रत्येकं मध्य एकैको नरकेन्द्रकः, तन्नामानि चामूनि, तद्यथा—रत्नप्रभायां पृथिव्यां प्रथमे प्रस्तटे नरकेन्द्रकः सीमन्तको

द्वितीये रोरुकस्तृतीये भ्रान्तश्चतुर्थे उद्भ्रान्तः पञ्चमे संभ्रान्तः षष्ठेऽसंभ्रान्तः सप्तमे विभ्रान्तोऽष्टमे तप्तो नवमे शीतो दशमे वक्रान्त एकादशेऽवक्रान्तो द्वादशे विक्रान्तस्त्रयोदशे रोरुकः । शर्कराप्रभायां प्रथमे प्रस्तटे स्तनितो द्वितीये स्तनकस्तृतीये मनकश्चतुर्थे वनकः पञ्चमे घटः षष्ठे संघट्टः सप्तमे जिह्वोऽष्टमेऽपजिह्वो नवमे लोलो दशमे लोलावर्त एकादशे स्तनलोलुपः । वालुकाप्रभायां प्रथमे प्रस्तटे तप्तो द्वितीये तपितस्तृतीये तपनश्चतुर्थे तापनः पञ्चमे निदाघः षष्ठे प्रज्वलितः सप्तमे उज्ज्वलितोऽष्टमे संज्वलितो नवमे संप्रज्वलितः । पङ्कप्रभायां प्रथमे प्रस्तटे आरः द्वितीये तारस्तृतीये मारश्चतुर्थे वर्चः पञ्चमे तमकः षष्ठे खाटखटः सप्तमे खटखटः । धूमप्रभायां प्रथमे प्रस्तटे खादः द्वितीये तमकस्तृतीये झषश्चतुर्थेऽन्धः पञ्चमे तिमिश्रः । तमःप्रभायां प्रथमे प्रस्तटे हिमो द्वितीये वार्दलस्तृतीये लल्लकः । सप्तम्यामप्रतिष्ठानः । तथा चैतदर्थसंग्राहिका इमा गाथाः—"सीमंतउत्थ पढमो, बीउ पुण रोरुअ त्ति नायव्वो । भंतो उब्भंत तइउ, चउत्थउ होइ उब्भंतो ॥ १ ॥ संभंतमसंभंतो, विब्भंतो चेव सत्तमो निरउ । अट्ठमउ तत्तो पुण, नवमो सीउ त्ति नायव्वो ॥ २ ॥ वक्कंतमवक्कंतो, विक्कंतो चेव रोरुउ निरउ । पढमाए पुढवीए, तेरस निरइंदया एए ॥ ३ ॥ थणिए थणए य तहा, मणए वणए य होइ नायव्वो । घट्टे तह संघट्टे, जिब्भे अवजिब्भए चेव ॥ ४ ॥ लोले लोलावत्ते, तहेव थणलोलुए य बोधव्वे । बीयाए पुढवीए, इक्कारस इंदया एए ॥ ५ ॥ तत्तो तविउ तवणो, थ तावणो पंचमो निदाघो य । छट्ठो पुण पज्जलिउ, उज्जलिउ सत्तमो निरउ ॥ ६ ॥ संजलिउ अट्ठमउ, संपज्जलिउ य नवमउ भणिउ । तइआए पुढवीए, एए नव हुंति निरइंदा ॥ ७ ॥ आरे तारे मारे, वच्चे तमए य होइ नायव्वे । खाडखडे य खडखडे, इंदयनिरया चउत्थीए ॥ ८ ॥ खाए तमए य तहा,

रुसे य अंधे य तहय तिमिसे य । एए पंचमपुढवीएँ पंच निरइंदया हुंति ॥ ए ॥ हिमवद्दलल्लके, तिन्नि उ निरइंदया उ बठीए । इक्को य सत्तमाए बोधव्वो अपइट्ठाणो ॥ १० ॥" ॥ २५६–२५७ ॥

सम्प्रत्येतदेव प्रतिप्रस्तटमेकैकस्यां दिशि विदिशि च नरकावासश्रेणिपरिमाणं पश्चानुपूर्व्या प्रतिपादयति—

**सत्तममहीए इक्को, पयरो तत्तो उ उवरि पुढवीसुं। इगदुगतिगाइवुड्ढी जा रयणाए अउणवन्ना ॥२५८॥**

व्याख्या—सप्तम्यां पृथिव्यामेकः प्रतरः । स च पश्चानुपूर्व्या प्रथमः। तस्मिन्नेकैकस्यां दिश्येकैको नरकावासः, विदिशि त्वेकस्यामप्येकोऽपि नरकावासो न समस्ति । तथा चोक्तं—"इक्किक्को य दिसासुं, मज्झे निरउ उ अ अपइट्ठाणो । विदिसा निरयविहूणं, तं पयरं पंचगं जाण ॥ १ ॥" अत्र पञ्चकमिति पञ्चपरिमाणं, तत उपरितनीषु पृथिवीषु प्रस्तटेषु क्रमेण दिक्षु विदिक्षु चैकद्विकत्रिकादिवृद्धिस्तावदवसेया यावद्रत्नप्रभायां पृथिव्यां सर्वान्तिमे पूर्वानुपूर्व्या प्रथमे प्रस्तटे एकैकस्यां दिशि नरकावासा एकोनपञ्चाशत्। उपलक्षणमेतत्, एकैकस्यां विदिश्यष्टाचत्वारिंशत् । इयमत्र भावना—पश्चानुपूर्व्या प्रथमप्रस्तटादूर्ध्वं द्वितीये प्रस्तटे एकैको विदिक्षु नरकावासः, द्वौ द्वौ दिक्षु । तृतीये प्रस्तटे द्वौ द्वौ विदिक्षु, त्रयस्त्रयो दिक्षु । चतुर्थप्रस्तटे त्रयस्त्रयो विदिक्षु, चत्वारश्चत्वारो दिक्षु । एवं दिक्षु विदिक्षु च प्रत्येकं प्रतिप्रस्तटमेकैकनरकावासवृद्धिस्तावदवगन्तव्या यावदेकोनपञ्चाशत्तमे प्रस्तटे दिक्षु प्रत्येकमेकोनपञ्चाशत् विदिक्ष्वष्टाचत्वारिंशन्नरकावासा इति ॥२५८॥

सम्प्रति प्रतिप्रस्तटं सकलदिग्विदिग्गतावलिकाप्रविष्टनरकावाससङ्ख्यापरिज्ञानाय करणमाह—

**इट्ठपयरस्स संखा, अट्ठगुणा तिरहिआ भवे संखा ।**

व्याख्या—ऽष्टस्य विवक्षितस्य प्रतरस्यैकस्यां दिशि या नरकावाससङ्ख्या साऽष्टभिर्गुण्यते, गुणिता सती त्रिरहिता त्रिरूपरहिता तस्मिन् विवक्षिते प्रतरे भवति सकलदिग्विदिग्गतावलिकाप्रविष्टनरकावाससङ्ख्या। यथा रत्नप्रभायां पृथिव्यां प्रथमे प्रस्तट एकस्यां दिशि नरकावाससङ्ख्यैकोनपञ्चाशत्, साऽष्टभिर्गुण्यते, जातानि त्रीणि शतानि द्विनवत्यधिकानि ३९२, तानि त्रिरहितानि क्रियन्ते, जातानि त्रीणि शतान्येकोननवत्यधिकानि ३८९। एतावन्तो रत्नप्रभायां प्रथमे प्रस्तटे सकलदिग्विदिग्गतावलिकाप्रविष्टा नरकावासाः। तथा द्वितीये प्रस्तट एकस्यां दिशि नरकावासा अष्टाचत्वारिंशत् ४८, साऽष्टभिर्गुण्यते, जातानि त्रीणि शतानि चतुरशीत्यधिकानि ३८४, तानि त्रिरूपहीनानि क्रियन्ते स्थितानि शेषाणि त्रीणि शतान्येकाशीत्यधिकानि ३८१। एतावन्तो द्वितीये प्रस्तट आवलिकाप्रविष्टा नरकावासाः। एवं शेषेष्वपि प्रस्तटेषु प्रत्येकं भावनीयं यावदेकोनपञ्चाशत्तमे प्रस्तट एकस्यां दिश्येको नरकावासः, सोऽष्टभिर्गुण्यते, जाता अष्टौ, ते त्रिरूपहीनाः क्रियन्ते, स्थिताः शेषाः पञ्च। एतावन्तस्तत्रावलिकाप्रविष्टा नरकावासाः ॥

सम्प्रति समस्तपृथिवीगतानामावलिकाप्रविष्टानां नरकावासानां परिज्ञानाय करणं विवक्षुः प्रथमतो मुखभूमीः प्रतिपादयति—

**पढमो मुहमंतिमओ, भूमिं तेसिं मुणसु संखं ॥ २५९ ॥**

व्याख्या—प्रथमः प्रथमप्रतरगतो नरकावाससमुदायो मुखं, पश्चानुपूर्व्या तस्य मुखस्थानवर्तित्वात्। अन्तिमः सर्वान्तिमप्रतरगतो नरकावाससमुदायो भूमिः, पश्चानुपूर्व्या तस्यादिभूतत्वात्। ततः सम्प्रति तयोर्मुखभूम्योः सङ्ख्यापरिमाणं शृणु ॥ २५९ ॥

तदेवाह—

सीमंतयनरइंदय, पढमे पयरम्मि होइ संखाउं। तिन्नि सय अउणनउयां, निरया तह अंतिमे पंच॥२६०॥

व्याख्या—सीमन्तकनरकेन्द्रके सीमन्तकनरकेन्द्रकोपलक्षिते प्रथमे प्रतर इयं नरकावाससङ्ख्या जवति। तद्यथा—त्रीणि शतान्येकोननवत्यधिकानि ३८९। अन्तिमे सर्वान्तिम एकोनपञ्चाशत्तमे प्रस्तटे सर्वसङ्ख्यया नरकाः पञ्च ॥ २६० ॥

तदेवं मुखभूमीः प्रतिपाद्य सम्प्रति तन्निबन्धनं करणं प्रतिपादयति—

मुहजूमिसमासऊ, पयरेहिं गुणं तु होइ सवधणं।

व्याख्या—मुखभूम्योः समास एकत्र मीलनं, ततस्तस्यार्धं क्रियते, ततस्तत्प्रतरैः समस्तप्रतरसङ्ख्यया गुण्यते, ततः सर्वधनं समस्तप्रतरगतावलिकाप्रविष्टनरकावासपरिमाणं जवति। तत्र मुखं त्रीणि शतान्येकोननवत्यधिकानि ३८९, भूमिः पञ्च, एतयोः समासे जातानि त्रीणि शतानि चतुर्नवत्यधिकानि ३९४, तेषामर्धे सप्तनवतं शतं १९७, तत्समस्तप्रतरसङ्ख्ययैकोनपञ्चाशद्रूपया गुण्यते, जातानि त्रिपञ्चाशदधिकानि पण्णवतिशतानि ९६५३, एतावन्तः समस्तासु पृथिवीष्वावलिकाप्रविष्टा नरकावासाः, एतद्व्यतिरिक्ताश्च शेषाः पुष्पावकीर्णकाः ॥

तथा चाह—

तेवन्नहिया छस्सय, नव चेव सहस्स सवधणं ॥ २६१ ॥

आवलिआगयनरया, इतिअमित्ता उ सवपुढवीसु। तेहिं विहूणा सवे, सेसा पुप्फावकिन्नाउ ॥ २६२ ॥

व्याख्या—इयं सार्धाऽपि गाथा सुगमा ॥ २६१–२६२ ॥

सम्प्रति शेषाणां पुष्पावकीर्णानां परिमाणमाह—

एवं पइन्नगाणं, तेसीइ हवंति सयसहस्साइं। नउइ तहा य सहस्सा, तिन्नि सया चेव सीयाला ॥ २६३ ॥

व्याख्या—इह सर्वासु पृथिवीषु सर्वसङ्ख्यया नरकावासाश्चतुरशीतिशतसहस्राणि भवन्ति, तत्रावलिकाप्रविष्टा नरकावासाः षण्णवतिशतानि त्रिपञ्चाशदधिकानि तानि चेत्पृथक् क्रियन्ते तत एवं सति शेषाणां प्रकीर्णकानां त्र्यशीतिशतसहस्राणि नवतिः सहस्राणि त्रीणि शतानि सप्तचत्वारिंशदधिकानि भवन्ति ८३९०३४७। सम्प्रति प्रागुक्तमेव करणं प्रतिपृथिव्यावलिकाप्रविष्टनरकावाससङ्ख्यानयनाय भाव्यते—तत्र प्रथमतो मुखभूमयः प्रदर्श्यन्ते—तत्र प्रथमायां रत्नप्रभायां मुखं त्रीणि शतान्येकोननवत्यधिकानि ३८९, भूमिर्द्वे शते त्रिनवत्यधिके २९३। शर्कराप्रभायां मुखं द्वे शते पञ्चाशीत्यधिके २८५, भूमिर्द्वे शते पञ्चोत्तरे २०५। वालुकाप्रभायां मुखं सप्तनवतं शतं १९७, भूमिस्त्रयस्त्रिंशं शतं १३३। पङ्कप्रभायां मुखं पञ्चविंशत्यधिकं शतं १२५, भूमिः सप्तसप्ततिः ७७। धूमप्रभायां मुखमेकोनसप्ततिः ६९, भूमिः सप्तत्रिंशत् ३७। तमःप्रभायां मुखमेकोनत्रिंशत् २९ भूमिस्त्रयोदश १३। उक्तं च—"तिन्नि सय अउणनउया, दो तेणउआ य हुंति पढमाए। दो

---

१ रत्नप्रभायां त्रयोदश प्रस्तटास्त एकोनाः क्रियन्ते, जाता द्वादश १२ त अष्टभिर्गुण्यन्ते, जाता षण्णवतिः ९६, एषा मुखात् ३८९ लक्षणाद्विशोध्यते, तिष्ठति २९३ भूमिः।

सय पंचासीया, पंचोत्तर दुन्नि बिइयाए ॥ १ ॥ सत्ताणउअं च सयं, तित्तीस सयं सयं च पणतीसं । सत्तत्तरि अउण-
त्तरि, सत्तत्तीसा य गुणतीसा ॥ २ ॥ “तेरस मुहभूमीउ” इति । सम्प्रति करणभावना क्रियते—तत्र रत्नप्रभायां मुखमे-
कोननवत्यधिकं शतत्रयं ३८९, भूमिर्द्वे शते त्रिनवत्यधिके २९३, तयोः समासे जातानि षट् शतानि द्व्यशीत्यधिकानि
६८२ । तेषामर्धं त्रीणि शतान्येकचत्वारिंशदधिकानि ३४१ । तानि स्वप्रतरैस्त्रयोदशभिर्गुण्यन्ते, जातानि चतुश्चत्वारिं-
शच्छतानि त्रयस्त्रिंशदधिकानि ४४३३ । एतावन्तः सर्वसङ्ख्यया रत्नप्रभायामावलिकाप्रविष्टा नरकावासाः, शेषास्तु पुष्पाव-
कीर्णकाः, ते चैकोनत्रिंशल्लक्षाणि पञ्चनवतिः सहस्राणि पञ्च शतानि सप्तषष्ट्यधिकानि २९९५५६७ । तथा चोक्तं—“सत्तट्ठी
पंच सया, पणनउइ सहस्स लक्ख गुणतीसं । रयणाए सेढिगया, चोयालसया उ तित्तीसा ॥ १ ॥” शर्कराप्रभायां मुखं
द्वे शते पञ्चाशीत्यधिके २८५, भूमिर्द्वे शते पञ्चोत्तरे २०५, तयोः समासे जातानि नवत्यधिकानि चत्वारि शतानि ४९०,
तेषामर्धं द्वे शते पञ्चचत्वारिंशदधिके २४५, ते स्वप्रतरैरेकादशभिर्गुण्येते, जातानि पञ्चनवत्यधिकानि षड्विंशतिशतानि
२६९५, एतावन्तः शर्कराप्रभायां सर्वसङ्ख्ययाऽऽवलिकाप्रविष्टा नरकावासाः । एतद्व्यतिरिक्ताः शेषाः पुष्पावकीर्णकाः, ते
च चतुर्विंशतिलक्षाणि सप्तनवतिः सहस्राणि त्रीणि शतानि पञ्चाधिकानि २४९७३०५ । उक्तं च—“सत्ताणउइ सहस्सा,
चउवीसं लक्ख तिसय पंचहिया । बीयाए सेढिगया, छव्वीस सया उ पणनउआ ॥ १ ॥” वालुकाप्रभायां मुखं सप्तनवतं
शतं १९७, भूमिस्त्रयस्त्रिंशं शतं १३३, तयोः समासे जातानि त्रीणि शतानि त्रिंशदधिकानि ३३०, तेषामर्धं पञ्चषष्ट्य-
धिकं शतं १६५, तन्नवभिः स्वप्रतरैर्गुण्यते, जातानि पञ्चाशीत्यधिकानि चतुर्दश शतानि १४८५, एतावन्तः सर्वसङ्ख्यया

वालुकाप्रभायामावलिकाप्रविष्टा नरकावासाः । एतद्व्यतिरिक्ताः शेषाः पुष्पावकीर्णकाः, ते च चतुर्दश लक्षा अष्टानवतिः सहस्राणि पञ्च शतानि पञ्चदशाधिकानि १४९८५१५। उक्तं च—"पंच सया पन्नरसा, अडनउइ सहस्स लक्ख चोद्दस य। तइयाए सेढिगया, पणसीया चोद्दस सया उ ॥ १ ॥" पङ्कप्रभायां मुखं पञ्चविंशत्यधिकं शतं १२५, भूमिः सप्तसप्ततिः ७७, तयोः समासे जाते द्वे शते द्व्युत्तरे २०२, तयोरर्धमेकोत्तरं शतं १०१, तत्स्वप्रतरैः सप्तभिर्गुण्यते, जातानि सप्त शतानि सप्तोत्तराणि ७०७, एतावन्तः पङ्कप्रभायामावलिकाप्रविष्टा नरकावासाः। एतद्व्यतिरिक्ताः शेषाः पुष्पावकीर्णकाः ते च नव लक्षाणि नवनवतिः सहस्राणि द्वे शते त्रिनवत्यधिके ९९९२९३ । उक्तं च—"तेणउआ दुन्नि सया, नवनवइ सहस्स नव य लक्खा य । पंकाए सेढिगया, सत्त सया हुंति सत्तहिआ ॥ १ ॥" धूमप्रभायां मुखमेकोनसप्ततिः ६९, भूमिः सप्तत्रिंशत् ३७, तयोः समासे जातं षडुत्तरं शतं १०६, तस्यार्धं त्रिपञ्चाशत् ५३, सा स्वप्रतरैः पञ्चभिर्गुण्यते, जाते द्वे शते पञ्च-षष्ठ्यधिके २६५, एतावन्तः सर्वसङ्ख्यया धूमप्रभायामावलिकाप्रविष्टा नरकावासाः। एतद्व्यतिरिक्ताः शेषाः पुष्पावकीर्णकाः, ते च द्वे लक्षे नवनवतिः सहस्राणि सप्त शतानि पञ्चत्रिंशदधिकानि २९९७३५ । उक्तं च—"सत्त सया पणतीसा, नव-नउई सहस्स दो अ लक्खा य । धूमाए सेढिगया, पन्नट्ठा दो सया हुंति ॥ १ ॥" तमःप्रभायां मुखमेकोनत्रिंशत् २९, भूमिस्त्रयोदश १३, तयोः समासे जाता द्विचत्वारिंशत् ४२, तस्या अर्धमेकविंशतिः २१, सा स्वप्रतरैस्त्रिभिर्गुण्यते, जाता त्रिषष्टिः ६३, एतावन्तस्तमःप्रभायामावलिकाप्रविष्टा नरकावासाः । शेषाः पुष्पावकीर्णकाः, ते च नवनवतिसहस्राणि नव शतानि द्वात्रिंशदधिकानि ९९९३२ । उक्तं च—"नवनउई अ सहस्सा, नव चेव सया हवंति बत्तीसा । पुढवीए छठीए,

पइण्णगाणेस संखेवो ॥ १ ॥" एते चावलिकाप्रविष्टा नरकावासा वृत्तत्र्यस्रचतुरस्रसंस्थानाः, पुष्पावकीर्णास्त्वनेकसंस्थानाः, तत्रावलिकाप्रविष्टानां मध्य एकोनपञ्चाशदपीन्द्रका वृत्ता एव, ततोऽनन्तरं त्र्यस्रचतुरस्रवृत्तभेदत्रयावृत्त्या तावदावर्तन्ते यावदावलिकापर्यन्तः। वृत्तादीनां च प्रतिपृथिवि परिमाणं देवेन्द्रनरकेन्द्रे प्रपञ्चितमिति नेह भूयः प्रपञ्च्यते, ग्रन्थगौरवभयात् ॥ २६२ ॥

सप्तसु नरकेषु मुखभूमिसमासादियंत्रम्।

| | | मुखम् | भूमिः | समासः | समासार्धं | प्रतरः | पंक्तिबद्धः | पुष्पावकीर्णकः | सर्वसंख्या |
|---|---|---|---|---|---|---|---|---|---|
| ० | सर्वाग्रस्य | ३८९ | ५ | ३९४ | १९७ | ४९ | ९६५३ | ८३९०३४७ | ८४००००० |
| १ | रत्नप्रभायाः | ३८९ | २९३ | ६८२ | ३४१ | १३ | ४४३३ | २९९५५६७ | ३०००००० |
| २ | शर्कराप्रभायाः | २८५ | २०५ | ४९० | २४५ | ११ | २६९५ | २४९७३०५ | २५००००० |
| ३ | वालुकाप्रभायाः | १९७ | १३३ | ३३० | १६५ | ९ | १४८५ | १४९८५१५ | १५००००० |
| ४ | पंकप्रभायाः | १२५ | ७७ | २०२ | १०१ | ७ | ७०७ | ९९९२९३ | १०००००० |
| ५ | धूमप्रभायाः | ६९ | ३७ | १०६ | ५३ | ५ | २६५ | २९९७३५ | ३००००० |
| ६ | तमः प्रभायाः | २९ | १३ | ४२ | २१ | ३ | ६३ | ९९९३२ | ९९९९५ |
| ७ | तमस्तमः प्रभायाः | ० | ० | ० | ० | १ | १ | ० | ५ |

सम्प्रति नरकावासानामायामविष्कम्भोच्चत्वमाह—

अपइट्ठाणो लक्खं, सेसा संखा व हुज्ज संखा वा। विक्खंभायामेणं, उच्चत्तं तिन्नि उ सहस्सा ॥ २६४ ॥

व्याख्या—अप्रतिष्ठानः सप्तमपृथिव्यां सर्वमध्यवर्ती पञ्चमो नरकावास आयामतो विष्कम्भतश्च प्रमाणाङ्गुलनिष्पन्नानां योजनानां लक्षं भवति, शेषास्तु नरकावासा आयामतो विष्कम्भतश्च "संखा व हुज्ज संखा व त्ति" पदैकदेशे पदसमुदायोपचारात् संख्यातयोजना वा भवेयुरसङ्ख्यातयोजना वा। उच्चैस्त्वं पुनः सर्वेषामपि त्रीणि सहस्राणि, तद्यथा—सहस्रमेकं पीठं, सहस्रं शुषिरं, सहस्रमुपरि स्तूपिकेति ॥ २६४ ॥

तदेवमुक्तं नरकपृथिवीनां प्रमाणादि । साम्प्रतं नारकाणामवगाहना वाच्या । सा च द्विधा—भवधारणीया उत्तरवैक्रिया च । एकैकाऽपि च द्विधा, तद्यथा—जघन्योत्कृष्टा च । तत्र प्रथमतो भवधारणीयामुत्कृष्टामाह—

भवधारणिज्जदेहे सत्तमाए पंचेव धणुसउक्कोसा। अद्धद्धहीण तदुवरि, नेअवा जाव रयणाए ॥ २६५ ॥

व्याख्या—अधः सप्तम्यां नरकपृथिव्यां वर्तमानानां नारकाणामुत्कर्षतो भवधारणीया भवे जन्मनि धार्यत इति भवधारणीया नारकभवधारयतां या स्वाभाविक्यवगाहना सा पञ्च धनुःशतानि भवति । ततस्तस्याः सप्तम्या उपरि षष्ठ्यादिषु पृथिवीष्वर्धार्धहीना भवधारणीयोत्कृष्टावगाहना तावद्वक्तव्या यावद्रत्नप्रभायां पृथिव्यां। सा चैवं—षष्ठ्यां पृथिव्यामुत्कृष्टा भवधारणीया सार्धे द्वे धनुःशते, पञ्चम्यां पञ्चविंशत्यधिकं धनुःशतं, चतुर्थ्यां सार्धानि द्वाषष्टिर्धनूंषि, तृतीयस्यामेकत्रिंशद्धनूंष्येको हस्तः, द्वितीयस्यां पञ्चदश धनूंषि सार्धौ च द्वौ हस्तौ ॥ २६५ ॥

प्रथमायां च पृथिव्यामेतदर्थे यत्परिमाणं भवति तत्स्वयमाह—

पढमाए पुढवीए, नेरइआणं तु होइ उच्चत्तं। सत्त धणु तिन्नि रयणी, छच्चेव य अंगुलाइं तु ॥ २६६ ॥

व्याख्या—प्रथमायां रत्नप्रभायां पृथिव्यां नारकाणामुत्कर्षतो भवधारणीयावगाहनोच्चत्वं सप्त धनूंषि त्रयो हस्ताः षड् चाङ्गुलानि ॥ २६६ ॥

तदेवमुक्ता सामान्यतः सप्तसु पृथिवीषूत्कृष्टा भवधारणीयावगाहना। सम्प्रति तामेव प्रतिप्रस्तटं प्रतिपिपादयिषुः प्रथमतः प्रथमपृथिव्यामाह—

रयणाए पढमपयरे, हत्थतिगं देहउस्सयं भणियं। छप्पन्नंगुल सड्ढा, पयरे पयरे हवइ वुड्ढी ॥ २६७ ॥

जा तेरसमे पयरे, देहपमाणेण होइ एयं तु। सत्त धणु तिन्नि रयणी, छच्चेव य अंगुला पुन्ना ॥ २६८ ॥

व्याख्या—रत्नप्रभायाः प्रथमे प्रतर उत्कर्षतो देहोच्छ्रयो भवधारणीयावगाहनोच्चैस्त्वं भणितं तीर्थंकरगणधरैर्हस्तत्रिकं त्रयो हस्ताः। तत ऊर्ध्वं प्रतरे प्रतरे वृद्धिर्भवति सार्धानि षट्पञ्चाशदङ्गुलानि द्वौ हस्तौ सार्धानि चाष्टावङ्गुलानीत्यर्थः। इत्थंभूता च वृद्धिस्तावदवसेया यावत्त्रयोदशप्रस्तटं। तस्मिंश्च त्रयोदशे प्रस्तटे यथोक्तरूपया वृद्ध्या यद्देहपरिमाणं भवति तत्साक्षाद्दर्शयति—"जा तेरसेत्यादि" यावत्त्रयोदशे प्रस्तटे देहप्रमाणं, सूत्रे तृतीया प्रथमार्थे द्रष्टव्या प्राकृतत्वात्, भवत्येतद्यदुत सप्त धनूंषि त्रयो हस्ताः षट् परिपूर्णान्यङ्गुलानि। अयमत्र भावार्थः—द्वितीये प्रस्तटे उत्कृष्टा भवधारणीयावगाहना धनुरेकमेको हस्तः सार्धानि चाष्टाङ्गुलानि। तृतीये प्रस्तटे धनुरेकं त्रयो हस्ताः सप्तदशाऽङ्गुलानि। चतुर्थे

प्रस्तटे द्वे धनुषी द्वौ हस्तौ सार्धमङ्गुलं । पञ्चमे प्रस्तटे त्रीणि धनूंषि दशाङ्गुलानि । पष्ठे प्रस्तटे त्रीणि धनूंषि द्वौ हस्तौ सार्धान्यष्टादशाङ्गुलानि । सप्तमे प्रस्तटे चत्वारि धनूंष्येको हस्तस्त्रीणि चाङ्गुलानि । अष्टमे प्रस्तटे चत्वारि धनूंषि त्रयो हस्ताः सार्धान्येकादशाङ्गुलानि । नवमे प्रस्तटे पञ्च धनूंष्येको हस्तो विंशतिरङ्गुलानि । दशमे प्रस्तटे षड् धनूंषि सार्धानि चत्वार्यङ्गुलानि । एकादशे प्रस्तटे षड् धनूंषि द्वौ हस्तौ त्रयोदशाङ्गुलानि । द्वादशे प्रस्तटे सप्त धनूंषि सार्धान्येकविंशतिरङ्गुलानि । त्रयोदशे प्रस्तटे सप्त धनूंषि त्रयो हस्ताः षट् परिपूर्णान्यङ्गुलानि ॥ २६७–२६८ ॥

सम्प्रति शर्कराप्रभायामाह—

सो चेव य बीआए, पढमे पयरम्मि होइ उस्सेहो । हत्थतिअ तिन्नि अंगुल, पयरे पयरे य वुड्ढीउ ॥ २६९॥

व्याख्या—य एव प्रथमपृथिव्यां त्रयोदशे प्रस्तट उत्कर्षत उत्सेधो भणितो यथा सप्त धनूंषि त्रयो हस्ताः षट् चाङ्गुलानीति स, एव द्वितीयस्यां शर्कराप्रभायां पृथिव्यां प्रथमे प्रतर उत्कर्षत उत्सेधो भवति । ततः प्रतरे प्रतरे वृद्धिरवसेया त्रयो हस्तास्त्रीणि चाङ्गुलानि । तद्यथा—द्वितीये भवधारणीयस्योत्कर्षत उत्सेधोऽष्टौ धनूंषि द्वौ हस्तौ नव चाङ्गुलानि । तृतीये प्रस्तटे नव धनूंष्येको हस्तो द्वादश चाङ्गुलानि । चतुर्थे प्रस्तटे दश धनूंषि पञ्चदशाङ्गुलानि । पञ्चमे प्रस्तटे दश धनूंषि त्रयो हस्ता अष्टादशाङ्गुलानि । षष्ठे प्रस्तट एकादश धनूंषि द्वौ हस्तावेकविंशतिरङ्गुलानि । सप्तमे प्रस्तटे द्वादश धनूंषि द्वौ हस्तौ । अष्टमे प्रस्तटे त्रयोदश धनूंष्येको हस्तस्त्रीणि चाङ्गुलानि । नवमे प्रस्तटे चतुर्दश धनूंषि षट् चाङ्गुलानि । दशमे प्रस्तटे चतुर्दश धनूंषि त्रयो हस्ता नव चाङ्गुलानि ॥ २६९ ॥

एकादशे च प्रस्तटे यथोक्तया वृध्ध्या यद्भवति तत्साक्षादुपदर्शयति—

इक्कारसमे पयरे, पन्नरस धणुयाइं डुन्नि रयणीउ। बारस य अंगुलाइं, देहपमाणं तु विन्नेयं ॥ २७० ॥

व्याख्या—द्वितीयस्यां शर्कराप्रज्ञायां पृथिव्यामेकादशे प्रस्तटे देहप्रमाणं ज्ञवधारणीयशरीरप्रमाणमुत्कर्षतो विज्ञेयं पञ्चदश धनूंषि द्वौ च हस्तौ द्वादश चाङ्गुलानि ॥ २७० ॥

अधुना वालुकाप्रज्ञायामाह—

सो चेव य तइयाए, पढमे पयरम्मि होइ उस्सेहो। सत्त रयणी उ अंगुल, उणवीसं सङ्कवुड्डीए ॥ २७१ ॥

पयरे पयरे अ तहा, नवमे पयरम्मि होइ उस्सेहो। धणुआणि एगतीसं, इक्का रयणी य नायवा ॥ २७२ ॥

व्याख्या—य एव द्वितीयस्यां शर्कराप्रज्ञायामेकादशे प्रस्तटे ज्ञवधारणीयशरीरस्योत्कर्षत उत्सेध उक्तः पञ्चदश धनूंषि द्वौ हस्तौ द्वादश चाङ्गुलानि, स एव तृतीयस्यां वालुकाप्रज्ञायां पृथिव्यां प्रथमे प्रतर उत्सेधो ज्ञवति। ततः प्रतरे प्रतरे वृद्धिः सप्त हस्ताः सार्धानि चैकोनविंशतिरङ्गुलानि। तद्यथा—द्वितीये प्रस्तटे सप्तदश धनूंषि द्वौ हस्तौ सार्धानि सप्ताङ्गुलानि। तृतीये प्रस्तट एकोनाविंशतिर्धनूंषि द्वौ हस्तौ त्रीण्यङ्गुलानि। चतुर्थे प्रस्तट एकविंशतिर्धनूंष्येको हस्तो सार्धानि द्वाविंशतिरङ्गुलानि। पञ्चमे प्रस्तटे त्रयोविंशतिर्धनूंष्येको हस्तोऽष्टादश चाङ्गुलानि। षष्ठे प्रस्तटे पञ्चविंशतिर्धनूंष्येको हस्तः सार्धानि त्रयोदशाङ्गुलानि। सप्तमे प्रस्तटे सप्तविंशतिर्धनूंष्येको हस्तो नव चाङ्गुलानि। अष्टमे प्रस्तट एकोनत्रिंशद्धनूंष्येको

हस्तः सार्धानि चत्वार्यङ्गुलानि। नवमे प्रस्तटे यथोक्तरूपया वृध्या यद्भवति, तत्साक्षादभिदधति—"नवमे इत्यादि" नवमे प्रतरे भवत्युत्कर्षतो भवधारणीयस्योत्सेध एकत्रिंशद्धनूंष्येकश्च परिपूर्णो हस्तः ॥ २७१–२७२ ॥

सम्प्रति पङ्कप्रभायामाह—

सो चेव चउत्थीए, पढमे पयरम्मि होइ उस्सेहो। पंच धणु वीस अंगुल, पयरे पयरे य वुड्ढी अ ॥ २७३ ॥

जा सत्तमए पयरे, नेरइआणं तु होइ उस्सेहो। बासट्ठी धणुआइं, दुन्नि अ रयणी अ बोधव्वा ॥ २७४ ॥

व्याख्या—य एव वालुकाप्रभायां नवमे प्रस्तटे भवधारणीयस्योत्कर्षत उत्सेध उक्त एकत्रिंशद्धनूंष्येको हस्त इति, स एव चतुर्थ्यां पङ्कप्रभायां प्रथमे प्रस्तटे भवत्युत्कर्षत उत्सेधः। ततः प्रतरे प्रतरे वृद्धिर्भवति पञ्च धनूंषि विंशतिरङ्गुलानि, सा च तावद्वेदितव्या यावत्सप्तमं प्रतरं। सा चैवं—द्वितीये प्रस्तटे उत्कर्षतो भवधारणीयस्योत्सेधः षट्त्रिंशद्धनूंष्येको हस्तो विंशतिरङ्गुलानि। तृतीये प्रस्तट एकचत्वारिंशद्धनूंषि द्वौ हस्तौ षोडशाङ्गुलानि। चतुर्थे प्रस्तटे षट्चत्वारिंशद्धनूंषि त्रयो हस्ता द्वादशाङ्गुलानि। पञ्चमे प्रस्तटे द्विपञ्चाशद्धनूंष्यष्टावङ्गुलानि। षष्ठे प्रस्तटे सप्तपञ्चाशद्धनूंष्येको हस्तश्चत्वार्यङ्गुलानि। सप्तमे प्रस्तटे यथोक्तरूपया वृध्या यद्भवति, तत्साक्षात् कथयति—"सत्तमए इत्यादि" सप्तमे प्रतरे नैरयिकाणां भवधारणीयशरीरस्योत्कर्षत उत्सेधो भवति द्वाषष्टिर्धनूंषि द्वौ च हस्ताविति ॥ २७३–२७४ ॥

सम्प्रति धूमप्रभायामाह—

सो चेव पंचमीए, पढमे पयरम्मि होइ उस्सेहो। पनरस धणूणि दो हत्थ सड्ढ पयरे य वुड्ढी अ ॥ २७५ ॥

व्याख्या—य एव चतुर्थ्यां पङ्कप्रभायामुत्कर्षतो भवधारणीयस्योत्सेध उक्तो द्वाषष्टिर्धनूंषि द्वौ हस्तावितिति, स एव पञ्चम्यां धूमप्रभायां प्रथमे प्रतर उत्कर्षत उत्सेधो भवति। ततोऽग्रेतनेषु प्रतरेषु प्रत्येकं वृद्धिः पञ्चदश धनूंषि द्वौ च हस्तौ सार्धाविति। तद्यथा—द्वितीये प्रस्तटेऽष्टसप्ततिर्धनूंष्येका वितस्तिः। तृतीये प्रस्तटे त्रिनवतिर्धनूंषि त्रयो हस्ताः। चतुर्थे प्रस्तटे नवोत्तरं धनुःशतमेको हस्त एका च वितस्तिः॥ २७५॥

पञ्चमे तु प्रस्तटे यथोक्तरूपया वृद्ध्या यद्भवति तत्स्वयमाह—

**तह पंचमए पयरे, उस्सेहो धणुसयं तु पणवीसं।**

व्याख्या—धूमप्रभायां पञ्चमे प्रस्तटे भवधारणीयस्योत्कर्षत उत्सेधः पञ्चविंशत्यधिकं धनुःशतम्॥

सम्प्रति षष्ठ्यामाह—

**सो चेव य छट्ठीए, पढमे पयरम्मि होइ उस्सेहो॥ २७६॥**

**बासट्ठि धणुह सड्ढा, पयरे पयरे य होइ वुड्ढी अ। छट्ठीए तइअपयरे, दो सय पन्नासया हुंति॥ २७७॥**

व्याख्या—य एव पञ्चम्यां धूमप्रभायां पृथिव्यामुत्कर्षतो भवधारणीयस्योत्सेध उक्तः पञ्चत्रिंशं धनुःशतमिति, स एव षष्ठ्यां तमःप्रभायां प्रथमे प्रतरे भवत्युत्कर्षत उत्सेधः। ततः प्रतरे प्रतरे वृद्धिर्भवति सार्धानि द्वाषष्टिर्धनूंषि। तद्यथा—द्वितीये प्रतरे सार्धसप्ताशीत्यधिकं धनुःशतं। तृतीये तु प्रतरे यद्भवति तत्साक्षाद्दर्शयति—"छट्ठीए इत्यादि" षष्ठ्यां पृथिव्यां तृतीये प्रतरे द्वे धनुःशते पञ्चाशदधिके भवतः॥ २७६–२७७॥

अधुना सप्तम्यामाह—

**सत्तमियाए पयरे, उस्सेहो धणुसयाइं पंचेव । भवधारणीज्ज एसा, उक्कोसा होइ नायव्वा ॥ २७८ ॥**

व्याख्या—सप्तम्यां पृथिव्यां यद्वर्तत एकं प्रतरं, तस्मिन्नुत्कर्षतो भवधारणीयस्योत्सेधो भवति पञ्चैव परिपूर्णानि धनुःशतानि । एषा च प्रतिपृथिवि प्रतिप्रस्तटं च प्ररूपिता भवधारणीया भवति ज्ञातव्या ॥ २७८ ॥

१ रत्नप्रभानारकदेहमानयंत्रम् ।

| प्रतर | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | १३ |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| धनुष | ० | १ | १ | २ | ३ | ३ | ४ | ४ | ५ | ६ | ६ | ७ | ७ |
| हस्त | ३ | १ | ३ | २ | ० | २ | १ | ३ | १ | ० | २ | ० | ३ |
| अंगुल | ० | ८½ | १७ | १½ | १० | १८½ | ३ | ११½ | २० | ४½ | १३ | २१½ | ६ |

२ शर्कराप्रभानारकदेहमानयंत्रम् ।

| प्रतर | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ |
|---|---|---|---|---|---|---|---|---|---|---|---|
| धनुष | ७ | ८ | ९ | १० | १० | ११ | १२ | १३ | १४ | १४ | १५ |
| हस्त | ३ | २ | १ | ० | ३ | २ | २ | १ | ० | ३ | २ |
| अंगुल | ६ | ९ | १२ | १५ | १८ | २१ | ० | ३ | ६ | ९ | १२ |

३ वालुकाप्रभानारकदेहमानयंत्रम् ।

| प्रतर | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ |
|---|---|---|---|---|---|---|---|---|---|
| धनुष | १५ | १७ | १९ | २१ | २३ | २५ | २७ | २९ | ३१ |
| हस्त | २ | २ | २ | १ | १ | १ | १ | १ | १ |
| अंगुल | १२ | ७½ | ३ | २२½ | १८ | १३½ | ९ | ४½ | ० |

४ पंकप्रभानारकदेहमानयंत्रकम् ।

| प्रतर | १ | २ | ३ | ४ | ५ | ६ | ७ |
|---|---|---|---|---|---|---|---|
| धनुष | ३१ | ३६ | ४१ | ४६ | ५२ | ५७ | ६२ |
| हस्त | १ | १ | २ | ३ | ० | १ | २ |
| अंगुल | ० | २० | १६ | १२ | ८ | ४ | ० |

५ धूमप्रभानारकदेहमानयंत्रम् ।

| प्रतर | १ | २ | ३ | ४ | ५ |
|---|---|---|---|---|---|
| धनुष | ६२ | ७८ | ९३ | १०९ | १२५ |
| हस्त | २ | ० | ३ | १ | ० |
| अंगुल | ० | १२ | ० | १२ | ० |

६ तमःप्रजानारकदेहमानयंत्रम् ।

| | | | |
|---|---|---|---|
| प्रतर | १ | २ | ३ |
| धनुष | १२५ | १८७ | २५० |
| हस्त | ० | २ | ० |
| अंगुल | ० | ० | ० |

७ तमस्तमःप्रजानारकदेहमानयंत्रम् ।

| | |
|---|---|
| प्रतर | १ |
| धनुष | ५०० |
| हस्त | ० |
| अंगुल | ० |

सम्प्रति प्रतिपृथिव्युत्कर्षत उत्तरवैक्रियामाह—

जा जम्मि होइ नवधारणिज्जउगाहणा य नरएसु । सा डुगुणा बोधवा, उत्तरवेउवि उक्कोसा ॥ २७९॥

व्याख्या—सप्तसु नरकेषु—नरकपृथिवीषु मध्ये यस्मिन्नरके—नरकपृथिव्यामुत्कृष्टा नवधारणीयावगाहनोक्ता सा द्विगुणा सती यावत्प्रमाणा नवति, तावती तस्यां नरकपृथिव्यामुत्कृष्टोत्तरवैक्रियरूपावगाहना बोद्धव्या । तद्यथा—रत्नप्रनाया-मुत्कृष्टोत्तरवैक्रिया पञ्चदश धनूंषि द्वौ च सार्धौ हस्तौ । शर्कराप्रनायामेकत्रिंशद्धनूंष्येको हस्तः । वालुकाप्रनायां द्वाषष्टि-धनूंषि द्वौ च हस्तौ । पङ्कप्रनायां पञ्चविंशं धनुःशतं । धूमप्रनायां सार्धे द्वे शते । तमःप्रनायां पञ्च धनुःशतानि । तम-स्तमःप्रनायां धनुःसहस्रमिति ॥ २७९ ॥

सम्प्रति नवधारणीयामुत्तरवैक्रियां च जघन्यामाह—

नवधारणिज्जरूवा, उत्तरवेउविआ य नरएसु । उगाहणा जहन्ना, अंगुलअस्संख संखेउ ॥ २८० ॥

व्याख्या—नरकेषु—सर्वासु नरकपृथिवीषु नारकाणां जघन्या भवधारणीयाऽङ्गुलस्यासङ्ख्येयो भागः, सा चोत्पत्तिसमये द्रष्टव्या, न त्वन्यदा। उत्तरवैक्रियरूपा त्ववगाहना जघन्याऽङ्गुलसङ्ख्येयभागमात्रा, साऽपि च प्रारम्भकाले द्रष्टव्या। केवलं सा प्रथमसमयेऽपि तथाविधप्रयत्नभावादङ्गुलसङ्ख्येयभागमात्रैव भवति, न त्वसङ्ख्येयभागमात्रा। आह चानुयोगद्वारमूलटीकाकारो हरिभद्रसूरिः—"उत्तरवैक्रिया तु तथाविधप्रयत्नभावादाद्यसमयेऽप्यङ्गुलसङ्ख्येयभागमात्रैवेति" ॥ २०० ॥

उक्तं नारकानधिकृत्यावगाहनाद्वारं। सम्प्रति तेषामेवोपपातविरहकालमुद्वर्तनाविरहकालं चोत्कृष्टेतरभेदभिन्नं तथोपपातमुद्वर्तनां चाधिकृत्यैकस्मिन् समये सङ्ख्यां च गाथाद्वयेनाह—

**चउवीसयं मुहुत्ता, सत्त अहोरत्त तहय पन्नरस। मासो अ दो अ चउरो, छम्मासा विरहकालो उ॥२०१॥**

**उक्कोसो रयणाइसु, सव्वासु जहन्नओ भवे समओ। एमेव य उव्वट्टण, संखा पुण सुरवरू तुल्ला ॥२०२॥**

व्याख्या—इह नरकेषु नारकाः सततमेव प्राय उत्पद्यन्ते। केवलं कदाचिदन्तरं भवति। तच्चान्तरं जघन्यतः सर्वासु समस्तासु पृथिवीषु प्रत्येकं भवत्येकः समयः। उत्कर्षतो रत्नप्रभायां पृथिव्यां चतुर्विंशतिर्मुहूर्ता अन्तरं। शर्कराप्रभायां सप्ताहोरात्राः। वालुकाप्रभायां पञ्चदश। पङ्कप्रभायां मासः। धूमप्रभायां द्वौ मासौ। तमःप्रभायां चत्वारो मासाः। तमस्तमःप्रभायां षण्मासाः। "एमेव य उव्वट्टण त्ति" यथोपपातविरहकाल उक्त एवमेवोद्वर्तनाविरहकालोऽपि जघन्यत उत्कर्षतश्च वाच्यः। ततः समस्तासु पृथिवीषु प्रत्येकमुद्वर्तनाविरहकालो जघन्यत एकः समयः। उत्कर्षतो रत्नप्रभायां चतुर्विंशतिमुहूर्त्ताः। शर्कराप्रभायां सप्ताहोरात्राः। वालुकाप्रभायां पक्षः। पङ्कप्रभायां मासः। धूमप्रभायां द्वौ मासौ।

तमःप्रभायां चत्वारो मासाः । तमस्तमःप्रभायां षण्मासाः । "संखा पुण सुरवरतुल्ल त्ति" उपपात उद्वर्तनायां च सङ्ख्या पुनरेकस्मिन् समये सुरवरतुल्या सुराणामिव द्रष्टव्या । तद्यथा—एकस्मिन् समये नारका उत्पद्यन्ते जघन्यपद एको द्वौ वा, उत्कर्षतः सङ्ख्याता असङ्ख्याता वा, एवमेव चोद्वर्तन्तेऽपीति ॥ २०१–२०२ ॥

तदेवमुक्तान्युपपातोद्वर्तनाविरहकालसङ्ख्याद्वाराणि । सम्प्रति के प्राणिनो मृत्वा नरकेषूत्पद्यन्त इत्येवं लक्षणं गतिद्वारमाह—

**नरतिरिय संखजीवी, नरए गच्छंति के वि पंचिंदि । अइकूरअवसाणा, अहो अहो जाव सत्तमिया ॥२०३॥**

व्याख्या—नरा मनुष्यास्तिर्यञ्चश्च, कथंभूता इत्याह—सङ्ख्यातजीविनः सङ्ख्यातवर्षायुषः । अनेनासङ्ख्यातवर्षायुषां युगलधर्मिमनुष्यतिरश्चां व्युदासः, तेषामतिक्रूराध्यवसानाभावतो नरकयोग्यकर्मबन्धासंभवात् नरके गच्छन्ति किं सर्व एवानन्तरोक्ताः ? नेत्याह—पञ्चेन्द्रियाः, अनेनैकेन्द्रियादितिर्यग्व्यवच्छेदः । तेऽपि च पञ्चेन्द्रियनरतिर्यञ्चो न सर्वेऽपि, किंतु "अइकूरअवसाण त्ति" अतिक्रूरं रौद्रध्यानोपगतमध्यवसानं चित्तं येषां ते तथा । अनेन नरकगतिहेतुमध्ये मनोयोगस्य प्राधान्यमाह, अन्यथा महारम्भादियुक्ता अपि नरकेषु गच्छन्ति । तथा चोक्तं स्थानाङ्गे—"चउहिं ठाणेहिं जीवा निरयं गच्छंति, तं जहा—महारंभयाए महापरिग्गहियाए कुणिमाहारेणं पंचिंदियवहेणं ति" । ते चैवं नरकेषु गच्छन्तोऽति तीव्रातितीव्रतरातितीव्रतमाध्यवसाना अधोऽधो गच्छन्ति यावदधः सप्तमीं नरकपृथिवीमिति ॥ २०३ ॥

तदेवं सामान्यतो ये जीवा नरकेषु गच्छन्ति त उक्ताः । सम्प्रति रत्नप्रभादिकं पृथ्वीभेदमभिकृत्य ये यत्रोत्पद्यन्ते तान् विशेषत आचष्टे—

**असन्नी खलु पढमं, दुच्चं च सरीसवा तइय पक्खी । सीहा जंति चउत्थिं, उरगा पुण पंचमिं पुढविं ॥२०४॥**
**छट्ठिं च इत्थिआउ, मच्छा मणुया य सत्तमिं पुढविं । एसो परमुववाओ, बोधव्वो नरयपुढवीसु ॥ २०५ ॥**

व्याख्या—असंज्ञिनः-संमूर्छिमपञ्चेन्द्रियाः खलु प्रथमां नरकपृथिवीं गच्छन्ति । खलुशब्दोऽवधारणे, तच्चावधारणमेवं—असंज्ञिनः प्रथमामेव यावद्गच्छन्ति, न परत इति, न तु त एव प्रथमामिति गर्भजसरीसृपादीनामप्युत्तरपृथिवीषड्गामिनां तत्र गमनभावात्, एवमुत्तरत्राप्यवधारणं भावनीयं । "दुच्चं च सरीसव त्ति" द्वितीयामेव शर्कराप्रभाख्यां पृथिवीं यावत् गच्छन्ति सरीसृपा गोधानकुलादयो गर्भव्युत्क्रान्ता न परतः । एवं तृतीयामेव गर्भजाः पक्षिणो गृध्रादयः । चतुर्थीमेव गर्भजाः सिंहाः । पञ्चमीमेव गर्भजा उरगाः । षष्ठीमेव स्त्रियः स्त्रीरत्नाद्या महारम्भादियुक्ताः । सप्तमीं यावद्गर्भजा मत्स्यमनुजा अतिक्रूराध्यवसायिनो महापापकारिणः । एष नरकपृथिवीषु घर्मादिषु भेदेन जीवविशेषाणां परम उत्कृष्ट उपपातो बोद्धव्यो, जघन्यतो मध्यमतस्त्वन्यथा, तत्र जघन्यतः सर्वेषामपि रत्नप्रभायाः पृथिव्याः प्रथमे प्रस्तटे, मध्यमतो जघन्यात् परतः स्वस्वोत्कृष्टोपपातादर्वाक् ॥ २०४–२०५ ॥

सम्प्रति केषाञ्चित्तिर्यग्योनिजानां बाहुल्यकृतं विशेषमाह—

**वालेसु अ दाढीसु अ, पक्खीसु अ जलयरेसु उववन्ना । संखिज्जा उ ठिईआ, पुणो वि नरयाउआ हुंति ॥**

व्याख्या—नरकेभ्य उद्धृत्य व्यालेषु सर्पादिषु, दंष्ट्रिषु व्याघ्रसिंहादिषु, पक्षिषु गृध्रादिषु, जलचरेषु मत्स्येषु, सङ्ख्या तायुःस्थितय उत्पन्नाः सन्तो भूयः क्रूराध्यवसायवशगाः पञ्चेन्द्रियवधादीन् कृत्वा नरकायुषो भवन्ति । एतच्च बाहुल्य-मधिकृत्योच्यते, अन्यथा नरकेभ्योऽपि केचिदुद्धृत्य सम्यक्त्वादिप्राप्तिवशाच्छुभां गतिमासादयन्तीति ॥ २०६ ॥

सम्प्रति केन संहननेनोपेताः कां पृथिवीं यावदुत्कर्षतो गन्तुं शक्ता इत्येतन्निरूपयति—

**छेवट्ठेण उ गम्मइ, पुढवीउ रयणसक्करानाउ । इक्किक्कपुढविवुड्ढी, संघयणे कीलियाईए ॥ २०७ ॥**

व्याख्या—सेवार्तेन संहननेन—सेवार्तसंहननबलेन गम्यते जीवैरुत्कर्षतो द्वे एव पृथिव्यौ रत्नप्रभाशर्कराप्रभाख्ये यावत्, न परतः । ततः कीलिकादौ संहनन एकैकपृथिवीवृद्धिः कर्तव्या, सा चैवं—कीलिकाख्येन संहननेनोत्कर्षतस्तृतीयां पृथिवीं यावद्गम्यते, अर्धनाराचेन चतुर्थीं, नाराचेन पञ्चमीं, ऋषभनाराचेन षष्ठीं, वज्रर्षभनाराचेन सप्तमीं यावदिति । एतच्चो-त्कर्षतः । जघन्यतः पुनः सर्वैरपि संहननैरध्यवसायमन्दानुभावतया रत्नप्रभायाः प्रथमे प्रस्तटे । मध्यमतो जघन्यात् परतः स्वस्वोत्कर्षोपपातादर्वागिति ॥ २०७ ॥

सम्प्रति प्रसङ्गतो घर्मादिपृथिवीषु नारकाणां लेश्याः प्रतिपादयति—

**काऊ नीला किण्हा, लेसाउ तिन्नि हुंति नरएसु । तइआए काउ नीला, किण्हा नीला य रिट्ठाए ॥ २०८ ॥**

व्याख्या—कृष्णलेश्या नीललेश्या कापोतलेश्या एतास्तिस्रो लेश्या नरकेषु भवन्ति । तत्र प्रथमायां घर्मायां पृथिव्यां कापोतलेश्या । द्वितीयस्यामपि वंशायां कापोतलेश्या, नवरं सा क्लिष्टतरा वेदितव्या । "तइआए काउ नील त्ति" तृती-

यस्यां शैलाभिधायां पृथिव्यां कापोतलेश्या नीललेश्या च। केषुचिदुपरितनेषु प्रस्तटेषु कापोतलेश्या, सा च द्वितीयपृथिवीगतकापोतलेश्यापेक्षयाऽतिसंक्लिष्टतरा विज्ञेया। अधस्तनेषु तु प्रस्तटेषु नीललेश्या। ततश्चतुर्थ्यामञ्जनायां पृथिव्यां केवला नीललेश्या, सा च प्राक्तननीललेश्यामपेक्ष्याविशुद्धतरा प्रतिपत्तव्या। "किण्हा नीला य रिट्ठाए त्ति" रिष्टायां पञ्चम्यां पृथिव्यां नीललेश्या कृष्णलेश्या च। केषुचिदुपरितनेषु प्रस्तटेषु नीललेश्या, सा चातिसंक्लिष्टतमा। अधस्तनेषु तु प्रस्तटेषु कृष्णलेश्या। षष्ठ्यां मघायां पृथिव्यां केवला कृष्णलेश्या, सा च पञ्चमपृथिवीगतकृष्णलेश्यापेक्षयाऽविशुद्धतरा। सप्तम्यां माघवत्यां पृथिव्यामतिसंक्लिष्टतमा कृष्णलेश्या। उक्तं च भगवत्यां—"काऊ अ दोसु तइआए, मीसिआ नीलिआ चउत्थीए। पंचमिआए मीसा, किण्हा तत्तो परमकिण्हा ॥ १ ॥" ॥ २०८ ॥

अमुमेवार्थं स्पष्टयन्नाह—

**काऊ काऊ तह काउनील नीला य नीलकिण्हा य। किण्हा किण्हा य तहा सत्तसु पुढवीसु लेसाओ ॥२०९॥**

व्याख्या—इयं गाथा व्याख्यातार्थैवेति न व्याख्यायते। अत्र केचिद्व्याचक्षते—यथैता नारकाणां प्रागुक्ताश्च सुराणां बाह्यवर्णरूपाः किल द्रव्यलेश्याऽवगन्तव्याः, अन्यथाधः सप्तमनरकपृथिवीवासिनां नारकाणां या सम्यग्दर्शनावाप्तिरभिधीयते ग्रन्थान्तरेषु, सा न युक्तिमियर्ति, यस्मादुपरितनीष्वेव तेजोलेश्याप्रभृतिषु तिसृषु लेश्यासु सम्यक्त्वावाप्तिर्भवति, नाद्यासु तिसृषु लेश्यासु। तथा चोक्तमावश्यके—"सम्मत्तस्स उ तिसु, उवरिमासु पडिवज्जमाणाओ होइ। पुव्वपडिवन्नओ पुण, अण्णयरीए उ लेसाए ॥ १ ॥" उपरितन्यश्च तेजोलेश्याप्रभृतयो लेश्याः सप्तमनरकपृथिवीनारकाणां न

विद्यन्ते, कृष्णलेश्याया एव तेषां प्रतिपादितत्वादिति । तथा सौधर्मे तेजोलेश्यैव केवला प्राग्व्यावर्णिता । अथ च सङ्गमकादीनां भुवनगुरुतीर्थकरात्यन्तोपसर्गकारिणां सा न घटां प्राञ्चति, तत्सद्भावे प्रशस्तपरिणामोपपत्तितो भुवनगुरुतीर्थकरोपसर्गकारित्वानुपपत्तेः । अन्यच्चप्रदेशान्तरे एवमुच्यते—"देवाण नारयाण य दव्वलेसा हवंति एआओ । भावपरावत्तीए पुणो सुरनेरइआण छलेसा ॥ १ ॥" ततः "काउ नीला किण्हा, लेसाओ तिन्नि हुंति नरएसु" इत्यादिरूपो यो नियमः स नियमाद्विरुध्यते । तस्मादेता नारकाणां प्राक्तन्यश्च सुराणां बाह्यवर्णरूपा एव द्रव्यलेश्याः प्रतिपत्तव्या इति । तदेतत्सर्वमप्ययुक्तं, यतो यत्तावदुक्तमधः सप्तमनरकपृथिवीवासिनां नारकाणां वा सम्यग्दर्शनावाप्तिरभिधीयत इत्यादि, तदेतदागमापरिज्ञानविजृम्भितं, यत उक्तमेवमागमे प्रज्ञापनादौ—"से नूणं भंते ! किण्हलेसा नीललेसं पप्प नो तारूवत्ताए, नो ता वण्णत्ताए, नो तागंधत्ताए, नो तारसत्ताए, नो ताफासत्ताए भुज्जो भुज्जो परिणमइ ? हंता गोयमा ! किण्हलेसा नीललेसं पप्प नो तारूवत्ताए, नो तावण्णत्ताए, नो तागंधत्ताए, नो तारसत्ताए, नो ताफासत्ताए भुज्जो भुज्जो परिणमइ, से केणट्ठेणं भंते एवं वुच्चइ किण्हलेसा नीललेसं पप्प नो तारूवत्ताए जाव परिणमेइ ? गोयमा ! आगारभावमायाए वा सेसिआ पलिभागमायाए वा सेसिया किण्हलेसाणं सा नो खलु नीललेसा तत्थ गया उस्सक्कइ । से एएणट्ठेणं गोयमा ! एवं वुच्चइ किण्हा लेसा नीललेसं पप्प नो तारूवत्ताए जाव परिणमइ त्ति" । अस्य सूत्रस्यायमर्थः—सेशब्दोऽथशब्दार्थः स चेह प्रश्नेऽवगन्तव्यः, भदंतेति भगवतो वर्धमानस्वामिन आमंत्रणं, नूनं निश्चितमेतद् यथा कृष्णलेश्या—कृष्णलेश्याद्रव्याणि नीललेश्यां—नीललेश्यासंबन्धिद्रव्यवृन्दं प्राप्य न तद्रूपतया—न नीललेश्याद्रव्यरूपतया, एतदेव व्याचष्टे—न तद्वर्णतया-

न नीललेश्याद्रव्यवर्णतया, न तद्गन्धतया—न नीललेश्याद्रव्यगन्धतया, न तद्रसतया—न नीललेश्याद्रव्यरसतया, न तत्स्पर्शतया—न नीललेश्याद्रव्यस्पर्शतया भूयो भूयः परिणमते । किमुक्तं भवति ? ये नीललेश्याद्रव्याणां वर्णगन्धरसस्पर्शास्ते कृष्णलेश्याद्रव्यसंपर्केऽपि कृष्णलेश्याद्रव्याणां न परिणमन्त इति । अत्रार्षे भगवन्निर्वचनं—"हंता गोयमेत्यादि" । पुनस्ताद्रूप्यापरिणमने कारणजिज्ञासायां प्रश्नसूत्रं—"से केणट्ठेणं भंते ! एवं वुच्चइ इत्यादि" । अत्र निर्वचनं—"गोयमा ! आगारभावमायाए वा सेसिया पलिभागमायाए वा सेसिया इति" आकार उल्लेखमात्रं, आकारश्चासौ भावश्चाकारभावः, आकारभाव एवाकारभावमात्रा, मात्राशब्दस्यावधारणात्मकत्वादत्राकारभावव्यतिरिक्तप्रतिबिम्बादिधर्मान्तरव्यवच्छेदः, तयाऽऽकारभावमात्रया स्यादसौ कृष्णलेश्या नीललेश्या न तु साक्षान्नीललेश्यास्वरूपप्रतिपत्तित इति । तथा प्रतिरूपो भागः प्रतिभागः प्रतिबिम्बमित्यर्थः, प्रतिभाग एव प्रतिभागमात्रा, अत्र मात्राशब्दः प्रतिभागव्यतिरिक्तसाक्षात्तत्स्वरूपतापत्तिरूपधर्मान्तरप्रतिषेधवाचकः, तया प्रतिभागमात्रया । वाशब्दः पक्षान्तरसूचने । स्यादसौ कृष्णलेश्या नीललेश्या, न तु तत्स्वरूपापत्त्या । किमुक्तं भवति ? यथा वैडूर्यादिमणिषु कृष्णसूत्रे नीलसूत्रे लोहितसूत्रे हारिद्रसूत्रे शुक्लसूत्रे वा प्रोतेषु कृष्णादिसूत्रसंपर्कतो वैडूर्यादिमणीनामस्पष्टं किञ्चित्तदाकारभावमात्रं भवति । यदि वा स्फटिकोपलस्य जपाकुसुमादि सन्निधानतः स्पष्टं जपाकुसुमादिप्रतिबिम्बमात्रं, न तूभयत्रापि तद्रूपतापत्तिः । तथा कृष्णलेश्याद्रव्यनिकुरम्बो नीललेश्याद्रव्यसमूहं प्राप्य कदाचिदस्पष्टं तदाकारभावमात्रं प्रतिपद्यते, कदाचित् स्पष्टं प्रतिबिम्बमात्रं, न पुनस्तानि कृष्णलेश्याद्रव्याणि सर्वथा नीललेश्याद्रव्यरूपतां प्रतिपद्यन्ते । तथा चाह—"किण्हलेसाएं सा नो खलु नील-

लेसा"। सा स्वरूपतः कृष्णलेश्यैव यथा वैडूर्यादिमणयः। कृष्णादिसूत्रसंपर्केऽपि वैडूर्यादिमणय एव, यथा वा स्फटिकोपलो जपाकुसुमादिसंनिधानेऽपि स्फटिकोपल एव। नो खलु नीललेश्या–नैव नीललेश्या केवलं तत्र गता तत्रस्था स्वरूपस्थैव सतीत्यर्थ उत्सर्पति नीललेश्यादिकं लेश्यान्तरं प्राप्य तदाकारभावं तत्प्रतिबिम्बभावमात्रं वा समासादयति, न पुनस्तद्रूपतां प्रतिपद्यत इति। तथा "से णूणं भंते नीललेसा काउलेसं पप्प नो तारूवत्ताए जाव नीललेसाणं सा नो खलु काउलेसा तत्थ गया उस्सक्कइ उसक्कइ वा"। इदमपि सूत्रं प्राग्वद्व्याख्येयं। नवरं "तत्थ गया उस्सक्कइ त्ति" तत्र तस्मिन् स्वकीयस्वरूपे गता स्थिता सत्युत्ष्वष्कते उत्सर्पति कापोतलेश्यासंबन्धिनमाकारभावं प्रतिबिम्बमात्रं वा प्रतिपद्यत इत्यर्थः, न पुनस्तद्रूपतामासादयति। "उसक्कइ वेति" सैव नीललेश्या कृष्णलेश्यां प्राप्यावष्वष्कते अवसर्पति कृष्णलेश्यासंबन्धिनमाकारभावं प्रतिबिम्बमात्रं वा समासादयति, न तु तद्रूपतां प्रतिपद्यते। इह नीललेश्यातः कृष्णलेश्या वर्णगन्धरसस्पर्शैरतिनिकृष्टतरा, ततस्तत्संबन्धिनमाकारभावं प्रतिबिम्बं वा समासादयतीत्यवष्वष्कत इत्युच्यते। तथा "से णूणं भंते! काउलेसा तेउलेसं पप्प, तथा तेउलेसा पम्हलेसं पप्प, पम्हलेसा सुक्कलेसं पप्प" इत्यादयोऽपि सूत्रालापका भावार्थमधिकृत्य प्राग्वदवगन्तव्याः। यथा च कृष्णलेश्याया नीललेश्यां प्रत्यालापक उक्तस्तथा कापोतलेश्यां प्रति द्रष्टव्यः। ये तु कृष्णलेश्यायास्तेजोलेश्यादिकं प्रत्यालापकास्ते प्रकृतोपयोगिन इत्युपदर्श्यन्ते—"किण्हलेसा णं भंते! तेउलेसं पप्प नो तारूवत्ताए, नो तावण्णत्ताए, नो तागंधत्ताए, नो तारसत्ताए, नो ताफासत्ताए, भुज्जो भुज्जो परिणमइ हंता गोयमा! किण्हलेसा तेउलेसं पप्प नो तारूवत्ताए जाव भुज्जो भुज्जो परिणमइ। से केणट्ठेणं भंते! एवं वुच्चइ किण्हलेसा तेउलेसं

पप्प नो तारूवत्ताए जाव परिणमइ? गोयमा आगारभावमायाए वा से सिया पलिभागमायाए वा से सिया किण्हलेसाणं सा नो खलु सा तेउलेसा तत्थगया उस्सक्कइ उसक्कइ वा"। अस्यार्थः प्राग्वदवसेयः। एवं कृष्णलेश्यायाः पद्मलेश्यां प्रति शुक्ललेश्यां च प्रत्यालापकौ द्रष्टव्यौ। ततो यदा सप्तमनरकपृथिव्यामपि कृष्णलेश्या तेजोलेश्याद्रव्याणि प्राप्य तदाकारभावमात्रान्विता भवति तत्प्रतिबिम्बमात्रान्विता वा, तदा कृष्णादिद्रव्यसान्निध्येऽप्युपधानोपरक्तस्फटिकसन्निधाने स्फटिकस्येवान्याकार एव साक्षादुत्कलितस्वरूपतेजोलेश्याद्रव्यसान्निध्य इव शुभः परिणामो जीवस्योपजायते, ततस्तथाविधशुभतेजोलेश्यापरिणामापन्नस्य सतस्तस्य सप्तमपृथिवीवासिनो नारकस्य सम्यग्दर्शनावाप्तिरुद्भवन्ती न विरोधभाग्भवति। नन्वेवमपि सप्तमनरकपृथिव्यामपि परमार्थतस्तेजोलेश्यासंभव उक्तः, स चाधिकृतसूत्रे नोपदर्शित इति तदवस्थमेवासमञ्जसं। तदेतदसत्, सम्यग्भावार्थापरिज्ञानात्। सप्तमनरकपृथिव्यां हि नारकस्य सदैव सन्निहितस्वद्रव्यतया सदावस्थायिनी कृष्णलेश्या, या तु तेजोलेश्या साऽऽकारभावमात्रादिना प्रकारेण कदाचिदेव भवति, न च भूयांसं कालमवतिष्ठते, न च तदापि कृष्णलेश्याद्रव्याणि स्वं स्वरूपं त्यजन्ति, ततोऽधिकृतसूत्रे कृष्णलेश्यैव सप्तमनरकपृथिव्यामुक्ता, न तेजोलेश्यादिका लेश्या, एवं सर्वत्रापि भावनीयं। अत एव सङ्गमकादीनामप्याकारभावमात्रादिना प्रकारेण कृष्णलेश्यासंभवादुपपद्यते भुवनगुरुमपि तीर्थकरमधिकृत्योपसर्गकर्तृत्वमिति न काचिदनुपपत्तिः। यदपि चोक्तं—"देवाण नारयाण य" इत्यादि, तदपि यथोक्तन्यायेन सङ्गतमेव। तथाहि—यद्यप्याकारभावमात्रेण प्रतिबिम्बभावमात्रेण वाऽन्यलेश्योपनिपातस्तथाप्यधिकृतसूत्रोपात्तलेश्यागतानि द्रव्याणि स्वस्वरूपं न परित्यजन्ति, भूयश्चान्यलेश्याविगमे

ता एवाधिकृतसूत्रोपात्ता लेश्याः प्रवर्तन्ते । तत इत्थं प्रायः सदावस्थायित्वादन्यलेश्यान्तरोपनिपातेऽपि स्वरूपरूपता-
परित्यागासंभवादधिकृतसूत्रोपात्ता लेश्या द्रव्यलेश्या इत्युक्ताः, न पुनरेतावता बाह्यवर्णरूपाः । अपि चेमा एवाधिकृत-
सूत्रोपात्ता लेश्या नारकाणां भगवत्यां प्रज्ञापनादिषु चाभिधीयन्ते, तद्यद्येता बाह्यवर्णरूपा भवेयुस्तर्हि यद्भगवत्यादिषु
वर्णप्रतिपादकं सूत्रमभिधाय लेश्याप्रतिपादकं सूत्रमेवमुक्तं, यथा—"नेरइआ णं भंते! सव्वे समवन्ना? गोयमा! नो इणट्ठे
समट्ठे । से केणट्ठेणं भंते! एवं वुच्चइ? गोयमा! नेरइया दुविहा पन्नत्ता, तं जहा—पुव्वोववन्नगा पच्छोववन्नगा य । तत्थ णं
जे ते पुव्वोववन्नगा ते णं विसुद्धवन्नतरागा, जे ते पच्छोववन्नगा ते णं अविसुद्धवन्नतरागा, से एएणट्ठेणं गोयमा! एवं
वुच्चइ नो नेरइआ सव्वे समवन्ना । नेरइया णं भंते! सव्वे समलेसा? गोयमा! णो इणट्ठे समट्ठे । से केणट्ठेणं भंते! एवं वुच्चइ?
गोयमा! नेरइया दुविहा पन्नत्ता, तं जहा—पुव्वोववन्नगा पच्छोववन्नगा य । तत्थ णं जे ते पुव्वोववन्नगा ते णं विसुद्धले-
सतरागा, जे ते पच्छोववन्नगा ते णं अविसुद्धलेसतरागा से एएणट्ठेणं गोयमा! एवं वुच्चइ नो नेरइया सव्वे समलेसा इति"
तद्विरुध्येत, वर्णानामेव लेश्यात्वाभ्युपगमात्, तेषां च पूर्वसूत्रेणैव प्रतिपादितत्वादिति । या अपि भावपरावृत्त्या सुरना-
रकाणां षडपि लेश्या उक्तास्ता अप्यत्रदुक्तेनैवाकारभावमात्रादिना प्रकारेण घटन्ते नान्यथेति न कश्चिद्दोषः । यदपि
चोक्तं—"किण्हा नीला काऊ लेसाओ हुंति तिन्नि नरएसु" इति नियमश्च विरुध्यत इति तदप्यशोभनं, अधिकृतनि-
यमस्यावस्थितलेश्यापेक्षत्वात् । किं च यदि बाह्यवर्णरूपा एताः सुरनारकाणां द्रव्यलेश्याः स्युः, तर्हि "किण्हा नीला

काऊ तेऊ लेसा य जवणवंतरिया" इत्यादिना जवनपतीनामाद्यलेश्याचतुष्टयमजिधाय पुनः "काला असुरकुमारा" इत्यादिबाह्यवर्णाजिधानं निरर्थकतां यायादिति कृतं प्रसङ्गेन ॥ २०ए ॥

उक्तं सप्रसङ्गं नारकानधिकृत्य गतिद्वारं । अधुना नरकाउद्वृत्ताः क्व पुनरागछन्तीत्येवंलक्षणमागतिद्वारमाह—

**नरयाउ उवट्टा, गप्रे पज्जत्त संखजीवीसु । नियमेण होइ वासो, लद्धीण उ संजवं वोछं ॥ २ए० ॥**

व्याख्या—इह "उवट्टा" इति प्राकृतत्वात् षष्ठ्यर्थे प्रथमा, ततोऽयमर्थः—नरकाउद्वृत्तानां प्रच्युतानां सतां जीवानामनन्तरजवे नियमेन वासो जवति, गर्जव्युत्क्रान्तेषु पर्याप्तेषु सङ्ख्यातजीविषु सङ्ख्यातवर्षायुष्केषु न शेषेषु । तत्र गर्जव्युत्क्रान्तग्रहणेन संमूर्छिमसुरनारकव्यवछेदः, पर्याप्तग्रहणेन लब्ध्यपर्याप्तकव्यवछेदः, सङ्ख्यातजीविग्रहणेनासङ्ख्यातजीविनां निरासः । साम्प्रतमुत्तरगाथासंबन्धार्थमाह—"लद्धीण उ संजवं वोछं" ततो नरकाउद्वृत्तानां जीवानां या लब्धयः संजवन्ति तासां लब्धीनां संजवं वक्ष्ये ॥ २ए० ॥

प्रतिज्ञातमेव निर्वाहयति—

**तिसु तित्थ चउत्थीए उ केवलं पंचमीएँ सामन्नं । छठीइ विरयविरई सत्तमपुढवीए सम्मत्तं ॥२ए१॥**

व्याख्या—आद्याभ्यस्तिसृभ्यः पृथिवीभ्य उद्वृत्ता अनन्तरजवे तीर्थकृतो जवन्ति । एतच्च संजवमात्रमुच्यते, न नियमः, तेन ये पूर्वमेव बद्धायुषः सन्तः सम्यग्दर्शनविशुद्ध्यादिजिः कारणैस्तीर्थकरनामगोत्रकर्माण्युपादाय श्रेणिकादय इव नरकेषु गछन्ति, त एव तत उद्वृत्ता अनन्तरजवे तीर्थकृतो जवन्ति, न शेषा इति द्रष्टव्यं । चतुर्थ्या उद्वृत्ताः केचित्

केवलज्ञानं सामान्यतः प्राप्नुवन्ति, तीर्थंकृतस्तु नियमान्न भवन्ति । पञ्चम्या उद्वृत्ताः श्रामण्यं सर्वविरतिरूपं लभन्ते, न तु केवलज्ञानं । षष्ठ्या उद्वृत्ता विरत्यविरतिं । सप्तम्या उद्वृत्ताः सम्यक्त्वं सम्यग्दर्शनं नान्यं गुणमिति । अयं चात्र तात्पर्यार्थः—आद्याभ्यस्तिसृभ्य उद्वृत्तास्तीर्थकृतो भवन्ति, चतसृभ्य उद्वृत्ताः केवलज्ञानिनः पञ्चभ्य उद्वृत्ताः संयमिनः, षड्भ्यो देशविरताः, सप्तभ्यः सम्यग्दृष्टय इति ॥ २९१ ॥

पुनरपि लब्धिविशेषसंभवं प्रतिपादयति—

**पढमाउ चक्कवट्टी, बिइयाउ रामकेसवा हुंति । तच्चाउ अरिहंता, तहंतकिरिया चउत्थीउ ॥ २९२ ॥**

व्याख्या—प्रथमाया एव रत्नप्रभायाः पृथिव्या उद्वृत्ताश्चक्रवर्तिनो भवन्ति, न शेषपृथिवीभ्यः । द्वितीयाया द्वितीयां पृथिवीं मर्यादीकृत्य नरकेभ्य उद्वृत्ता रामकेशवाः—बलदेवा वासुदेवा भवन्ति । एवं तृतीयस्या उद्वृत्ता अर्हन्तस्तीर्थकराः । चतुर्थ्या उद्वृत्ता "अंतकिरिय त्ति" पदैकदेशे पदसमुदायोपचारादन्तक्रियासाधका भवन्ति निर्वाणसाधका भवन्तीत्यर्थः ॥ २९२ ॥

तथा—

**उव्वट्टिया य संता, नेरइया तमतमाउ पुढवीउ । न लहंति माणुसत्तं, तिरिक्खजोणिं उवणमंति ॥२९३॥**

**छट्ठीउ पुढवीउ, उव्वट्टा इह अणंतरभवम्मि । भज्जा माणुसजम्मे, संजमलंभेण उ विहीणा ॥ २९४ ॥**

व्याख्या—तमस्तमःप्रभाभिधानायाः सप्तमनरकपृथिव्या उद्वृत्ताः सन्तो नैरयिका नियमान्मानुषत्वं न लभन्ते, किं

तु तिर्यग्योनिमुपनमन्ति धातूनामनेकार्थत्वात् प्राप्नुवन्ति । तथा षष्ठ्यास्तमःप्रनाभिधानायाः पृथिव्या उद्धृत्ता सन्तो नारका इहानन्तरभवे मनुष्यजन्मनि भाज्याः—केचिन्मनुष्या भवन्ति केचिन्नेति भावः । येऽपि च मनुष्या भवन्ति तेऽपि नियमतः संयमलाभेन सर्वविरतिरूपेण विहीना भवन्ति, न तु कदाचनापि तद्युक्ताः ॥ २९३–२९४ ॥

सम्प्रति प्रसङ्गतोऽन्यतोऽप्युद्धृत्ता बलदेवादयो भवन्तीत्येतद्दर्शयति—

बलदेव चक्कवट्टी, देवट्ठाणेसु हुंति सव्वेसु । अरिहंता वासुदेवा, विमाणवासीसु बोधव्वा ॥ २९५ ॥

व्याख्या—इह "देवट्ठाणेसुं" इति पञ्चम्यर्थे सप्तमी प्राकृतत्वाद्यथा "अंतेउरे रमिउमागतो राया" इत्यत्र । ततोऽयमर्थः—सर्वेभ्योऽपि देवस्थानेभ्यो भवनपतिव्यन्तरज्योतिष्कवैमानिकरूपेभ्य उद्धृत्ता बलदेवाः—रामाश्चक्रवर्तिनः—षट्खण्डभरतादिभोक्तारो भवन्ति, अर्हन्तो वासुदेवाश्च विमानवासिभ्य एवोद्धृत्ता भवन्ति न शेषस्थानेभ्यः ॥ २९५ ॥

अरिहंतचक्कवट्टी, बलदेवा तह य वासुदेवा । न मणुयतिरिएहिंतो, अणंतरं चेव जायंति ॥ २९६ ॥

व्याख्या—अर्हन्तश्चक्रवर्तिनो बलदेवा वासुदेवाश्च मनुष्येभ्यस्तिर्यग्भ्यो वाऽनन्तरमुद्धृत्ताः सन्तो न जायन्ते, किं तु देवेभ्यो नारकेभ्यो वा, तेभ्योऽपि यथोक्तस्थानेभ्य इति ॥ २९६ ॥

सम्प्रति प्रसङ्गतोऽन्यतोऽप्युद्धृत्तानां लब्धिं प्रतिपादयति—

भूदगपंकप्पभवा, चउरो हरिआउ छच्च सिझंति ।
विगला लभिज्ज विरइं, न हु किंचि लभिज्ज सुहुमतसा ॥ २९७ ॥

व्याख्या—भुवः–पृथिव्या उदकात्–अप्कायात् "पंक त्ति" पदैकदेशे पदसमुदायोपचारात् पङ्कप्रभायाः प्रभवः–उत्पत्तिर्येषां मनुष्याणां ते भूदकपङ्कप्रभवा एकस्मिन् समये चत्वारः सिध्यन्ति । किमुक्तं भवति ? पृथिवीकायेभ्योऽथवाऽप्कायिकेभ्यो यदि वा पङ्कप्रभाया उद्वृत्ताः सन्तोऽनन्तरभवे मनुष्या जाता यद्येकस्मिन् समये सिध्यन्ति, ततः प्रत्येकं चत्वारश्चत्वारः सिध्यन्ति । हरितेभ्यो–वनस्पतिकायिकेभ्य उद्वृत्ताः षड् । तथा विकलात्–विकलेन्द्रियादुद्वृत्ता अनन्तरभवे मनुष्या जाता विरतिं–सर्वसावद्यविरतिं लभन्ते, न तु सिध्यन्ति । सूक्ष्मत्रसात्–तेजःकायिकाद्वायुकायिकाद्वा उद्वृत्ता अनन्तरभवे तिर्यक्पञ्चेन्द्रिया अपि जाता न कमपि गुणं सम्यक्त्वादिकं लभन्ते, तथास्वाभाव्यात् ॥ २९७ ॥

मंडलिअमणुअरयणा हेसत्तमतेउवाउवज्जेहिं । वसुदेवमणुयरयणा, अणुत्तरविमाणवज्जेहिं ॥ २९८ ॥

व्याख्या—माण्डलिका–मुकुटबद्धराजानः शेषराजानो वा मनुष्यरत्नानि–मनुष्यरूपाणि यानि चक्रवर्तिनां रत्नानि सेनापतिगृहपतिपुरोहितवर्धकिस्त्रीरत्नानि तानि चाधः सप्तमनरकपृथिवीं तेजस्कायिकान् वायुकायिकाँश्च वर्जयित्वा शेषजीवनिकायेभ्यः सर्वेभ्योऽप्युद्वृत्ताः संभवन्ति, न तु सप्तमपृथिव्यादिभ्यः, तेभ्य उद्वृत्तानामनन्तरभवे मनुष्यजन्मन एवासंभवात् । तथा वासुदेवमनुष्यरत्नानि च यदि देवेभ्य उद्वृत्ता अनन्तरभवे भवन्ति, तर्ह्यनुत्तरविमानवर्जेभ्यो नानुत्तरविमानवासिभ्यः, तथास्वभावत्वात् ॥ २९८ ॥

तेरिच्छमणुअसंखाउएहिं कप्पाउ जा सहस्सारो । हयगयरयणुब्भवाउ, नेरइएहिं च सव्वेहिं ॥ २९९ ॥

व्याख्या—हयरत्नोपपातो गजरत्नोपपातश्च सङ्ख्यातजीविभ्यस्तिर्यङ्मनुष्येभ्यः कल्पाद्यावत्सहस्राराम्नैरयिकेभ्यश्च सर्वेभ्यः—सप्तपृथिवीवर्तिभ्यो भवति, न शेषस्थानेभ्यः ॥ २९९ ॥

एगिंदिअरयणाइं, असुरकुमारेहिं जाव ईसाणो। उववज्जंति अ नियमा, सेसट्ठाणेहिं पडिसेहो ॥३००॥

व्याख्या—एकेन्द्रियरूपाणि यानि चक्रवर्तिनां रत्नानि चक्रादीनि यदि देवेभ्य उद्धृत्य जायन्ते, तर्हि नियमादसुरकुमारेभ्य आरभ्य यावदीशानकल्पस्तावदुत्पद्यन्ते। किमुक्तं भवति ? भवनपतिव्यन्तरज्योतिष्कसौधर्मेशानदेवेभ्य उद्धृत्योत्पद्यन्ते, न शेषदेवेभ्यः ॥ ३०० ॥

सम्प्रति प्रसङ्गतश्चक्रादीनां रत्नानां प्रमाणमाह—

चक्कं छत्तं दंडं, तिन्नि वि एयाइं वाममित्ताइं। चम्मं दुहत्थदीहं, बत्तीसं अंगुलाइं असि ॥ ३०१ ॥

व्याख्या—चक्रं छत्रं दण्डमित्येतानि त्रीण्यपि रत्नानि वाम (व्याम) मात्राणि, वा (व्या) मनाम प्रसारितोभयबाह्वोः पुरुषस्योभयकराङ्गुल्यपान्तरालं। चर्मरत्नं द्विहस्तदैर्घ्यं, द्वात्रिंशदङ्गुलान्यसिः—खड्गरत्नं ॥ ३०१ ॥

चउरंगुलो मणी पुण, तस्सद्धं चेव होइ विच्छिन्नो। चउरंगुलप्पमाणा, सुवन्नवरकागिणी नेया ॥३०२॥

व्याख्या—दैर्घ्यमधिकृत्य मणिः पुनश्चतुरङ्गुलप्रमाणः, तस्यार्धं दीर्घस्यार्धे द्वे अङ्गुले इत्यर्थः, विस्तीर्णो विस्तृतः। तथा चतुरङ्गुलप्रमाणा सुवर्णवरकाकिनी जात्यसुवर्णमयी—काकिनी, काकिनी नाम रत्नं ज्ञेया। इहाङ्गुलं प्रमाणाङ्गुलमवगन्तव्यं। सर्वचक्रवर्तिनामपि काकिन्यादिरत्नानां तुल्यप्रमाणत्वात् ॥ ३०२ ॥

सम्प्रति चतुर्दशापि रत्नानि चक्रवर्तिनां नामग्राहमाह—

**सेणावइ गाहावइ, पुरोहि गय तुरय वड्ढई इत्थी। चक्कं छत्तं चम्मं, मणि कागिणि खग्ग दंडो य ॥ ३०३॥**

व्याख्या—सेनापतिः—दलनायको गङ्गासिन्धुपरपारविजयबलिष्ठः । गृहपतिः—चक्रवर्त्तिगृहमुचितेतिकर्तव्यतापरो यस्तमिस्रगुहायां खण्डप्रपातगुहायां च चक्रवर्तिनः समस्तस्यापि स्कन्धावारस्य सुखोत्तारयोग्यमुन्मग्नजलायां निमग्नजलायां वा नद्यां काष्ठमयं सेतुबन्धं करोति । पुरोहितः—शान्तिकर्मादिकर्ता । गजतुरङ्गमौ प्रकृष्टवेगमहापराक्रमादिगुणसमन्वितौ । वर्धकिर्गृहनिवेशादिसूत्रणाकृत् । स्त्रीरत्नमद्भुतकामसुखनिधानं । चक्रं—समस्तायुधातिशायि दुर्जयरिपुविजयकरं । छत्रं—चक्रवर्तिहस्तसंस्पर्शप्रभावसंजातद्वादशयोजनायामविस्तारं सवैताढ्योत्तरविभागवर्तिम्लेच्छाराधितमेघकुमारासुरोत्सृष्टाम्बुभरनिरसनसमर्थं । चर्मरत्नं—चक्रवर्तिहस्तसंस्पर्शप्रभावसंजातद्वादशयोजनायामविस्तारं प्रातरुप्तापराह्णसंपन्नोपभोग्यशाल्यादिसंपत्तिकरं । तथा मणिरत्नं—यथाक्रममुपर्यधोभागव्यवस्थितयोश्छत्रचर्मरत्नयोरपान्तराले छत्रतुम्बे न्यस्तः सन् द्वादशयोजनविस्तारिणः समस्तस्यापि चक्रवर्तिकटकस्य प्रकाशकारी तमिस्रगुहायां खण्डप्रपातगुहायां च प्रविशतश्चक्रवर्तिनो हस्तिरत्नशिरसि निबद्धो द्वादश योजनानि यावत् पूर्वापरपुरोरूपासु तिसृषु दिक्षु तिनिविडमपि तिमिरजालापहर्ता, यस्य च हस्ते शिरसि वा निबद्धस्तस्य समस्तोपद्रवसमस्तरोगापहारकारी मणिः । काकिनीरत्नं—वैताढ्यगुहयोरुभयभित्तिष्वेकोनपञ्चाशत्सङ्ख्यमण्डलकरण उपयोगि । खड्गरत्नं-संग्राममभूमावप्रतिहतशक्ति । दण्डरत्नं—विषमोन्नतविभागेषु समत्वकारि

१ यस्तमिस्रगुहायामित्यादितः काष्ठमयं सेतुबन्धं करोति इति पर्यंतं व्याख्या वर्धकिरत्नसार्थाधिकारे आवश्यकचूर्ण्यादौ कृताऽस्ति ।

यत्नविशेषतश्च व्यापार्यमाणं योजनसहस्रमप्यधः प्रविशति । एतानि चतुर्दशापि चक्रवर्तिनो रत्नानि प्रत्येकं यक्षसहस्राधिष्ठितानि भवन्ति । एतेषां च मध्ये सप्त पञ्चेन्द्रियरूपाणि सप्तैकेन्द्रियरूपाणि । तानि च पञ्चेन्द्रियरूपाण्येकेन्द्रियरूपाणि च प्रत्येकं जम्बूद्वीपे जघन्यपदेऽष्टाविंशतिसङ्ख्यान्युत्कृष्टपदे दशोत्तरशतद्वयसङ्ख्यानि परिभोगमायान्ति । तथाहि—जघन्यपदे चत्वारश्चक्रवर्तिनः, एकैकस्य च चक्रवर्तिनः सप्त पञ्चेन्द्रियाणि सप्तैकेन्द्रियरूपाणि, सप्त च चतुर्भिर्गुणिता अष्टाविंशतिर्भवति । उत्कृष्टपदे चक्रवर्तिनस्त्रिंशत्, तद्यथा—अष्टाविंशतिर्महाविदेह एको भरतक्षेत्र एक ऐरवतक्षेत्रे, सप्तानां च त्रिंशता गुणने द्वे शते दशोत्तरे २१० भवत इति । तथा चोक्तं जम्बूद्वीपप्रज्ञप्तौ—"जंबूद्दीवे णं भंते! जहन्नपए उक्कोसपए वा केवइया पंचेंदियरयणसया परिभोगत्ताए हव्वमागच्छंति? गोयमा! जहण्णपए अट्ठावीसं उक्कोसपए दुन्नि सया दसुत्तरा पंचेंदियरयणसया परिभोगत्ताए हव्वमागच्छंति । जंबूद्दीवे णं भंते! दीवे जहन्नपए उक्कोसपए वा केवइया एगिंदियरयणसया परिभोगत्ताए हव्वमागच्छंति? गोयमा! जहन्नपए अट्ठावीसं उक्कोसपए दुन्नि सया दसुत्तरा एगिंदियरयणसया परिभोगत्ताए हव्वमागच्छंति त्ति" ॥ ३०३ ॥

सम्प्रति प्रसङ्गत एव वासुदेवरत्नान्याह—

**चक्कं खग्गं च धणू, मणी य माला तहेव गय संखो । एए उ सत्त रयणा, सव्वेसिं वासुदेवाणं ॥ ३०४ ॥**

व्याख्या—चक्रं खड्गं धनुर्मणिर्मालाऽम्लानगुणा देवसमर्पिता गदा—प्रहरणविशेषः शङ्खः—पाञ्चजन्यो द्वादशयोजनविस्तारिध्वानः, एतानि सप्त रत्नानि वासुदेवानां भवन्ति ॥ ३०४ ॥

उक्तं च प्रसक्तानुप्रसक्तं, इदानीं प्रस्तुतमुच्यते, तत्र नारकाणां कियत्क्षेत्रमवधिविषय इत्येतन्निरूपयन्नाह—

**रयणप्पहाए जोयणमेगं विसउ हविज्ज अवहीए। पुढवीए पुढवीए, गाउअमद्धं परिहरिज्जा ॥३०५॥**

व्याख्या—रत्नप्रभायां पृथिव्यां नारकाणामवधिज्ञानस्य विषयो योजनमेकं। ततः परं पृथिव्यां पृथिव्यामवधिविषयचिन्तायां गव्यूतार्धं परिहरेत्, तद्यथा—द्वितीयस्यां पृथिव्यां सार्धं गव्यूतत्रयमवधिज्ञानविषयः, तृतीयस्यां गव्यूतत्रयं, चतुर्थ्यामर्धतृतीयानि गव्यूतानि, पञ्चम्यां द्वे गव्यूते, षष्ठ्यां सार्धं गव्यूतं, सप्तम्यां गव्यूतमिति। उक्तं च—“चत्तारि गाउआइं, अद्धुट्ठाइं तिगाउअं चेव। अड्ढाइज्जा दुन्नि य, दिवड्ढमेगं च नरएसु ॥ १ ॥” इदं च विषयपरिमाणमवधिज्ञानस्योत्कर्षतो वेदितव्यं। जघन्यतः पुनरिदं—रत्नप्रभायामर्धचतुर्थानि गव्यूतानि नारकाणामवधिज्ञानविषयः, द्वितीयस्यां पृथिव्यां त्रीणि गव्यूतानि, तृतीयस्यामर्धतृतीयानि गव्यूतानि, चतुर्थ्यां द्वे गव्यूते, पञ्चम्यां सार्धं गव्यूतं, षष्ठ्यामेकं गव्यूतं, सप्तम्यामर्धगव्यूतमिति ॥ ३०५ ॥

उक्तं सप्रसङ्गं नारकानधिकृत्यागतिद्वारं, सम्प्रति नारकवक्तव्यतामुपसंहरन्नुत्तरवक्तव्यतोपक्षेपं च कुर्वन्नाह—

**नरए संखेवेसो, इत्तो एगिंदियाण तिरियाणं। गब्भुयजलचरोभयपंचिंदियआउमाणं च ॥ ३०६ ॥**

व्याख्या—नरके नरकविषये नारकाणां स्थित्यवगाहनादिप्रतिपादने संक्षेप उक्तः। इत ऊर्ध्वमेकेन्द्रियाणां विकलेन्द्रियाणां—द्वित्रिचतुरिन्द्रियरूपाणां, एकेन्द्रियाणां पञ्चेन्द्रियाणां च साक्षादुपादानं कृतमतोऽत्र पारिशेष्यात्तिर्यग्ग्रहणेन विकलेन्द्रियाणां ग्रहणं। तथा गर्भजन्मोपलक्षिता गर्भास्ते च चतुष्पदाः पक्षिणश्च द्रष्टव्याः। “भुअ त्ति” पदैकदेशे

पदसमुदायोपचाराद्भुजपरिसर्पाः, उपलक्षणमेतदुरःपरिसर्पाश्च । तथा जलचरा मत्स्यादयः । "उन्नय त्ति" गर्भजाः संमूर्छिमाश्च । एतच्च विशेषणं भुजपरिसर्पाणामुरःपरिसर्पाणां जलचराणां च द्रष्टव्यं । येऽपि च चतुष्पदाः पक्षिणश्च संमूर्छिमास्तेऽप्युपलक्षणेन सूचिता वेदितव्याः । एते च कथंभूता इत्याह—पञ्चेन्द्रियाः । ततो विशेषणसमासः, तेषां उपलक्षणमेतत्, तेन गर्भजसंमूर्छिममनुष्याणां चायुःप्रमाणं चशब्दाद्देहप्रमाणं च वक्ष्यामि ॥ ३०६ ॥

तत्र प्रथमत एकेन्द्रियादीनां शरीरावगाहनामाह—

जोयणसहस्समहियं, ओहेण एगिंदिए तरुगणेसु । मच्छजुअले सहस्सं, उरगेसु य गब्भजाईसु ॥ ३०७ ॥

व्याख्या—ओघेन–सामान्यरूपेणैकेन्द्रियसामान्यचिन्तायामेकेन्द्रियाणामित्यर्थः, विशेषचिन्तायां तरुगणेषु योजनसहस्रमधिकं–किञ्चित्समधिकं, तच्च समुद्रादिगतं पद्मनालमवसेयं । अत्राह—शरीरप्रमाणमुत्सेधाङ्गुलतः समुद्रादिपरिमाणं तु प्रमाणाङ्गुलतः, समुद्राणां चावगाहो योजनसहस्रमतस्तद्गतपद्मनालादिकमुत्सेधाङ्गुलापेक्षयाऽधिकप्रमाणं भवतीति कथं न विरोधः । नैष दोषः, इह समुद्रमध्ये प्रमाणाङ्गुलतो योजनसहस्रावगाहे यानि पद्मानि तानि पृथिवीपरिणामरूपाणि, यथा श्रीदेवतायाः पद्महृदे पद्मं, यानि पुनः शेषेषु गोतीर्थादिषु स्थानेषु पद्मानि तानि वनस्पतिपरिणामरूपाण्यपि भवन्ति, तानि च शेषेषु जलाशयेषु वल्ल्यादयश्चोत्कर्षतः शरीरप्रमाणमानेन किञ्चित्समधिकं योजनसहस्रं भवतीति न कश्चिद्दोषः । तथा चामुमेवार्थं जिनभद्रगणिक्षमाश्रमणो विशेषणवत्यामाह—"जोअणसहस्समहिअं, वणस्सईदेहमाणमुद्दिट्ठं । तं च किल समुद्दगयं, जलरुहनालं हवइ नन्नं ॥ १ ॥ उस्सेहंगुलओ तं, होइ पमाणंगुलेण य समुद्दो । अव-

रोप्परओ कुन्निवि, कहमविरोहीणि हुजाहु ॥ २ ॥ पुढवीपरिणामाइं ताइं किर सिरिनिवासपउमं च । गोतित्थेसु वण-स्सइपरिणामाइं तु हुजाहि ॥ ३ ॥ जत्थुस्सेहंगुलओ, सहस्समवसेसएसु य जलेसु । वल्लीलयादओ वि य, सहस्समायामओ हुंति ॥ ४ ॥" तथा मत्स्ययुगले—गर्भव्युत्क्रान्तिकसंमूर्छिमलक्षण उरगेषु च—सर्पजातीयेषु गर्भजातिषु—गर्भजन्मसु देहप्रमाणं प्रत्येकं योजनसहस्रं परिपूर्णमुक्तम् ॥ अत्रान्तरे च प्रागुक्तवनस्पतिशरीरविषयाक्षेपपरिहारसंवादकमन्यकर्तृकं गाथात्रयम्—"उस्सेहंगुलगणियं, जलासयं जमिह जोयणसहस्सं । तत्थुप्पन्नं नलिणं, विन्नेयं तप्पियमेयं तु ॥ १ ॥ जं पुण जलहिदहेसुं, पमाणजोअणसहस्समाणेसु । उप्पजाइ वरपउमं, तं जाणसु भूविआरं तु ॥ २ ॥ अवसखिलासएसुं, केसु वि निरुवहवेसु जणिआओ । वल्लिलयामाईओ, जहुत्तमाणेण जुत्ताओ ॥ ३ ॥"

व्याख्या—इदं गाथात्रयमपि गतार्थम् ॥ ३०७ ॥

**गब्भचउप्पय छग्गाउआइं भुअगेसु गाउअपुहुत्तं। पक्खिसु धणुयपुहुत्तं, मणुएसु अ गाउआ तिन्नि ॥३०८॥**

व्याख्या—गर्भव्युत्क्रान्तिकानां चतुष्पदादीनां हस्त्यादीनां शरीरप्रमाणं षड् गव्यूतानि । भुजगेषु गोधानकुलादिषु गव्यूतपृथक्त्वं शरीरप्रमाणं । पृथक्त्वं द्विप्रभृतिरानवभ्यः । पक्षिषु शरीरप्रमाणं धनुःपृथक्त्वं । मनुष्येषु त्रीणि गव्यूतानि ॥ ३०८ ॥

साम्प्रतमेषामेव संमूर्छिमजानां शरीरमानमाह—

**धणुअपुहुत्तं पक्खिसु, भुअगे उरगे अ जोयणपुहुत्तं। होइ चउप्पय संमुच्छिमाण तह गाउअपुहुत्तं॥३०९॥**

व्याख्या—पक्षिषु संमूर्च्छिमेषु शरीरप्रमाणमुत्कृष्टं धनुःपृथक्त्वं । भुजगेषु तु गोधानकुलादिपूरगेषु सर्पजातीयेषु संमूर्च्छिमेषु योजनपृथक्त्वं । तथा संमूर्च्छिमचतुष्पदानां शरीरप्रमाणं गव्यूतपृथक्त्वम् ॥ अत्रान्तरे चेयं विशेषप्रतिपादिकाऽन्यकर्तृका गाथा—"संखो पुण बारस जोअणाइं गुम्मी भवे तिकोसं तु । भमरो जोअणमेगं, मच्छुरगा जोअणसहस्सं ॥१॥" शङ्खो द्वादश योजनानि शरीरोच्छ्रयेण वेदितव्यः । गुम्मी कर्णशृगाली त्रीन्द्रियविशेषः शरीरोच्छ्रयमधिकृत्य क्रोशत्रिकं भवति । भ्रमरश्चतुरिन्द्रियविशेषो योजनमेकं । मत्स्या उरगाश्च प्रत्येकं योजनसहस्रम् ॥ १ ॥ ३०९ ॥

सम्प्रति विकलेन्द्रियाणां प्रत्येकवनस्पतिरहितानामेकेन्द्रियाणां संमूर्च्छिममनुजानां च शरीरप्रमाणमाह—

**विगलिंदियाण बारस, उ जोअणा तिन्नि चउर कोसा य।सेसाणोगाहणया, अंगुलभागो असंखतमो३१०**

व्याख्या—विकलेन्द्रियाणां–द्वित्रिचतुरिन्द्रियाणां यथाक्रमं शरीरमानं द्वादश योजनानि त्रयः क्रोशाश्चत्वारः कोशाः। इयमत्र भावना—द्वीन्द्रियाणां–शङ्खादीनामुत्कर्षतो देहमानं द्वादश योजनानि । त्रीन्द्रियाणां मत्कोटादीनां त्रीणि गव्यूतानि । चतुरिन्द्रियाणां भ्रमरादीनां चत्वारि गव्यूतानि । शेषाणां पृथिव्यप्तेजोवायूनां साधारणवनस्पतीनां संमूर्च्छिममनुष्याणां चावगाहना देहमानमङ्गुलभागोऽसङ्ख्येयोऽङ्गुलासङ्ख्येयभागमानमित्यर्थः ॥ ३१० ॥

सम्प्रति वनस्पतिकायिकादीनामेकेन्द्रियाणां परस्परं देहमाने तारतम्यमाह—

**वणणंतसरीराणं, एगं निलसरीरगं पमाणेणं । अनलोदगपुढवीणं, असंखगुणिआ भवे वुड्ढी ॥३११॥**

व्याख्या—वनस्पतिकायिकानामनन्तशरीराणां साधारणानामित्यर्थः प्रमाणेनैकमनिलशरीरकं, किमुक्तं भवति ? याव-

तावत्प्रमाणमेव वायुकायिकैकजीवशरीरमिति । ततो वायुकायिकशरीरादनलोदकपृथिवी-
त्प्रमाणं साधारणवनस्पतिशरीरं तावत्प्रमाणमेव वायुकायिकैकजीवशरीरमिति । ततो वायुकायिकशरीरादनलोदकपृथिवी-
नां–अग्निकायिकाप्कायिकपृथिवीकायिकानां शरीराणां यथाक्रममसङ्ख्यगुणिताऽसङ्ख्येयगुणा भवति वृद्धिः । इयमत्र भाव-
ना—यावत्प्रमाणमेकं वायुकायिकशरीरं ततोऽसङ्ख्यातगुणमेकमग्निकायिकशरीरं, ततोऽप्यसङ्ख्यातगुणमेकमप्कायिकश-
रीरं, ततोऽप्यसङ्ख्यातगुणमेकं पृथिवीकायिकशरीरं । सर्वाणि चामूनि साधारणवनस्पतिकायिकवायुकायिकाग्निकायि-
काप्कायिकपृथिवीकायिकशरीराणि स्वस्वस्थाने प्रत्येकमङ्गुलासङ्ख्येयभागमात्राणि भवन्ति । उक्तं च मूलटीकायां—
"सव्वाइं सगाणे अंगुलासंखिजभागमित्ताइं हवंति त्ति" ॥ ३११ ॥

उक्तं तिर्यङ्मनुष्याणां देहमानं, सम्प्रति तेषामायुःप्रमाणमाह—

बावीस सहस्साइं, सत्त सहस्साइँ तिन्नि होरत्ता। वाए तिन्नि सहस्सा, दस वाससहस्सिया रुक्खा ॥३१२॥
संवच्छराणि बारस, राइंदिय हुंति अउणपन्नासा। छम्मास तिन्नि पलिया, पुढवाईणं ठिइ उक्कोसा ॥३१३॥

व्याख्या—एकेन्द्रियादीनां मनुष्यपर्यन्तानां स्थितिरायुःप्रमाणरूपैपोत्कृष्टा । तद्यथा—पृथिवीकायिकानां द्वाविंशति-
वर्षसहस्राणि । अप्कायिकानां सप्त वर्षसहस्राणि । तेजस्कायिकानां त्रीणि रात्रिंदिवानि । वाते वातकाये त्रीणि वर्षस-
हस्राणि । वृक्षा वनस्पतयो दशवर्षसहस्रिकाः । किमुक्तं भवति ? वनस्पतिकायिकानामुत्कर्षतः स्थितिर्दश वर्षसहस्राणी-
ति तथा द्वीन्द्रियाणामुत्कर्षतः आयुःस्थितिर्द्वादश वर्षाणि, त्रीन्द्रियाणामेकोनपञ्चाशद्रात्रिंदिवानि, चतुरिन्द्रियाणां
षण्मासाः, पञ्चेन्द्रियाणां तिर्यङ्मनुष्याणां त्रीणि पल्योपमानि ॥ ३१२–३१३ ॥

एवं सामान्येन पृथिव्यादीनामुत्कृष्टां स्थितिमभिधाय सम्प्रति पृथिवीकायिकभेदेषु प्रतिभेदमायुषो भेदानाह—

**सण्हा य सुद्ध वालुअ, मणोसिला सक्करा य खरपुढवी। एगं बारस चउदस, सोलस अठार बावीसा ३१४**

व्याख्या—इह पूर्वार्धपदानामुत्तरार्धपदानां च यथाक्रमं योजना। सा चैवं—श्लक्ष्णा–मरुस्थल्यादिगता पृथिवी तस्या निरुपद्रवस्थानस्थिताया एकं वर्षसहस्रमुत्कृष्टायुः। शुद्धा–कुमारमृत्तिका तस्या उपद्रवाभावे द्वादश वर्षसहस्राणि। वालुका—सिकता तस्याश्चतुर्दश वर्षसहस्राणि। मनःशिला–प्रतीता तस्याः षोडश वर्षसहस्राणि। शर्करा–ईषत्कर्करिका तस्या अष्टादश वर्षसहस्राणि। खरपृथिवी–शिलापाषाणरूपा तस्या द्वाविंशतिर्वर्षसहस्राणि॥ ३१४॥

सम्प्रति तिर्यक्पञ्चेन्द्रियाणां गर्भजानामायुष्कविशेषमाह—

**गब्भभुअजलचरोभयउरगेसु अ पुव्वकोडि उक्कोसा। मणुअचउप्पय तिपलिअ, पलिआसंखिज्ज पक्खीसु**

व्याख्या—“गब्भत्ति” पदैकदेशे पदसमुदायोपचाराद्गर्भजा इति द्रष्टव्यं, एतच्च विशेषणमुभयशब्दोपाधिजलचरशब्द-मपहायापरेषु सर्वेष्वपि पदेषु योज्यं। “भुअ त्ति” भुजपरिसर्पाणां गोधानकुलप्रभृतीनां गर्भजानां, तथा जलचराणां मत्स्यादीनामुभयेषां–संमूर्छिमजानां गर्भव्युत्क्रान्तानां च, तथोरगेषु षष्ठीसप्तम्योरर्थं प्रत्यभेदादुरगाणां–सर्पजातीनामुत्कर्षत आयुष्कस्थितिः पूर्वकोटी विज्ञेया। तथा गर्भव्युत्क्रान्तानां मनुजानां चतुष्पदादीनां च त्रीणि पल्योपमान्युत्कृष्ट-मायुः। पक्षिषु पक्षिणां गर्भव्युत्क्रान्तिकानां पल्योपमस्यासङ्ख्येयो भागः॥ ३१५॥

इह गर्भजभुजपरिसर्पादीनामुत्कृष्टमायुः पूर्वकोटिप्रमाणमित्युक्तं, ततः पूर्वस्य परिमाणमाह—

**पुव्वस्स उ परिमाणं, सयरिं खलु हुंति कोडिलक्खाउ । छप्पन्नं च सहस्सा, बोधव्वा वासकोडीणं ॥३१६॥**

व्याख्या—पूर्वस्य परिमाणं वर्षकोटीनां सप्ततिः कोटिलक्षाः षट्पञ्चाशत्सहस्राणि ७०५६०००००००००० । तथाहि—पूर्वाङ्गं चतुरशीतिवर्षलक्षाणि, पूर्वाङ्गं च पूर्वाङ्गेन गुणितं पूर्वं भवति, ततो यथोक्तं पूर्वस्य परिमाणं न विरुध्यते॥३१६॥

सम्प्रति संमूर्छिमपञ्चेन्द्रियस्थलचरादीनामायुःस्थितिं प्रतिपादयति—

**वाससहस्स पणिंदिसु मुच्छिम चुलसी बिसत्तरि तिवन्ना । बायाला उक्कोसा, थल खहउरगे भुयंगे य ३१७**

व्याख्या—इह "मुच्छिम त्ति" विशेषणं सर्वत्रापि संबन्धनीयं, वर्षसहस्राणीति च पदं चतुरशीत्यादिषु प्रत्येकं योज्यते, यथासङ्ख्यं च सङ्ख्यासङ्ख्येयपदयोजना, सा चैवं—संमूर्छिमानां पञ्चेन्द्रियाणां स्थलचराणामुत्कृष्टमायुःप्रमाणं चतुरशीतिवर्षसहस्राणि । खचराणां पञ्चेन्द्रियाणां संमूर्छिमानां बलाकादीनां द्वासप्ततिवर्षसहस्राणि । उरगाणां सर्पजातीनां संमूर्छिमानां त्रिपञ्चाशद्वर्षसहस्राणि । भुजगानां भुजपरिसर्पाणां संमूर्छिमानां द्विचत्वारिंशद्वर्षसहस्राणि ॥ ३१७ ॥

साम्प्रतं संमूर्छिममनुष्याणामवगाहनां स्थितिं चाभिधातुकाम आह—

**अंगुलअसंखभागो, उक्कोसोगाहणा मणुस्साणं । संमुच्छिमाण जाणसु, अंतमुहुत्तं च परमाउं ॥ ३१८ ॥**

व्याख्या—मनुष्याणां संमूर्छिमानां वातपित्तादिसमुद्भवानां, तथा चोक्तं प्रज्ञापनायां—"कहि णं भंते ! सम्मुच्छिममणुस्सा संमुच्छंति ? गोयमा ! अंतो मणुस्सखित्ते पणयालीसाए जोअणसयसहस्सेसु अड्ढाइज्जेसु दीवसमुद्देसु पन्नरससु कम्मभूमीसु

तीसाए अकम्मभूमीसु छप्पणाए अंतरदीवेसु गब्भवक्कंतिय मणुस्साणं चेव उच्चारेसु वा पासवणेसु वा खेलेसु वा जल्लेसु वा सिंघाणेसु वा वंतेसु वा पित्तेसु वा सुक्केसु वा सोणिएसु वा सुक्कपुग्गलपरिसाडेसु वा विगयजीवकलेवरेसु वा थीपुरिससंजोगेसु वा नगरनिद्धमणेसु वा सवेसिं चेव असुइट्ठाणेसु एत्थ णं संमुच्छिममणुस्सा संमुच्छंति"। तेषामुत्कृष्टावगाहनां जानीह्यङ्गुलासङ्ख्येयभागं परमं चोत्कृष्टमायुरन्तर्मुहूर्त्तम् ॥ ३१८ ॥

अथ पूर्वोक्तानां संमूर्छिमानां सर्वेषां जघन्यमायुःप्रमाणमाह—

**सवेसिं अमणाणं, भिन्नमुहुत्तो भवे जहन्नेणं। सोवक्कमाउआणं, सन्नीणं चेव एमेव ॥ ३१९ ॥**

व्याख्या—सर्वेषामेवैकेन्द्रियादीनां पञ्चेन्द्रियपर्यवसानानाममनस्कानां संमूर्छिमजन्मभाजां भिन्नः खण्डो मुहूर्त्तोऽन्तर्मुहूर्त्तमित्यर्थः भवति जघन्यमायुः। तथा सोपक्रमायुषां संज्ञिनां गर्भव्युत्क्रान्तानां पञ्चेन्द्रियाणामेवमेव जघन्यमप्यायुरन्तर्मुहूर्तप्रमाणमित्यर्थः ॥ ३१९ ॥

अत्रैवायुर्विषये प्रसङ्गतः किञ्चिदभिधातुकाम आह—

**आउस्स बंधकालो, अबाहकालो उ अंतसमए य। अपवत्तणणपवत्तणउवक्कमाणुवक्कमा भणिया ॥३२०॥**

व्याख्या—आयुषः सप्त पदार्था यथायोगं प्रवर्तन्ते। तद्यथा—प्रथमो बन्धकालः, स च यावति जीवितव्यत्रिभागे शेषे परभवायुर्बध्यते स वेदितव्यः। "अबाहकालु त्ति" बद्धं सत् परभवायुर्यावन्तं कालं नोदयमायाति तावान् कालविशेषोऽबाधाकालः। अन्तसमयो नामानुभूयमानं भवायुर्यस्मिन् समये निष्ठां लभते। अपवर्तनं दीर्घकालवेद्यतया व्यव-

त्सं०
॥३॥

स्थितस्यायुषः स्वल्पकालवेद्यतापादनं । अनपवर्तनं यद्यावत्स्थितिकं पुरा बद्धं तत्तावत्स्थितिकमनुभूयते न स्थितिह्रासापादनमिति । तथोपक्रम्यते येन कारणकलापेन स उपक्रमोऽपवर्तनकारणकलापः । अनुपक्रमस्तदभावः ॥ ३२० ॥

एत आयुषः सप्त पदार्था येषां जीवानां यथा भवन्ति तथा प्रतिपादयति—

देवा नेरइआ वा, असंखवासाउआ य तिरिमणुआ । छम्मासवसेसाऊ, परभविअं आउ बंधंति ॥३२१॥
एगिंदिअ तह विगला, पणिंदिआ जे य अणपवत्ताऊ । ते जीविअत्तिभागे, सेसे बंधंति परमाउं ॥ ३२२ ॥
सेसा पुणो तिभागे, नवभाए सत्तवीसभाए वा । बंधंति परभवाउं, अंतमुहुत्तंतिमे वाऽवि ॥ ३२३ ॥

व्याख्या—देवा नारका वा, वाशब्दः समुच्चये, असङ्ख्यातवर्षायुषस्तिर्यङ्मनुष्याश्च षण्मासावशेषायुषः सन्तः पारभविकमायुर्बध्नन्ति । तथैकेन्द्रिया विकलेन्द्रियाः—द्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियलक्षणाः पञ्चेन्द्रियाः—तिर्यञ्चो मनुष्या वा येऽनपवर्त्यायुषस्ते नियमतः स्वजीवितत्रिभागे शेषे पारभविकमायुर्बध्नन्ति । शेषाः पुनरपवर्तनीयायुष एकेन्द्रियविकलेन्द्रियपञ्चेन्द्रियतिर्यङ्मनुष्याः स्वजीवितस्य त्रिभागे वा शेषे परभवायुर्बध्नन्ति, यदि वा नवभागे त्रिभागत्रिभाग इत्यर्थः, अथवा सप्तविंशतिभागे त्रिभागत्रिभागत्रिभाग इति भावः । तेन यदुच्यते सिद्धान्ते—"सिय त्तिभागे सिय त्तिभागत्तिभागे सिय त्तिभागत्तिभागत्तिभागे" इति, तेन सहाविसंवादीदमवसेयं । तत्रापि बन्धतश्च्युताः सन्तो नियमतोऽन्तिमे मुहूर्त्ते बध्नन्ति ॥ ३२१–३२२–३२३ ॥

तदेवमुक्तो बन्धकालः, साम्प्रतमबाधाकालमानमाह—

**जे जावइमे भागे, जीवा बंधंति परभवस्साउं। तेसिमबाहाकालो, अणुदयकालु त्ति सो भणिउं ॥३२४॥**

व्याख्या—ये जीवा यावति भागे-षण्मासादिरूपे स्वजीविततृभागादिरूपे वा परभवस्य योग्यमायुर्बध्नन्ति, स तावान् बन्धोदयापान्तराललक्षणो भवति तेषामबाधाकालः। एतमेव पर्यायेण व्याचष्टे-सोऽबाधाकालोऽनुदयकाल इति भणितस्तीर्थकरगणधरैः ॥ ३२४ ॥

तथाऽन्तसमय आयुष निष्ठासमयो यदनन्तरं परभवायुरुदयमागच्छति परभवायुषि चोदयप्राप्ते परभवं प्रति जीवानां गतिर्द्विधा प्रवर्तते, ततस्तामेव विवक्षुरिदमाह—

**दुविहा गई जिआणं, उज्जू वक्का य परभवग्गहणे। इगसामइया उज्जू, वक्का चउपंचसमयंता ॥ ३२५ ॥**

व्याख्या—जीवानां परभवग्रहणे परभवमाक्रामतां गतिर्द्विधा प्रवर्तते, तद्यथा—ऋज्वी वक्रा च। तत्र या ऋज्वी सैकसामयिक्येकसमयनिर्वृत्तोत्पत्तिदेशस्य समश्रेण्या व्यवस्थितत्वेन प्रथमसमय एव प्राप्तेः, अन्यथा गतेर्ऋजुत्वायोगात्। वक्रा तु चतुःसमयान्ता पञ्चसमयान्ता वा द्रष्टव्या। चतुःपञ्चशब्दोपादानस्य च फलमिदं—बाहुल्येनोत्कर्षतश्चतुःसमयपर्यवसाना वक्रगतिः क्वचिच्च कदाचिच्च पञ्चसमयपर्यवसाना। एतदनन्तरमेव भावयिष्यते॥ तत्रर्जुगतौ वक्रगतौ च नयमतभेदेन परभवायुरुदयं विचिन्तयिषुरिदमाह—"उज्जुगइ पढमसमए, परभविअं आउअं तहाहारो। वक्काए बीयसमए, परभ-

१ चउ पंच समया वा इति प्रत्यन्तरे.

विअत्तं उदयमेइ ॥ १ ॥" ऋजुगतौ प्रथमसमय एव पारभविकमायुरुदयमागच्छति, प्रथमसमय एव च परभवसंबन्ध्याहारः। तथाहि—निश्चयनयमतेन परभवप्रथमसमय एव पूर्वशरीरपरिसाटः, यस्मिन्नेव च समये सर्वात्मना पूर्वशरीरपरिसाटस्तस्मिन्नेव समये गतिः, ततो गतेः प्रथमसमय एव परभवायुषः उदयः, ऋजुगत्या च प्रथमसमय एवोत्पत्तिदेशमासादयति, तद्गतांश्च स्वशरीरयोग्यान् पुद्गलानादत्ते, ततः प्रथमसमय एव परभवसंबन्ध्याहारः। वक्रगतावप्युक्तप्रकारेण निश्चयनयमधिकृत्य प्रथमसमय एव परभवायुष उदयः, तमन्तरेण सर्वात्मना पूर्वशरीरत्यागासंभवतो गतेरसंभवात्। परं कैश्चित् परिस्थूलन्यायमाश्रित्य वक्रगतौ द्वितीयसमये परभवायुरुदयमागच्छतीति प्रतिपन्नं, ततस्तदभिधित्सुराह—"वक्काए" इत्यादि, वक्रायां गतौ द्वितीये समये परभवायुरुदयमेति। इयमत्र भावना—किल पूर्वभवपर्यन्तसमय एव वक्रा गतिः प्रतिपत्तुमारब्धा, तत्परिणामाभिमुखत्वात्, ततः सोऽपि समयो वक्रगतिसंबन्धी द्रष्टव्यः, द्वितीये च समये परभवायुरुदयमागच्छति, तत उक्तं द्वितीये समये वक्रायां गतौ परभवायुष उदय इति ॥ १ ॥ इयं च गाथाऽन्यकर्तृकत्यवसेया, न सूत्रकारकृता, मूलटीकायां हरिभद्रसूरिकृतायामव्याख्यानात्, तस्यां च वक्रायां गतौ स्थितो जीवः कदाचिदेकेन वक्रेणोत्पत्तिदेशमासादयति, कदाचिद्द्वाभ्यां, कदाचित्त्रिभिः, कदाचिच्चतुर्भिः। तत्र यदैकेन वक्रेण तदा नियमादाहारकः। तथाहि—प्रथमसमये पूर्वशरीरमोक्षः तस्मिंश्च समय आहारको, द्वितीयसमये तच्छरीरयोग्याः केचित् पुद्गला जीवयोगतो लोमाहारतः संबन्धमाप्नुवन्ति, औदारिकवैक्रियाहारकपुद्गलोपादानं चाहारस्ततः प्रथमसमय आहारको, द्वितीये च समय उत्पत्तिदेशमागत इति तद्भवयोग्यशरीरपुद्गलोपादानं करोति, ततस्तस्मिन्नपि समय आहारक इति।

द्विवक्रायां गतौ त्रयः समयाः, तत्र प्रथमेऽन्तिमे च समये पूर्वोक्तनीत्याऽऽहारक इति मध्यम एकस्मिन् समयेऽनाहारकः। त्रिवक्रायां गतौ चत्वारः समयाः, ते चैवं—त्रसनाड्या बहिरधस्तनभागादुपरितने भागे यद्वोपरितनाद्भागादधस्तने भागे समुत्पद्यमानो जीवो विदिशो दिशि दिशो वा विदिशि यदोत्पद्यते, तदैकेन समयेन त्रसनाडीं प्रविशति, द्वितीयेनोपर्यधो वा गमनं, तृतीयेन बहिर्निस्सरणं, चतुर्थेन विदिश्युत्पत्तिदेशे प्राप्तिः। अत्र प्रथमान्तिमसमययोः प्रागुक्तयुक्तेराहारको मध्यमयोस्तु द्वयोः समययोरनाहारकः। चतुर्वक्रायां गतौ पञ्च समयाः, ते च त्रसनाड्या बहिरेव विदिशो विदिश्युत्पत्तौ लभ्यन्ते, तद्यथा—प्रथमे समये त्रसनाड्या बहिरेव विदिशो दिशि गमनं, द्वितीये त्रसनाड्या मध्ये प्रवेशः, तृतीय उपर्यधो वा गमनं, चतुर्थे बहिर्निःसरणं, पञ्चमे विदिश्युत्पत्तिदेशगमनं, अत्रापि प्रथमान्तिमसमययोराहारकः, शेषेषु तु मध्यमेषु त्रिषु समयेष्वनाहारकः। इहोत्कर्षतोऽपि बाहुल्यतश्चतुःसामयिकी वक्रगतिः प्रवर्तते, पञ्चसामयिकी तु स्वल्पसत्त्वाश्रिता ततो न विवक्ष्यत इति तत्र तत्र सिद्धान्तप्रदेशे वक्रगतावनाहारकचिन्तायामेकं द्वौ वा समयावनाहारक इत्युक्तं। यदि वैकं द्वौ वेत्यत्र वाशब्दात् त्रीन् वा समयाननाहारक इति द्रष्टव्यं, ततो न कश्चिद्दोषः॥२२५॥

एतदेव दर्शयति—

**इगदुगतिगवक्कासु, दुगाइसमएसु परभवाहारो। दुगवक्काइसु समया, इग दो तिन्नि य अणाहारा २२६**

व्याख्या—एकद्वित्रिवक्रादिषु वक्रगतिष्वादिशब्दाच्चतुर्वक्रायां च गतौ द्वितीयादिषु समयेषु परभवाहारः। तद्यथा—एकवक्रायां गतौ द्वितीये समये परभवाहारः, द्विवक्रायां तृतीये समये, त्रिवक्रायां चतुर्थे समये, चतुर्वक्रायां पञ्चमे

समये । तथैकवक्रायां सर्वथाऽऽहारकः । एतच्च प्रागेव भावितं । द्विवक्रादिषु तु वक्रगतिषु यथाक्रममेकं द्वौ त्रीन् समयानऽनाहारकः । तद्यथा–द्विवक्रायां वक्रगतावेकं समयमनाहारकः, त्रिवक्रायां द्वौ समयौ, चतुर्वक्रायां त्रीन् समयानिति ३२६

साम्प्रतमपवर्तनानपवर्तनरूपद्वारद्वयमभिधित्सुराह—

**बहुकालवेअणिज्जं, कम्मं अप्पेण जमिह कालेण । वेइज्जइ जुगवं चिअ, उइण्णसव्वप्पएसग्गं ॥ ३२७ ॥**

**अपवत्तणिज्जमेयं, आउं अहवा असेस कम्मं पि । बंधसमए वि बद्धं, सिढिलं चिय तं जहाजुग्गं ॥३२८॥**

व्याख्या—यदायूरूपं कर्म बहुकालवेदनीयं प्रभूतकालवेद्यमिह जगति तिर्यग्भिर्मनुष्यैश्चापवर्तनाकरणवशतो युगपदुदीर्णसर्वप्रदेशाग्रं सदल्पेनैव कालेन वेद्यते अनुभूय निर्जीर्यते । एतदायुः कर्मापवर्तनीयमुच्यते । न चैवमायुरेवैकं कर्मापवर्तनीयं, किं तु शेषाण्यपि कर्माणि । तथा चाह—'अहवेत्यादि' अथवा शेषकर्मापि समस्तमपि कर्म प्रभूतकालवेद्यमपवर्तनाकरणयोगतो युगपदुदीर्णसर्वप्रदेशाग्रमल्पेन कालेन वेद्यते तदपवर्तनीयमवसेयं । ननु यदि बन्धकाले प्रभूतकालवेद्यं बद्धं सदर्वागपवर्तनाकरणवशतोऽल्पेनैव कालेन वेद्यते तर्हि कृतनाशाकृताभ्यागमप्रसङ्गः, यथाबद्धमवेदनाद्यथावेदनमबन्धात् । तत आह—बन्धसमयेऽपि बन्धकालेऽपि तदपवर्तनीयमायुः शेषं वा कर्म शिथिलमेव यथायोग्यमपवर्तनीयतायोग्यदेशकालानतिक्रमेण बद्धं । इयमत्र भावना—बन्धकालेऽपि तथारूपाध्यवसाययोगतस्तत्तथारूपमेव बद्धं येन तं तं देशं कालं पुरुषं वाऽपेक्ष्यापवर्तयति, ततो न कश्चिद्दोषः ॥ ३२७–३२८ ॥

**जं पुण गाढनिकायण बंधेणं पुव्वमेव किल बद्धं । तं होइ अणपवत्तण, जोग्गं कमवेअणिज्जफलं ॥३२९॥**

व्याख्या—यत् पुनरायुः शेषं वा कर्म गाढनिकाचनबन्धेन गाढमत्यर्थं यन्निकाचनमवश्यवेद्यतयाऽवस्थापनं तच्च तद्बन्धश्च तेन गाढनिकाचनबन्धेन पूर्वमेव किल बद्धं भवति, तन्नत्यनपवर्तनयोग्यं क्रमवेदनीयफलं क्रमेण परिपाट्या वेदनीयं फलं यस्य तत्तथा। किमुक्तं भवति? यत्तथारूपपरिणामयोगतोऽवश्यवेद्यतया निकाचितं तदनपवर्तनीयस्वरूपं, अनपवर्तनीयस्वरूपत्वाच्च क्रमवेदनीयफलमिति। तत्रायुश्चिन्तायां देवा नारका उत्तमपुरुषाश्चरमशरीरा असङ्ख्यातवर्षायुषश्चानपवर्तनीयायुषः, शेषा अपवर्तनीयायुषोऽनपवर्तनीयायुषश्च ॥ ३२९ ॥

साम्प्रतमुपक्रमानुपक्रमरूपद्वारद्वयं व्याचिख्यासुरिदमाह—

जेणाउमुवक्कमिज्जइ अप्पसमुत्थेण इअरगेणावि। अज्झवसाणाईउं, उवक्कमो सो इहं नेउं ॥ ३३० ॥

व्याख्या—येनात्मसमुत्थेनाध्यवसायविशेषादिनेतरेणापि बाह्येन विषाग्निशस्त्रादिना आयुरुपक्रम्यते दीर्घकालवेद्यं सदल्पकालवेद्यतया व्यवस्थाप्यते, सोऽपवर्तनहेतुरध्यवसानादिरिह प्रक्रम उपक्रमो भवति ज्ञेयः ॥ ३३० ॥

स च सप्तविधस्तथा चाह—

अज्झवसाणनिमित्ते, आहारे वेयणा पराघाए। फासे आणापाणू, सत्तविहं भिज्जए आउं ॥ ३३१ ॥

व्याख्या—आयुर्भिद्यते भेदमुपयाति शीघ्रमेव विध्वंसमुपगच्छतीति भावः। अध्यवसाने-अध्यवसितिरध्यवसानं तस्मिन् सति, तच्चाध्यवसानं त्रिधा, तद्यथा—रागरूपं, स्नेहरूपं, भयरूपं। तत्र रागादायुर्भेदो यथा प्रपापालिकायास्तरुणं कञ्चन पुरुषमनुरागतः पश्यन्त्याः। स्नेहाद्यथा कस्याश्चित्पुत्रवियोगतः। भयाद्यथा वासुदेवदर्शनतः सोमिलस्य गज-

सुकुमारश्वशुरस्य । निमित्ते—दण्डकशाशस्त्ररज्ज्वादिके । आहारे—प्रचुरे भक्षिते सति । तथा वेदनायां शूलादिरूपायां । तथा पराघातो—गर्तापातादिसमुत्थस्तस्मिन् सति । तथा स्पर्शे—भुजगादिसंबन्धिनि । तथा प्राणापाने-उच्छ्वासनिःश्वासरूपे निरुद्धे सति । सर्वसङ्ख्यामाह—सप्तविधं सप्तप्रकारेणायुर्भिद्यते । एते चोपक्रमा अपवर्तनयोग्यमायुरपवर्तयन्ति, नानपवर्तनयोग्यं । एते च चरमशरीरिणामपि केषाञ्चित्संभवन्ति, पीडां च जनयन्ति, न पुनरायुरपवर्तयन्ति, केवलमुपक्रमहेतुसम्पर्कतस्ते सोपक्रमायुष उच्यन्ते, शेषास्तूपक्रमहेतुविकला निरुपक्रमायुष इति कृतं प्रसङ्गेन ॥ ३३१ ॥

सम्प्रति प्रस्तुतमभिधीयते । तत्र प्रकृतमुपसंहरन्नुत्तरग्रन्थं च संबधयन्निदमाह—

**पुढवाईण भवठिई, एसा मे वन्निआ समासेण । एएसिं कायठिई, उड्ढं तु अओ परं वुच्छं ॥ ३३२ ॥**

व्याख्या—एषाऽनन्तरोदिता भवस्थितिः पृथिव्यादीनां समासेन संक्षेपेण वर्णिता । साम्प्रतमतः परमूर्ध्वमेतेषामेव पृथिवीकायादीनां कायस्थितिं—तमेव पृथिवीकायादिकं कायमपरित्यजतामवस्थानरूपां वक्ष्ये ॥ ३३२ ॥

प्रतिज्ञातमेव निर्वाहयति—

**असंखोसप्पिणिसप्पिणीउ एगिंदियाण य चउण्हं । ता चेव ऊ अणंता, वणस्सईए उ बोधव्वा ॥ ३३३ ॥**

व्याख्या—एकेन्द्रियाणां चतुर्णां पृथिव्यप्तेजोवायुरूपाणां प्रत्येकमुत्कृष्टा कायस्थितिरसङ्ख्येया उत्सर्पिण्यवसर्पिण्यः, एतच्च कालतः परिमाणं । एतदेव कालपरिमाणं यदा क्षेत्रतश्चिन्त्यते तदैवमवसेयं—असङ्ख्येयेषु लोकाकाशेषु प्रतिसमयमेकैकप्रदेशापहारे यावान् कालो लगति, तावत्कालपरिमाणपरिच्छिन्ना असङ्ख्येया उत्सर्पिण्यवसर्पिण्यः । उक्तं च प्रज्ञा-

पनायां—"पुढविकाइए णं भंते! पुढविकाइए त्ति कालओ किच्चिरं होइ? गोयमा! जहन्नेणं अंतोमुहुत्तं उक्कोसेणं असंखिज्जं कालं असंखिज्जाओसप्पिणीउसप्पिणीओ कालओ, खित्तओ असंखिज्जा लोगा, एवं आऊ तेउ वाउकाइयावि"। ता एवोत्सर्पिण्यवसर्पिण्यो वनस्पतेर्वनस्पतिकायिकस्यानन्तोत्कृष्टा कायस्थितिर्बोद्धव्या। इदमपि कालतः परिमाणं। क्षेत्रतः पूर्वोक्तप्रकारेणानन्ता लोका असङ्ख्येयाः पुद्गलपरावर्ताः, ते चावलिकाया असङ्ख्येयतमे भागे यावन्तः समयास्तावत्प्रमाणा वेदितव्याः। तथा चोक्तं प्रज्ञापनायां—"वणप्फइकाइए णं भंते! वणप्फइकाइए त्ति कालओ किच्चिरं होइ? गोयमा! जहन्नेणं अंतोमुहुत्तं उक्कोसेणं अणंतं कालं अणंताओ उस्सप्पिणिओसप्पिणीओ कालओ, खित्तओ अणंता लोगा असंखिज्जा पुग्गलपरियट्टा, तेणं पुग्गलपरियट्टा आवलियाए असङ्खिज्जइ भागो" ॥ ३३३ ॥

तथा—

**वाससहस्सा संखा, विगलाण ठिई उ होइ बोद्धव्वा॥सत्त ट्ठ भवा उ भवे, पणिंदितिरिमणुअ उक्कोसा३३४**

व्याख्या—सङ्ख्येयानि वर्षसहस्राणि विकलानां-विकलेन्द्रियाणां द्वित्रिचतुरिन्द्रियाणां प्रत्येकमुत्कृष्टा कायस्थितिः। तुर्वाक्यभेदे, उक्तं च—"तुः स्याद्भेदेऽवधारणे" अयं च वाक्यभेदः पूर्वमुत्सर्पिण्यवसर्पिणीभिः कायस्थितिपरिमाणमुक्तं, इदं तु वर्षसहस्रैरिति। पञ्चेन्द्रियतिरश्चां मनुष्याणां चोत्कृष्टा कायस्थितिः सप्ताष्टभवाः। तत्र यदाऽष्टौ भवाः प्राप्यन्ते तदा सप्त भवाः पाश्चात्याः सङ्ख्यातवर्षायुषो वेदितव्याः, अष्टमस्तु नियमादसङ्ख्येयवर्षायुः, अत एव सप्ताष्टभवा इत्युक्तं, अन्यथाऽष्ट भवा इत्युच्येत। जघन्या तु सर्वत्रापि कायस्थितिरन्तर्मुहूर्त्तम् ॥ ३३४ ॥

तदेवमुक्तं नरतिरश्चां देहमानमायुःप्रमाणं च । साम्प्रतमेतेषामेवोपपातोद्वर्तनाविरहकालस्योत्पद्यमानोद्वर्तमानसङ्ख्ययोर्गत्यागत्योश्च प्रतिपादनावसरः, तत्र तिरश्चोऽधिकृत्य तत्राप्येकेन्द्रियानुपपातसङ्ख्यां गतिं चाह—

**अणुसमयमसंखिज्जा संखिज्जाऊ अ तिरिमणुआ य । एगिंदिएसु गच्छे, आरा ईसाणदेवा य ॥ ३३५ ॥**

व्याख्या—उपपातविरहकाल उद्वर्तनाविरहकालश्च नैकेन्द्रियाणामस्ति, प्रतिसमयं तेषामुपपातोद्वर्तनयोः सद्भावात्, ततो न तेषु द्वारद्वयावतारः, केवलं कियन्तः प्रतिसमयमुत्पद्यन्त इति चिन्त्यते, तत्रानुसमयं प्रतिसमयमेकेन्द्रिया नैकद्वित्रादिसङ्ख्या उत्पद्यन्ते, किं त्वसङ्ख्येयाः । किमुक्तं भवति ? प्रतिसमयमेकेन्द्रियत्वेनोत्पद्यमाना जीवा असङ्ख्येया लभ्यन्ते, एतच्च परस्थानोपपातापेक्षया द्रष्टव्यं, स्वस्थानोपपातापेक्षया त्वनन्ता अपि द्रष्टव्याः । एकेन्द्रियाश्च पञ्चविधाः; तद्यथा—पृथिवीकायिका अप्कायिकास्तेजस्कायिका वायुकायिका वनस्पतिकायिकाश्च । तत्राद्याः पृथिवीकायिकादयश्चत्वारः स्वस्थानतः परस्थानतो वेत्यनपेक्ष्य सामान्यत उत्पत्तौ चिन्त्यमानाः प्रत्येकमनुसमयमसङ्ख्येया उत्पद्यमाना लभ्यन्ते । तथा चोक्तं प्रज्ञापनायां—"पुढविकाइया णं भंते ! एगसमएणं केवइया उववज्जंति ? गोयमा ! अणुसमयं अविरहिया असंखिज्जा । एवं जाव वाउक्काइया इति" । वनस्पतिकायिकाः स्वस्थानत उत्पद्यमानाः प्रतिससमयमनन्ताः, परस्थानत उत्पद्यमानाः प्रतिसमयमसङ्ख्येयाः सकलकालं लभ्यन्ते । उक्तं च—"वणप्फइकाइया णं भंते ! एगसमएणं केवइया उववज्जंति ? गोयमा ! सट्ठाणोववायं पडुच्च अणुसमयमविरहिया अणंता उववज्जंति, परट्ठाणोववायं पडुच्च अणुसमयमविरहिया असंखिज्जा" इति ॥ स्वस्थानोपपातमेवाधिकृत्येयं प्रक्षेपगाथा—"एगो असंखभागो, वट्टइ उव्वट्टणोववायम्मि ।

एगनिगोए निच्चं, एवं सेसेसुवि स एव ॥ १ ॥" एकस्मिन्निगोदे नित्यं सर्वकालमेकोऽसङ्ख्येयभाग उद्वर्तनायां वर्तते' एकश्चासङ्ख्येयभाग उपपाते, एवं शेषेष्वपि सूक्ष्मबादरभेदभिन्नेषु प्रत्येकं स एवैकोऽसङ्ख्येयो भाग उद्वर्तनायां, स एवैकोऽसङ्ख्येयो भाग उपपाते द्रष्टव्यः । इयमत्र भावना—एकैकस्य निगोदस्य सूक्ष्मस्य बादरस्य वाऽनन्तजीवात्मकस्यासङ्ख्येयभागीकृतस्यैकोऽसङ्ख्येयभागः सततमुद्वर्तते, एकश्चासङ्ख्येयभागस्तस्मिन् स्थान उत्पद्यते, सोऽप्यसङ्ख्येयो भागोऽनन्तजीवात्मकः, तत एकैकस्मिन्नपि निगोदे प्रतिसमयमुत्पद्यमाना अनन्ता लभ्यन्ते, किं पुनः सकलनिगोदापेक्षयेति ॥ १ ॥ अथ किमिदं निगोद इति ? उच्यते—अनन्तानां जीवानां साधारणमेकं शरीरं, तच्च स्तिबुकाकारं, इत्थंभूतानां चासङ्ख्येयानां निगोदानां समुदायो गोलकाकारो गोलकः । ते च गोलका असङ्ख्येयाः । तथा चैतदर्थसङ्ग्राहिका द्वितीयेयं प्रक्षेपगाथा—"गोला य असंखिज्जा, अस्संखनिगोयगोलओ भणिओ । इक्किक्कम्मि निगोए, अणंतजीवा मुणेयव्वा ॥ १ ॥" गोला लोके सङ्ख्येयाः, गोलकश्च भणितस्तीर्थकरगणधरैरसङ्ख्येयनिगोदोऽसङ्ख्येयनिगोदात्मकः, एकैकस्मिंश्च निगोदे जीवा अनन्ता ज्ञातव्याः । मुणेयव्वा इति जानातेः ज्ञो "जाणमुणौ" इति जानातेर्मुणादेशः ॥ १ ॥ एते च निगोदे वर्तमाना जीवा द्विविधाः, तद्यथा—सांव्यवहारिका असांव्यवहारिकाश्च । तत्र ये सांव्यवहारिकास्ते निगोदेभ्य उद्वृत्य शेषजीवराशिमध्ये समुत्पद्यन्ते । तेभ्योऽप्युद्वृत्ताः केचिद्भूयोऽपि निगोदेषु मध्ये समागच्छन्ति, तत्राप्युत्कर्षत आवलिकाया असङ्ख्येयभागगतसमयप्रमाणान् पुद्गलपरावर्तान् स्थित्वा भूयोऽपि शेषजीवेषु मध्ये समागच्छन्ति । एवं भूयो भूयः सांव्यवहारिकजीवा गत्यागती कुर्वन्ति । ये त्वसांव्यवहारिकास्ते सर्वदैव निगोदेष्वेवावतिष्ठन्ते, न पुनस्ते कदाचनापि त्रसभावं

लब्धवन्तः ॥ तथा चैतदर्थसङ्ग्राहिका प्रक्षेपगाथा—"अत्थि अणंता जीवा, जेहि न पत्तो तसत्तपरिणामो । उप्पज्जंति चयंति य, पुणो वि तत्थेव तत्थेव ॥ १ ॥" अस्तीति निपातोऽत्र बहुवचनार्थः सन्ति अनन्ता जीवा यैर्न कदाचनापि लब्धस्त्रसत्वपरिणामः, केवलं तत्रैव निगोदेषु मध्ये पुनः पुनरुत्पद्यन्ते च्यवन्ते च ॥ १ ॥ आह—प्रत्येकशरीरेष्वपि वनस्पतिष्वनन्तकायिकानां संभवोऽस्ति किं वा नेति, अस्तीति ब्रूमः, तथा च प्रक्षेपगाथा—"सव्वो वि किसलओ खलु, उग्गममाणो अणंतओ भणिओ । सो चेव विवड्ढंतो, होइ परित्तो अणंतो वा ॥ १ ॥" इह सर्वशब्दोऽपरिशेषवाची, सर्वो वनस्पतिकायः प्रत्येकशरीरः साधारणो वा किसलयावस्थामुपगतः सन्ननन्तकायस्तीर्थकरगणधरैर्भणितः । स एव किसलयरूपोऽनन्तकायिकः प्रवृद्धिं गच्छन्ननन्तो वा परीत्तो वा । कथं ? उच्यते—यदा साधारणं शरीरं निर्वर्तितं भवति, तदा साधारण एव । अथ प्रत्येकशरीरं तदा प्रत्येको भवतीति । कियतः कालादूर्ध्वं प्रत्येको भवतीति चेदुच्यते—अन्तर्मुहूर्त्तात् । तथाहि—निगोदानामुत्कर्षतोऽप्यन्तर्मुहूर्त्तकालं यावत् स्थितिरुक्ता, ततोऽन्तर्मुहूर्त्तात् परतो विवर्धमानः प्रत्येको भवतीति वेदितव्यमिति कृतं प्रसङ्गेन ॥ १ ॥ तदेवमुक्तमुपपातसङ्ख्याद्वारं, अधुना के जीवा एकेन्द्रियेषु गच्छन्तीत्येतन्निरूपणार्थमाह—"संखिज्जाऊ" इत्यादि, सङ्ख्यातवर्षायुषस्तिर्यञ्च एकद्वित्रिचतुःपञ्चेन्द्रिया मनुष्या अपि सङ्ख्यातवर्षायुष एकेन्द्रियनामगोत्रायुःकर्माण्युपचित्यैकेन्द्रियेषु मध्ये समागच्छन्ति । अनेनासङ्ख्यातवर्षायुषां तिर्यङ्मनुष्याणां नारकाणां च व्युदास आवेदितः । "आरा ईसाणदेवा य त्ति" आराच्छब्दो मर्यादावाची, आरादीशानादीशानदेवलोकमभिव्याप्य भवनपत्यादय एकेन्द्रियेषु पृथिव्यम्बुवनस्पतिषु मध्ये समुत्पद्यन्ते, न तेजोवायुषु, तथाभवस्वाभाव्यात् ॥ ३३५ ॥

अथ कदा जीवानामेकेन्द्रियत्वप्राप्तिरत आह—

**जया मोहोदओ तिव्वो, अन्नाणं सुमहब्भयं। पेलवं वेयणीयं च, तया एगिंदिओ भवे ॥ ३३६ ॥**

व्याख्या—यदा यस्मिन् काले मोहोदयो मैथुनासेवनाभिलापरूपस्तीव्रो गाढस्वरूपो भवति, अज्ञानं चानाभोगरूपं, सुमहाभयमतीवभयानकं, को नामाज्ञानान्न बिभेति? यद्वशाज्जीवः सचेतनोऽप्यचेतन इवोपजायते, तथा पेलवमसारं वेदनीयमसातरूपमुदयप्राप्तं भवति, तदैकेन्द्रियो भवेदेकेन्द्रियतयोत्पद्येत ॥ ३३६ ॥

साम्प्रतमेकेन्द्रियाणामागतिद्वारावसरः, यथैकेन्द्रियाः स्वस्थानादुद्धृत्ताः सन्तः क्वोत्पद्यन्त इति तदुत्तरत्र प्रसङ्गेन भणिष्यते। सम्प्रति विकलेन्द्रियाणामुपपातविरहकालमुत्कृष्टेतरभेदभिन्नमाह—

**भिन्नमुहुत्तो विगलिंदिआण समुच्छिमाण य तहेव। बारस मुहुत्त गब्भे, उक्कोस जहन्नओ समओ ॥ ३३७ ॥**

व्याख्या—विकलेन्द्रियाणां-द्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियाणां तथैव संमूर्छिमानां च पञ्चेन्द्रियाणां भिन्नः-खण्डो मुहूर्त्तोऽन्तर्मुहूर्त्तमित्यर्थः, उत्कृष्ट उपपातविरहकालः। गर्भान् गर्भव्युत्क्रान्तान् पञ्चेन्द्रियतिरश्चोऽधिकृत्योत्कृष्ट उपपातविरहकालो द्वादश मुहूर्त्ताः। जघन्यः पुनः सर्वत्रापि विकलेन्द्रियादिषूपपातविरहकाल एकः समयः ॥ ३३७ ॥

सम्प्रति विकलेन्द्रियाणां संमूर्छिमगर्भजतिरश्चां चोद्वर्तनाविरहकाल एतेषामेव चोपपातोद्वर्तनयोः सङ्ख्यां तथा सामान्येन नारकतिर्यङ्नरामराणां गतिद्वारं च प्रतिपादयति—

**उव्वट्टणा वि एवं, संखा समएण सुरवर तुल्ला । नरतिरि य संख सव्वेसु जंति सुरनारया गब्भे ॥ ३३८ ॥**

व्याख्या—विकलेन्द्रियाणां संमूर्छिमजानां गर्भव्युत्क्रान्तानां च पञ्चेन्द्रियतिरश्चामुपपातविरहकालसमतयोद्वर्तनाप्युद्वर्तनाविरहकालोऽपि द्रष्टव्यः। स चैवं—“भिन्नमुहुत्तो विगलिंदियाण समुच्छिमाण य तहेव। बारस मुहुत्त गब्भे, उक्कोस जहन्न समउ ॥ १ ॥” इयं गाथा पूर्ववद्व्याख्येया, नवरमुद्वर्तनाभिलापेन, एतेनोद्वर्तनाविरहद्वारमाख्यातं । तथैतेषामेव द्वीन्द्रियादीनामेकेन समयेनैकस्मिन् समये उपपात उद्वर्तनायां च सङ्ख्या सुरवरैस्तुल्या वक्तव्या, सा चैवं—“एगो व दो व तिन्नि व, संखमसंखा व एगसमएणं । उववज्जंतेवइया, उवट्टंता वि एमेव ॥ १ ॥” एतेनोपपातोद्वर्तनयोः सङ्ख्योक्ता । तथा नरास्तिर्यञ्चश्च सङ्ख्यातवर्षायुषः सर्वेष्वपि विकलेन्द्रियादिषु गच्छन्ति । “सुरनारया गब्भे” इति सुरा नारकाश्च गर्भे, एकदेशे समुदायोपचाराद् गर्भजेषु तिर्यङ्मनुष्येषु गच्छन्ति । आह—पूर्वमुक्तमीशानादारतः सुरा एकेन्द्रियेषु गच्छन्ति, साम्प्रतं गर्भजेष्वायान्तीति कथं न विरोधः? उच्यते—उक्तव्यतिरेकेणाभिधानान्न दोषः । एतेन किमुक्तं भवति? एकेन्द्रियेष्वागच्छन्ति गर्भजेष्वपीति ॥ ३३८ ॥

साम्प्रतं प्रक्रान्तानामेव गतिद्वारावसरे सामान्येनागतिद्वारमाह—

**उवट्टा तिरियाउ, चउसुं पि गईसु जंति पंचिंदी । थावरविगला दोसुं, नियमा पुण संखजीवीसु ॥३३९॥**

व्याख्या—तिर्यञ्चः पञ्चेन्द्रियाः सङ्ख्यातवर्षायुषः स्वस्वस्थानादुद्वृत्ताः सन्तश्चतसृष्वपि गतिषु नारकतिर्यङ्नरामरलक्षणासु

१ सुरवरुतुल्ला, इति प्रत्यन्तरे.

यान्ति । स्थावरा एकेन्द्रिया विकलेन्द्रिया ( श्च ) द्वीन्द्रियादयो द्वयोर्मनुष्यतिर्यग्गत्योर्गच्छन्ति । केवलं नियमान्नियमेन सङ्ख्यजीविषु सङ्ख्यातवर्षायुष्केषु मध्ये, नासङ्ख्यातवर्षायुष्केषु ॥ ३३९ ॥

साम्प्रतं गर्भजसंमूर्छिमजमनुष्याणामुपपातविरहकालमुत्कृष्टेतरभेदभिन्नमाह—

**बारस मुहुत्त गब्भे, मुहुत्त संमुच्छिमेसु चउवीसं। उक्कोस विरहकालो, दोसु वि य जहन्नउ समउ ॥३४०॥**

व्याख्या—गर्भव्युत्क्रान्तिकेषु मनुष्येषूत्कर्षत उपपातविरहकालो द्वादश मुहूर्त्ताः, संमूर्छिमेषु चतुर्विंशतिः । जघन्यतः पुनर्द्वयेष्वपि संमूर्छिमजगर्भव्युत्क्रान्तेषूपपातविरहकालः एकः समयः ॥ ३४० ॥

सम्प्रति मनुष्याणामेवोद्वर्तनाद्वारं सङ्ख्याद्वारं गतिद्वारं चाह—

**एमेव य उव्वट्टण, संखा समएण सुरवर तुल्ला । मणुएसुं उववज्जा, ऽसंखाउय मुत्तु सेसाउ ॥ ३४१ ॥**

व्याख्या—गर्भजमनुष्याणां संमूर्छिममनुष्याणामुद्वर्तनापि चोद्वर्तनाविरहकालोऽप्येवमेवोपपातविरहकालवदेव वेदितव्यः । तद्यथा—गर्भजमनुष्याणामुद्वर्तनाविरहकाल उत्कर्षतो द्वादश मुहूर्ताः, संमूर्छिममनुष्याणां चतुर्विंशतिः । जघन्यत उभयत्रापि समयः । एतेनोद्वर्तनाद्वारमुक्तं । "संखा सुरवरतुल्ल त्ति" एकस्मिन् समय उत्पद्यमानानामुद्वर्तमानानां च सङ्ख्या सुरवरैस्तुल्या । सा चैवं—"इक्को व दो व तिन्नि व, संखमसंखा व एगसमएणं । उववज्जंतेवइया, उव्वट्टंता वि एमेव ॥ १ ॥" नवरमसङ्ख्यातत्वं सामान्यतो गर्भजसंमूर्छिमसङ्ग्रहापेक्षया द्रष्टव्यं । एतेन सङ्ख्याद्वारमभिहितं । गति-

---

१ सुरवरुतुल्ला, इत्यपि ।

द्वारमाह—"मणुएसु" इत्यादि, मनुष्येषु मध्य उत्पद्यन्ते "असंखाउय मुत्तु त्ति" असङ्ख्यातवर्षायुषो मनुष्यॉस्तिरश्चश्च मुक्त्वा शेषाः सङ्ख्यातवर्षायुषो मनुष्यतिर्यञ्चो देवा नारकाश्चोत्पद्यन्ते ॥ ३४१ ॥

सम्प्रति मनुष्यागतिद्वारावसरेऽपि तावत् पृथिवीकायिकादीनां लेश्याः प्रतिपादयन्नाह—

**पुढवी आउ वणस्सइ, बायर परिएसु लेस चत्तारि। गब्भेतिरियनरेसुं, छल्लेसा तिन्नि सेसाणं ॥ ३४२ ॥**

व्याख्या—बादरशब्दः प्रत्येकमभिसंबध्यते, पर्याप्त इति विशेषणं च सामर्थ्याद् द्रष्टव्यं, अन्यथा तेजोलेश्याया अयोगात् । बादरपर्याप्तेषु पृथिवीकायिकेषु बादरपर्याप्तेष्वप्कायिकेषु प्रत्येकविशेषणविशिष्टबादरपर्याप्तवनस्पतिकायिकेषु चाद्याश्चतस्रः कृष्णनीलकापोततेजोरूपा लेश्या भवन्ति । तेजोलेश्या कथमवाप्यत इति चेदुच्यते—एषु हि मध्ये भवनपतिव्यन्तरज्योतिष्कसौधर्मेशानदेवा उत्पद्यन्ते, ते च तेजोलेश्यावन्तः, यल्लेश्याश्च म्रियन्तेऽग्रेऽपि तल्लेश्या एवोत्पद्यन्ते, यत एवमागमः—"नागामिभवाद्यसमये जन्तूनामन्यो लेश्यापरिणामो भवति, नापि पाश्चात्यभवचरमसमये, किंतु तिर्यङ्मनुष्याणामागामिभवसंबन्धिलेश्याया अन्तर्मुहूर्त्तेगते सति देवानारकाणां स्वभवसंबन्धिलेश्याया अन्तर्मुहूर्त्ते सति शेषेऽन्नान्तरे परलोकगमनं । तथा चोक्तं—"लेसाहिं सव्वाहिं, पढमे समयम्मि परिणयाहिं तु । न हु कस्स वि उववाउ परे भवे होइ जीवस्स ॥ १ ॥ लेसाहिं सव्वाहिं चरमे समयम्मि परिणयाहिं तु । न हु कस्स वि उववाउ, परे भवे होइ जीवस्स ॥ २ ॥ अंतमुहुत्तम्मि गए, अंतमुहुत्तम्मि सेसए चेव । लेसाहिं परिणयाहिं, जीवा वच्चंति परलोगं ॥ ३ ॥"
ततस्तेषामुत्पद्यमानानां कियत्कालं तेजोलेश्याऽवाप्यत इत्याह—"गब्भे" इत्यादि, गर्भजेषु तिर्यङ्मनुष्येषु षडपि लेश्या

न्नवन्ति, तेषामनवस्थितलेश्याकत्वात् । तथाहि—शुक्ललेश्यावर्जाः शेषाः पञ्चापि लेश्या गर्भजतिर्यङ्मनुष्याणां जघन्यत उत्कर्षतश्चान्तर्मुहूर्त्तावस्थानाः, शुक्ललेश्या तु जघन्यतोऽन्तर्मुहूर्त्तावस्थाना, उत्कर्षतः किञ्चिन्न्यूनैर्नवभिर्वर्षैरूनां पूर्वकोटिं यावत् । इत्थंप्रमाणावस्थाना च केवलिनः पूर्वकोट्यायुषः किञ्चित्समधिकवर्षाष्टकादूर्ध्वमुत्पादितकेवलज्ञानस्यावसेया । शेषाणामुत्कर्षतोऽप्यन्तर्मुहूर्त्तावस्थानैव । उक्तं च—"अंतोमुहुत्तमद्धा, लेसाण ठिई जहिं जहिं जाउ । तिरियाण नराणं वा, वज्जित्ता सुक्कलेसं तु ॥ १ ॥ अंतमुहुत्त जहन्ना, उक्कोसा होइ पुव्वकोडीउ । नवहिं वरिसेहिं ऊणा, नायव्वा चरमलेसाए ॥ २ ॥" अत्र "जहिं जहिं जाउ त्ति" या लेश्या यत्र कालविशेषे यत्र तिरश्चि मनुष्ये वा गर्भजे प्रवर्तन्ते, तासां लेश्यानां स्थितिरन्तर्मुहूर्त्तमद्धां यावत्, शेषं सुगमं । शेषाणां तेजस्कायिकवायुकायिकसूक्ष्मापर्याप्तपृथिव्यादिसाधारणवनस्पतिविकलेन्द्रियाणां संमूर्छिमपञ्चेन्द्रियतिर्यङ्मनुष्याणां च तिस्र आद्याः कृष्णनीलकापोतरूपा लेश्याः ॥ ३४२ ॥

सम्प्रति "थावरविगला दोसुं" इत्यादिनाऽतिप्रसङ्गे प्राप्ते तदपवादमाह—

**सत्तममहिनेरइया, तेऊ वाऊ अणंतरुवट्टा । न वि पावे माणुस्सं, तहा असंखाउआ सव्वे ॥ ३४३ ॥**

व्याख्या—सप्तमपृथिवीनैरयिकास्तेजस्कायिका वायुकायिका स्तथाऽसङ्ख्यातवर्षायुषश्च सर्वे तिर्यञ्चो मनुष्या अनन्तरमुद्वृत्ताः सन्तो नैव प्राप्नुवन्ति मानुष्यं मानुषत्वम् ॥ ३४३ ॥

सम्प्रति मनुष्यागतिद्वारप्रतिपादनार्थमाह—

**मुत्तूण मणुयदेहं, पंचसुवि गईसु जंति अविरुद्धा । परिणामविसेसेणं, संखाउय पढमसंघयणा ॥ ३४४ ॥**

व्याख्या—मनुष्याः सङ्ख्यायुषः सङ्ख्येयानि वर्षाण्यायुर्येषां ते सङ्ख्यायुषः। अनेनासङ्ख्यातवर्षायुषां मिथुनकनराणां व्यवच्छेदमाह। प्रथमं वज्रर्षभनाराचं संहननं येषां ते वज्रर्षभनाराचसंहननाः, अनेन शेषसंहननव्यवच्छेदमाह। मनुष्यदेहं मनुष्यभवं मुक्त्वा पञ्चस्वपि गतिषु नारकतिर्यङ्नरामरमोक्षलक्षणास्वविरुद्धाः सन्तो यान्ति गच्छन्ति। कथमविरुद्धा इत्याह—परिणामविशेषेण मनोव्यापाररूपेण, तथाहि—यदा हिंसापरिणामः संक्लिष्टो भवति, तदा तेन परिणामविशेषेण नारकभवयोग्यं कर्मोपादाय नरकभवेनाविरुद्धां नरकगतिमासादयन्ति। यदा तु मायादिपरिणामपरव्यसनैकजिह्वा भवन्ति, तदा तत्परिणामविशेषेण तिर्यग्भवयोग्यं कर्मोपादाय तिर्यक्षु गच्छन्ति। यदा तु मार्दवार्जवादिपरिणाम उपजायते, तदा तेन परिणामविशेषेण मनुष्यभवयोग्यं कर्मोपादाय मनुष्येष्वागच्छन्ति। यदा तु हिंसादिविरतिपरिणामो भवति, तदा तत्परिणामविशेषेणामरभवयोग्यं कर्मोपादायामरेष्वागच्छन्ति। यदा तु प्रशमसंवेगनिर्वेदानुकम्पास्तिक्याभिव्यक्तिलक्षणः सम्यक्त्वपरिणामस्तथा सम्यग्ज्ञानपरिणामः प्राणातिपातमृषावादादत्तादानमैथुनपरिग्रहनिवृत्तिरूपश्च चारित्रपरिणामस्तदा तन्मिश्रेण तेन परिणामविशेषेणानन्तभवजनितानेकशारीरमानसज्वरकुष्ठभगन्दरादीष्टवियोगानिष्टसंप्रयोगादिदुःखबीजभूतं प्रायोऽसातवेदनीयं ज्ञानावरणीयादि च घातिकर्मचतुष्टयमपाकृत्य समवाप्ताखिललोकालोकावभासिकेवलज्ञानाः पुनरनियतेनान्तर्मुहूर्त्तादिना देशोनपूर्वकोट्यवसानेन कालेनाशेषभवोपग्राहिकर्ममलकलङ्करहिता निरतिशयसुखभाजः खल्वेकेन समयेन सिद्धिगतिमासादयन्ति। अत्र कश्चिदाह—किमन्यद्विशिष्टं सिद्धिक्षेत्रमस्ति? यत्र मुक्तात्मानो गच्छन्ति गत्वा च व्यवतिष्ठन्ते, न पुनर्यथा साङ्ख्यादीनां गुणपुरुषान्तरज्ञानादिना प्रकृतिवियोगा-

दिरूपां मुक्तिमवाऽप्य मुक्तात्मानः सर्वगतत्वात्त्रैलोक्य एव व्यवतिष्ठन्त इति, उच्यते—अस्तिविशिष्टमेव सिद्धिक्षेत्रं पञ्च-
मगतिलक्षणं, तच्च पञ्चचत्वारिंशद्योजनलक्षप्रमाणा शुभापृथिवी, उक्तं च—"निम्मलदगरयवण्णा, तुसारगोखीरहारसम-
वण्णा । उत्ताणयछत्तयसंठिया य भणिया जिणवरेहिं ॥ १ ॥" अन्यत्राप्युक्तं—"तत्र मनोज्ञा सुरभिः, प्राग्भारा नाम
पूर्णचन्द्रनिभा । छत्राकारा वसुधा, मानुषलोकान्तपर्यन्ता ॥ १ ॥" सितशङ्खकुन्दमौक्तिकगोक्षीरतुषारहारसंकाशाऽर्जु-
नसुवर्णमयी स्वच्छाऽत्यन्तं मनोज्ञा च । तत्र न जन्म न मृत्युर्न जरा न व्याधयो न चेष्टवियोगा नानिष्टसंप्रयोगा न क्षुत्प
तृड् न कामरोष न भयं तत्सुखमव्याबाधं सर्वज्ञानां त्रिलोकमूर्धस्थानामात्यन्तिकमैकान्तिकमतीत्य सांसारिकं स्मृतं
सिद्धानामिति कृतं प्रसङ्गेन ॥ ३४४ ॥

सम्प्रति सिद्धिगतिमधिकृत्योपपातविरहकालप्रदर्शनार्थमाह—

**जहन्नेणेगसमओ, उक्कोसेणं तु हुंति छम्मासा । विरहो सिद्धिगईए, उव्वट्टणवज्जिआ नियमा ॥ ३४५ ॥**

व्याख्या—सिद्धिगतौ विरहो जघन्यत एकः समयो भवति, उत्कर्षतः षण्मासाः । सा च सिद्धिगतिर्नियमान्नियमेनो-
द्वर्तनवर्जिता । न खलु सिद्धास्ततः कदाचनाप्युद्वर्तन्ते, उद्वर्तनहेतूनां कर्मणां निर्मूलकाषं कषितत्वात् । उक्तं च—"दग्धे
बीजे यथाऽत्यन्तं, प्रादुर्भवति नाङ्कुरः । कर्मबीजे तथा दग्धे, न रोहति भवाङ्कुरः ॥ १ ॥" ॥ ३४५ ॥

अधुना यावन्त एकसमयेन सिद्धिमुपयान्ति तावत उपदर्शयति—

**इक्को व दो व तिन्नि व, अट्ठसयं जाव एगसमएणं । मणुअगईओ गच्छे, संखाउअ वीअरागा उ ॥ ३४६ ॥**

व्याख्या—एकस्मिन् समये जघन्यत एको द्वौ त्रयो वा सिध्यन्ति, उत्कर्षतोऽष्टशतं–अष्टोत्तरशतं, ते च सिध्यन्ति मनुष्यगतेः सकाशात्, न शेषगतिभ्यः तेऽपि च सङ्ख्येयवर्षायुषः, तत्रापि वीतरागा अपगतरागाः, रागग्रहणमुपलक्षणमपगतसकलकर्मकलङ्काः, न तीर्थान्तरीयसंमता इव सत्कर्माणोऽपि ॥ ३४६ ॥

अत्रैव विशेषोपदर्शनार्थमाह—

**बत्तीसा अडयाला, सट्ठी बावत्तरी य बोद्धव्वा । चुलसीई छण्णउई, दुरहिअमट्ठुत्तरसयं च ॥ ३४७ ॥**

व्याख्या—एकादयो द्वात्रिंशत्पर्यन्ता निरन्तरमष्टौ समयान् यावत् प्राप्यन्ते । इयमत्र भावना—प्रथमे समये जघन्यत एको द्वौ वा सिध्यतः, उत्कर्षतो द्वात्रिंशत् सिध्यन्ति । द्वितीये समयेऽपि जघन्यत एको द्वौ वा सिध्यतः, उत्कर्षतो द्वात्रिंशत् । एवं तृतीयेऽपि चतुर्थेऽपि यावदष्टमेऽपि समये जघन्यत एको द्वौ वा सिध्यतः, उत्कर्षतो द्वात्रिंशत् । परतोऽवश्यमन्तरं समयादि । तथा त्रयस्त्रिंशदादयः क्वचित्समय एकादयो वाऽष्टाचत्वारिंशत्पर्यन्ता निरन्तरं सिध्यन्तः सप्त समयान् यावत् प्राप्यन्ते, परतो नियमादन्तरं समयादि । एवमेकोनपञ्चाशदादयः षष्टिपर्यन्ता निरन्तरं सिध्यन्तः षट् समयान् यावत् प्राप्यन्ते, तत ऊर्ध्वमन्तरं समयादि । एकषष्ट्यादयो द्विसप्ततिपर्यन्ता निरन्तरं सिध्यन्त उत्कर्षतः पञ्च समयान् यावत्, परतोऽन्तरं । त्रिसप्तत्यादयश्चतुरशीतिपर्यन्ता निरन्तरं सिध्यन्त उत्कर्षतश्चतुरः समयान्, परतोऽन्तरं । पञ्चाशीत्यादयः षण्णवतिपर्यन्ता निरन्तरं सिध्यन्तउत्कतस्त्रीन् समयान्, परतोऽन्तरं । सप्तनवत्यादयो द्व्युत्तरशतपर्यन्ता निरन्तरं सिध्यन्त उत्कर्षतो द्वौ समयौ, परतोऽन्तरं । त्र्युत्तरशतादयोऽष्टोत्तरशतपर्यन्ताः सिध्य-

न्तो नियमत एकमेव समयं यावत्प्राप्यन्ते, परतोऽवश्यमन्तरं समयादि ॥ एतदर्थसङ्ग्राहिकेयं प्रक्षेपगाथा—"अट्ठ य सत्त य छ प्पंच चेव चत्तारि तिन्नि दो इक्कं। बत्तीसाइसु समया, निरंतरं अंतरं उवरिं ॥ १ ॥" सुगमा ॥ १ ॥ अत्रैवार्थे विशेषान्तरप्रतिपादिकाः प्रक्षेपगाथाः—"विसित्थिगाउ पुरिसा, अट्ठसयं एगसमयउ सिझे। दस चेव नपुंसा तह, उवरिं समएण पडिसेहो ॥ १ ॥ इय चउरो गिहिलिङ्गे, दसन्नलिंगे सयं च अट्ठहियं। विन्नेअं तु सलिंगे, समएणं सिझमाणाणं ॥ २ ॥ दो चेवुक्कोसाए, चउर जहन्ना य मझिमाए उ। अट्ठाहियं सयं खलु, सिझइ ओगाहणाए उ ॥ ३ ॥ चत्तारि उड्ढलोए, दुवे समुद्दे तउ जले चेव। बावीसमहोलोए, तिरिए अट्ठुत्तरसयं च ॥ ४ ॥" आसामक्षरगमनिका—एकस्मिन् समय उत्कर्षतः स्त्रियो विंशतिः सिध्यन्ति। पुरुषा अष्टशतं—अष्टाधिकं शतं। तथा समयेनैकेन नपुंसका दशैव सिध्यन्ति। उक्तसङ्ख्याया उपरि सर्वत्रापि प्रतिषेधः। तथेत्युत्कर्षतो गृहलिङ्गे वर्तमानाश्चत्वारः सिध्यन्ति, अन्यलिङ्गे वर्तमाना दश, तथा स्वलिङ्ग एकेन समयेन सिध्यतामुत्कर्षतो विज्ञेयमष्टोत्तरं शतं। तथोत्कृष्टायामवगाहनायां युगपदेकसमयेनोत्कर्षतो द्वौ सिध्यतः, जघन्यायां चत्वारः, मध्यमायामजघन्योत्कृष्टरूपायामष्टाधिकं शतं खलु सिध्यति। तत्र जघन्यावगाहना द्विहस्तप्रमाणा, उत्कृष्टा पञ्चविंशत्यधिकपञ्चधनुःशतप्रमाणा, सा च मरुदेवीकालवर्तिनामवसेया। मरुदेव्यप्यादेशान्तरेण नाभिकुलकरतुल्या। तदुक्तं सिद्धप्राभृतटीकायां—"मरुदेवी वि आएसंतरेण नाभितुल्ल त्ति"। उक्तं च सिद्धप्राभृतसूत्रे—"ओगाहणा जहन्ना, रयणिदुगं अह पुणाइ उक्कोसा। पंचेव धणुसयाइं, धणुहपुहत्तेण अहियाइं ॥ १ ॥" अत्र पृथक्त्वशब्दो बहुत्ववाची, बहुत्वं चेह पञ्चविंशतिरूपं द्रष्टव्यं, सिद्धप्राभृतटीकायां तथा व्याख्या-

नात्। तेन पञ्चविंशत्यधिकानीति द्रष्टव्यं । तथोर्ध्वलोक उत्कर्षत एकसमयेन चत्वारः सिध्यन्ति, द्वौ समुद्रे, त्रयो जलमध्ये, एतच्चैतत्प्रक्षेपगाथानुसारेण व्याख्यायते, यावता सिद्धप्राभृतसूत्रानुसारतो जलमध्ये चत्वारो द्रष्टव्याः। अधोलोक उत्कर्षत एकसमयेन सिध्यन्ति द्वाविंशतिरिति, तदप्येतद्गाथानुसारतो व्याख्यातं, सिद्धप्राभृतसूत्रानुसारतस्तु विंशतिपृथक्त्वमवसेयं, केवलं विंशतिपृथक्त्वं द्वाविंशतिप्रमाणं तत्र गृहीतं, "द्विप्रभृत्यानवभ्य" इति पृथक्त्ववचनात्, ततो यद्यत्रापि "दोवीसमहोलोए" इति पठ्यते, ततः समीचीनं भवति। तिर्यग्लोक उत्कर्षत एकसमयेनाष्टोत्तरं शतं सिध्यति। उक्तं च—"चत्तारि उड्ढलोए, जले चउक्कं दुवे समुद्दंमि। अट्ठसयं तिरियलोए, वीसपुहुत्तं अहोलोए ॥१॥" इति ॥ १–२–३–४ ॥ ३४७ ॥

इदानीं समस्तग्रन्थार्थोपसंहारं वक्तव्यशेषोपक्षेपं च कुर्वन्नाह—

**ठिइभवणाणोगाहणवक्कंती वण्णिआ समासेणं। इत्तो तिविहपमाणं, जोणी पज्जत्ति वुच्छामि ॥ ३४८ ॥**

व्याख्या—स्थितिश्च भवनानि च स्थितिभवनानि, अवगाहना च व्युत्क्रान्तयश्च अवगाहनाव्युत्क्रान्तयः, व्युत्क्रान्तयो नाम यत्र मनुष्यादिरागच्छति यतो वा गच्छतीत्येवं गत्यागतिलक्षणा, सुरनारकाणां समासेन संक्षेपेण वर्णिताः। अत ऊर्ध्वं त्रिविधं प्रमाणं योनीः पर्याप्तीश्च वक्ष्ये ॥ ३४८ ॥

तत्रेदं त्रिविधं प्रमाणं, तद्यथा—आत्माङ्गुलं समुच्छ्रयाङ्गुलं प्रमाणाङ्गुलं च। तत्र येनाङ्गुलेन यन्मीयते तदाह—

**आयंगुलेण वत्थुं, उस्सेहपमाणओ मिणसु देहं। नगपुढविविमाणाइं, मिणसु पमाणंगुलेणं तु ॥ ३४९ ॥**

व्याख्या—आत्माङ्गुलेन मिमीष्व वास्तु, तच्च त्रिविधं, तद्यथा—खातमुच्छ्रितमुभयं च । तत्र खातं कूपतडागभूमिगृहादि, उच्छ्रितं धवलगृहादि, उभयं भूमिगृहयुक्तधवलगृहादि । उत्सेधप्रमाणेनाङ्गुलेन मिमीष्व देहं सुरादीनां शरीरं । प्रमाणाङ्गुलेन पुनर्मिमीष्व नगपृथिवीविमानानि, तत्र नगाः पर्वता मेर्वादयः, पृथिव्यो घर्मादयः, विमानानि सौधर्मावतंसकादीनि, विमानग्रहणं भवननरकावासाद्युपलक्षणं, तेन तान्यपि प्रमाणाङ्गुलेन मिमीष्व ॥ सम्प्रत्यङ्गुलभावना क्रियते—तत्र ये यत्र काले पुरुषा भवन्ति तेषां यदात्मीयमङ्गुलं तदात्माङ्गुलं । उच्छ्रयाङ्गुलं परमाण्वादिप्रमितं । तत्र परमाणुर्द्विधा—सूक्ष्मो व्यावहारिकश्च । तत्रानन्तैः सूक्ष्मैः परमाणुभिर्विस्रसापरिणामेन संघातविशेषमापन्नैरेको व्यावहारिकः परमाणुर्निष्पद्यते । तस्य च परिमाणमिदं पूर्वसूरयो ब्रुवते—"सत्थेण सुतिक्खेण वि, छित्तुं भित्तुं च जं किर न सक्का । तं परमाणुं सिद्धा, वयंति आई पमाणाणं ॥ १ ॥" अस्या अक्षरगमनिका—शस्त्रेण खड्गादिना सुतीक्ष्णेनापि छेत्तुं द्विधा कर्तुं भेत्तुं सरन्ध्रमापादयितुं यं पुद्गलविशेषं किलेत्याप्तोक्तौ न शक्ताः पुमांसस्तं परमाणुं परमोऽणुः सूक्ष्मो घटाद्यपेक्षया परमाणुस्तं सिद्धाः सिद्धान्तवेदितया प्रसिद्धा वदन्ति ब्रुवते प्रमाणानामङ्गुलहस्तादीनामादिमूलं । एवंभूताश्चाष्टौ परमाणव एकोच्छ्लक्ष्णश्लक्ष्णिका । अष्टावुच्छ्लक्ष्णश्लक्ष्णिकैका श्लक्ष्णश्लक्ष्णिका । अष्टौ श्लक्ष्णश्लक्ष्णिकैको रथरेणुः । अष्टौ रथरेणव एकस्त्रसरेणुः । अष्टौ त्रसरेणव एकं वालाग्रं । अष्टौ वालाग्राण्येका लिक्षा । अष्टौ लिक्षा एका यूका । अष्टौ यूका एकं यवमध्यं । अष्टौ यवमध्यान्येकमुच्छ्रयाङ्गुलं । षडङ्गुलानि पादः । द्वौ पादौ वितस्तिः । द्वौ वितस्ती एको हस्तः । चतुर्हस्तं धनुः । द्वे धनुःसहस्रे गव्यूतं । चत्वारि गव्यूतानि योजनं ॥ तथा चैतदर्थसङ्ग्राहिकाः प्रक्षेपगाथाः—"परमाणू

अट्ठगुणविवड्ढिआ कमसो ॥ १ ॥ अट्ठ व य जवमज्झाणि
रहरेणू, तसरेणू अग्गयं च वालस्स। लिक्खा जूआ य जवो, चउहत्थं पुण धणुहं, दुन्नि सहस्साइं गाउअं
अंगुलं छच्च अंगुलं पाओ। पाया य दो विहत्थी दो य विहत्थी भवे हत्थो ॥ २ ॥ परमाण्वनन्तरमुल्लक्ष्णश्लक्ष्णिकाश्लक्ष्णश्ल-
तेसिं। चत्तारि गाउया पुण, जोयणमेगं मुणेयव्वं ॥ ३ ॥" सुगमाः। नवरं
क्ष्णिके अनुपात्ते अपि द्रष्टव्ये, तथाऽनुयोगद्वारसूत्रेऽभिधानात् ॥ ३४९ ॥

सम्प्रति प्रमाणाङ्गुलप्रतिपादनार्थमाह—

**उस्सेहंगुलमेगं, हवइ पमाणंगुलं सहस्सगुणं। उस्सेहंगुलदुगुणं, वीरस्सायंगुलं भणिअं ॥ ३५० ॥**

व्याख्या—उत्सेधाङ्गुलमनन्तरव्यावर्णितस्वरूपं सहस्रगुणं सदेकं प्रमाणाङ्गुलं भवति। तथा तदेवोत्सेधाङ्गुलं द्विगुणं सद् वीरस्य भगवतोऽपश्चिमतीर्थकृत एकमात्माङ्गुलं भणितं गणधरप्रभृतिभिः पूर्वाचार्यैः। अत्राह—ननु यदि सहस्रगुणमुत्से-धाङ्गुलमेकं प्रमाणाङ्गुलं भवतीत्युच्यते, प्रमाणाङ्गुलं च भरतस्यात्माङ्गुलं, ततो भरतश्चक्रवर्ती भगवतो वर्धमानस्वामिनः पञ्चशतगुणं प्राप्नोति। कथमिति चेदुच्यते—भरतः किलात्माङ्गुलेनाष्टोत्तरशताङ्गुलप्रमाणो "हुंति पुण अहिय पुरिसा अट्ठ-सयंगुलाण उव्विद्धा" इति वचनप्रामाण्यात्, भरतस्य चात्माङ्गुलमुत्सेधाङ्गुलापेक्षया सहस्रगुणं, ततोऽष्टोत्तरं शतं सहस्रेण गुण्यते, जातमेकं लक्षमष्टौ सहस्राणि १०८००० । भगवांश्च वर्धमानस्वाम्युत्सेधाङ्गुलापेक्षया षोडशोत्तरद्विशताङ्गुलप्रमाणः "द्विगुणमुत्सेधाङ्गुलं वीरस्यात्माङ्गुलम्" इति वचनप्रामाण्यात्। ततोऽष्टसहस्राधिकस्य लक्षस्य द्वाभ्यां षोडशोत्तराभ्यां शताभ्यां भागो ह्रियते, लब्धानि पञ्च शतानि, तत आगतं पञ्चशततमांशो भरताद्वर्धमानस्वामी वर्धमानस्वामिनो वा भरतः पञ्चशत-

गुणः । आह च—"भरहायंगुलमेगं, जइ य पमाणंगुलं विणिद्दिट्ठं । तो भरहो वीराओ, पंचसयगुणो न संदेहो ॥ १ ॥" तथा यदि द्विगुणमुत्सेधाङ्गुलं भगवतो वर्धमानस्वामिन एकमात्माङ्गुलं, ततः कथं भगवानात्माङ्गुलेनाष्टोत्तरशताङ्गुलप्रमाणः, एवं हि चतुरशीत्यङ्गुलप्रमाणः प्राप्नोति, तथाहि—भगवानुच्छ्रयाङ्गुलेन सप्तहस्तप्रमाणः, हस्ते चाङ्गुलानि चतुर्विंशतिः, ततः सप्तभिश्चतुर्विंशतौ गुणितायां जातमष्टषष्ट्यधिकमुच्छ्रयाङ्गुलशतं द्वे चोच्छ्रयाङ्गुले भगवत एकमात्माङ्गुलं, ततोऽष्टषष्ट्यधिकस्य शतस्यार्धं करणीयं, अर्धे च कृते लब्धा चतुरशीतिरित्यागतमात्माङ्गुलेन भगवाँश्चतुरशीत्यङ्गुलप्रमाणः । अथ चाष्टोत्तरशताङ्गुलप्रमाणो गीयते । अथाष्टोत्तरशताङ्गुलप्रमाण एवात्माङ्गुलतो भगवान् ततो "द्विगुणमुत्सेधाङ्गुलमेकं वीरस्यात्माङ्गुलं" इति वचनात् पोडशोत्तरद्विशताङ्गुलप्रमाण उच्छ्रयाङ्गुलतः प्राप्नोति, तथा च सति भगवतः प्रमाणमागतमुच्छ्रयाङ्गुलतो नव हस्ताः । न चैतत्सम्मतमिति कथं यथोक्तमङ्गुलमविसंवादि ? तथा चैतदेवान्यत्राप्युक्तं—"एवं चायंगुलओ, कहमट्ठसयं जिणो हवइ वीरो । उस्सेहंगुलमाणेणं कहं च सयमट्ठसट्ठंसो ॥ १ ॥ दो सोलसुत्तरसया, उस्सेहङ्गुलपमाणओ एवं । अहवायङ्गुलमाणेण, होइ चुलसीइमुच्चिद्धो ॥ २ ॥" इति अत्रोच्यते—यत्किल पूर्वमुक्तमस्माभिरुत्सेधाङ्गुलं सहस्रगुणितमेकं प्रमाणाङ्गुलं भवति, तच्च भरतस्यात्माङ्गुलमिति, तत्रेदं कारणं—भरतः किलात्माङ्गुलेन विंशत्युत्तरमङ्गुलशतं, सर्वेषां तीर्थकृतां चक्रवर्तिनां वासुदेवानां चात्माङ्गुलेन विंशत्युत्तरशताङ्गुलप्रमाणत्वात् । यत्पुनरनुयोगद्वारसूत्रं—"हुंति पुण अहियपुरिसा, अट्ठसयं अङ्गुलाण उच्चिद्धा" । तच्छेषप्रधानपुरुषापेक्षया द्रष्टव्यं । विंशत्युत्तरं चाङ्गुलशतं सपादं धनुः, उत्सेधाङ्गुलेन च भरतः पञ्च धनुःशतानि, ततोऽत्र त्रैराशिकावतारः—यदि सपादेन धनुषा

पञ्च धनुःशतानि लब्धानि तत एकेन धनुषा किं लभामहे १–५००–१, अत्राद्यो राशिः सांश इति सवर्णनार्थं हस्तसङ्ख्या क्रियते, जाताः पञ्च । मध्योऽपि राशिर्हस्तसङ्ख्याकरणार्थं चतुर्भिर्गुण्यते, जातानि विंशतिशतानि । अन्त्योऽपि राशिश्चतुःप्रमाणः ५–२०००–४ । अत्रान्त्येन राशिना चतुष्कलक्षणेन मध्यराशिर्गुण्यते, जातान्यष्टौ सहस्राणि ८००० । तत आद्येन राशिना भागहारः, लब्धानि षोडश शतानि १६०० । तेषां धनुरानयनार्थं चतुर्भिर्भागो ह्रियते, लब्धानि चत्वारि धनुःशतानि, आगतमेकेन धनुषा चत्वारि धनुःशतानि लभ्यन्ते । एवमेकेन हस्तेन चत्वारि हस्तशतानि, एकेनाङ्गुलेन चत्वार्यङ्गुलशतानि, एकेन योजनेन चत्वारि योजनशतानीत्यादि लभ्यते । तत आगतमेकस्मिन् श्रेणिप्रमाणाङ्गुले चत्वार्युत्सेधाङ्गुलशतानि भवन्ति । तच्च प्रमाणाङ्गुलमुत्सेधाङ्गुलबाहल्यमर्धतृतीयोत्सेधाङ्गुलविस्तारं । ततो यानि श्रेणौ चत्वार्युत्सेधाङ्गुलशतानि लब्धानि तान्यर्धतृतीयैरुत्सेधाङ्गुलैर्गुण्यन्ते, तत एवं सहस्रगुणमुत्सेधाङ्गुलमेकं प्रमाणाङ्गुलं भवति, एवंभूतेन प्रमाणाङ्गुलेन पृथिव्यादिप्रमाणान्यानेतव्यानि, न सूच्यङ्गुलेन । तथा यदप्युक्तं द्विगुणमुत्सेधाङ्गुलं भगवतो वर्धमानस्वामिन एकमात्माङ्गुलमित्यादि, तदप्ययुक्तं, वस्तुतत्त्वापरिज्ञानात्, भगवान् हि वर्धमानस्वाम्यादेशान्तरत आत्माङ्गुलेन चतुरशीत्यङ्गुलप्रमाण उच्छ्रयाङ्गुलतोऽष्टपञ्चाधिकशताङ्गुलमानः । आह चानुयोगद्वारचूर्णिकृत्—"वीरो आएसंतरओ आयङ्गुलेण चुलसीइ अङ्गुलमुव्विद्धो उस्सेहङ्गुलओ सयमट्ठसट्ठि हवइ" इति । ततो द्वे उत्सेधाङ्गुले वीरस्यैकमात्माङ्गुलं भवति । येषां पुनर्मतेन भगवानात्माङ्गुलेन विंशत्युत्तरशताङ्गुलप्रमाणस्तेषां समचतुरस्रबाहाप्रतिबाहागणितक्रमेण द्विगुणमुत्सेधाङ्गुलं वीरस्यैकमात्माङ्गुलं भवति । कथमिति चेदुच्यते—यदि भगवानात्माङ्गु-

लेन विंशत्युत्तरशताङ्गुलप्रमाणस्ततो हस्तसङ्ख्यया पञ्चहस्तप्रमाणः, ते च समचतुरस्रबाहाप्रतिबाहारूपेण क्षेत्रगणितक्रमेण पञ्चविंशतिर्भवन्ति, उच्छ्रयाङ्गुलतश्च भगवान् सप्तहस्तप्रमाणः, ते च सप्त हस्ताः समचतुरस्रबाहाप्रतिबाहागणितक्रमेणैकोनपञ्चाशद्भवन्ति, एकश्च हस्तः पार्ष्णिकेशाद्यपेक्षया प्राप्यते, ततः सर्वसङ्ख्यया पञ्चाशद्धस्ताः, पञ्चाशतश्चार्धे पञ्चविंशतिरित्यागतमेकमात्माङ्गुलं भगवतो वीरस्य द्विगुणमुत्सेधाङ्गुलमिति। यदा तु बाहागणितं नापेक्ष्यते, तदा भगवत एकस्मिन्नात्माङ्गुल एकमुत्सेधाङ्गुलं द्वितीयस्य चोत्सेधाङ्गुलस्य द्वौ पञ्चभागौ। तथाहि—यदि विंशत्युत्तरेणाङ्गुलशतेनाष्टषष्ट्यधिकमुत्सेधाङ्गुलशतं लब्धं, तत एकेनात्माङ्गुलेन किं लभामहे? राशित्रयस्थापना—१२०–१६८–१, अत्रान्त्येन राशिनैककलक्षणेन मध्यराशिरष्टषष्ट्यधिकशतप्रमाणो गुण्यते, जातः स तावानेव, एकेन गुणितं तदेव भवतीति वचनात्। तत आद्येन राशिना विंशत्युत्तरशतप्रमाणेन भागहारे लब्धमेकमुत्सेधाङ्गुलं, राशिश्च पश्चादुपर्यवतिष्ठतेऽष्टाचत्वारिंशत्, ततश्छेद्यच्छेदकराश्योश्चतुर्विंशत्यापवर्तनात्, आगतौ द्वौ पञ्चभागौ। येषां पुनर्मते भगवानात्माङ्गुलेनाष्टोत्तरशताङ्गुलमानस्तेषां भगवत एकस्मिन्नात्माङ्गुल एकमुत्सेधाङ्गुलं द्वितीयस्य चोत्सेधाङ्गुलस्य पञ्च नवभागाः। अत्रापि त्रैराशिकं पूर्ववद्भावनीयं ॥ ३५० ॥

सम्प्रति सर्वजीवानां योनिसङ्ख्या प्रदर्श्यते—तत्र योनयो नामोत्पत्तिस्थानानि, ताश्च प्रतिजीवराशिं वर्णगन्धरसस्पर्शभेदादनेकविधाः, ता अपि व्यक्तिरूपा न गृह्यन्ते, व्यक्तीनामानन्त्येन परिगणयितुमशक्यत्वात्, किंतु जातिरूपाः। तत्रानन्ता अपि व्यक्तयः समानवर्णगन्धरसस्पर्शा एका योनिजातिः। उक्तं च—"समवण्णाइ समेया, बहवो वि हु

जोणिभेयलक्खाउ । सामन्ना घिप्पंतीह इक्कगजोणी य गहणेण ॥ १ ॥" एवंरूपाणां जातिभेदानां प्रतिजीवराशिं भेदसङ्ख्याप्रमाणनिरूपणार्थमाह—

**पुढविदगअगणिमारुय, इक्किक्के सत्त जोणिलक्खाउ। वणपत्तेय अणंते, दस चउदस जोणिलक्खाउ ३५१**

**विगलिंदिएसु दो दो, चउरो चउरो अ नारयसुरेसु। तिरिएसु हुंति चउरो, चउदस लक्खा उ मणुएसु ५२**

व्याख्या—पृथिव्युदकाग्निमरुतां संबन्धिन्येकैकस्मिन् समूहे सप्त योनिलक्षा भवन्ति, तद्यथा—सप्त पृथिवीनिकाये, सप्तोदकनिकाये, सप्ताग्निनिकाये, सप्त वायुनिकाये । वनस्पतिनिकायो द्विविधः, तद्यथा—प्रत्येकोऽनन्तकायश्च । तत्र प्रत्येकवनस्पतिनिकाये दश योनिलक्षाः, अनन्तवनस्पतिनिकाये चतुर्दश । विकलेन्द्रियेषु—द्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियरूपेषु प्रत्येकं द्वे द्वे योनिलक्षे, तद्यथा—द्वे योनिलक्षे द्वीन्द्रियेषु, द्वे त्रीन्द्रियेषु, द्वे चतुरिन्द्रियेषु । तथा चतस्रो योनिलक्षा नारकाणां, चतस्रो देवानां, तथा तिर्यक्षु पञ्चेन्द्रियेषु चतस्रो योनिलक्षाः, चतुर्दश योनिलक्षा मनुष्येषु । सर्वसङ्ख्यया चतुरशीतिर्योनिलक्षा भवन्ति । उक्तं च—"नभस्वतः सप्त जलस्य चाग्नेः, क्षितेस्तथा ताश्च निगोदयोर्द्वे । स्मृताश्चतस्रः किल नारकाणां, तथा तिरश्चां त्रिदिवौकसां च ॥ १ ॥ त्रिरीरिते द्वे विकलेन्द्रियाणां, चतुर्दश स्युर्मनुजन्मनां च । वनस्पतीनां दश योनिलक्षा, अशीतिरेवं चतुरुत्तरा स्यात् ॥ २ ॥" इति ॥ ३५१–३५२ ॥

सम्प्रति कुलसङ्ख्या प्रतिपादनीया । कुलानि च योनिप्रभवानि, तथाहि—एकस्यामेव योनावनेकानि कुलानि भवन्ति-

यथा द्वगणयोनौ कृमिकुलं कीटकुलं वृश्चिककुलमित्यादि। तत्र कस्मिन् जीवराशौ कति कुलकोटय इत्येतन्निरूपणार्थमाह—

**बारस सत्त य तिन्नि य, सत्त य कुलकोडि सयसहस्साइं। नेया पुढविदगागणिवाऊणं चेव परिसंखा ३५३**

व्याख्या—पृथिव्युदकाग्निवायूनामेवं कुलपरिसङ्ख्या यथाक्रमं ज्ञेया, तद्यथा—पृथिवीनिकाये द्वादश कुलकोटिशतसहस्राणि, सप्तोदकनिकाये, त्रीण्यग्निनिकाये, सप्त वायुनिकाये ॥ ३५३ ॥

**कुलकोडिसयसहस्सा, सत्त ठ य नव य अठवीसं च। बेइंदिअतेइंदिअचउरिंदिअहरियकायाणं ॥३५४॥**

व्याख्या—अत्रापि यथासङ्ख्येन योजना । द्वीन्द्रियाणां सप्त कुलकोटिशतसहस्राणि । अष्टौ त्रीन्द्रियाणां । नव चतुरिन्द्रियाणां । अष्टाविंशतिर्वनस्पतिकायिकानाम् ॥ ३५४ ॥

**अद्धतेरस बारस, दस दस नव चेव सयसहस्साइं। जलयरपक्खि चउप्पयउरभुअसप्पाण कुलसंखा३५५**

व्याख्या—अत्रापि यथासङ्ख्यं पदघटना । जलचराणामर्धत्रयोदश कुलकोटिशतसहस्राणि । द्वादश पक्षिणां । दश चतुष्पदानां दशोरपरिसर्पाणां । नव भुजपरिसर्पाणाम् ॥ ३५५ ॥

**छवीसा पणवीसा, सुरनेरइआण सयसहस्साइं। बारसयसहस्साइं, कुलकोडीणं मणुस्साणं ॥ ३५६ ॥**

व्याख्या—षड्विंशतिकुलकोटिशतसहस्राणि सुराणां । पञ्चविंशतिकुलकोटिशतसहस्राणि नारकाणां । द्वादश कुलकोटीनां शतसहस्राणि मनुष्याणाम् ॥ ३५६ ॥

एवं सर्वसङ्ख्यया किं स्यादित्याह—

एगा कोमाकोमी, सत्ताणउइ नवे सयसहस्साइं। पन्नासं च सहस्सा, कुलकोमीणं मुणेयवा ॥ ३५७॥

व्याख्या—सर्वसङ्ख्ययैका कुलकोटाकोटी ज्ञातव्या, सप्तनवतिः कुलकोटीनां शतसहस्राणि, पञ्चाशत्सहस्राणि ॥३५७॥

सम्प्रति योनिप्रस्तावादेव संवृताद्या योनिभेदाः कथ्यंते—

एगिंदियनेरइया, संवुमजोणी हवंति देवा य। विगलिंदियाण विअमा, संवुमवियमा य गप्नम्मि ॥३५८॥

व्याख्या—एकेन्द्रियाः-पृथिव्यप्तेजोवायुवनस्पतयो नारका-रत्नप्रभादिपृथिवीसप्तकवर्तिनो देवा-भवनपतिव्यन्तरज्योतिष्कवैमानिकरूपाः संवृतयोनयः। विकलेन्द्रियाणां-द्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियाणां विवृतयोनिः। संवृतविवृता "गप्नम्मि त्ति" गर्भजानां-पञ्चेन्द्रियतिर्यङ्मनुष्याणाम् ॥ ३५८ ॥

तथा—

अचित्ता खलु जोणी, नेरइआणं तहेव देवाणं। मीसा य गप्नवसही, तिविहा जोणी उ सेसाणं ॥३५९॥

व्याख्या—अचित्ताऽचेतना खलुरवधारणेऽचित्तैव योनिर्नैरयिकाणां देवानां ( च ) भवति। मिश्रा सचित्ताचित्तरूपा गर्भवसतिर्गर्भयोनिः, तथाहि—ये शुक्रसन्मिश्राः शोणितपुद्गला योन्याऽऽत्मसात्कृतास्ते सचित्ताः, ये त्वनात्मसात्कृतास्तेऽचित्ताः। एवं मिश्रा गर्भयोनिः। शेषाणां देवनारकगर्भजतिर्यङ्मनुष्यव्यतिरिक्तानामेकद्वित्रिचतुरिन्द्रियसंमूर्च्छिमतिर्यङ्मनुष्याणां त्रिविधा त्रिप्रकारा सचित्ताऽचित्ता मिश्रा च योनिः, यथा जीवति गवादावुत्पद्यमानानां कृम्यादीनां

सचित्ता, अचित्ते काष्ठे घुणादीनामुत्पद्यमानानामचित्ता, सचित्ताचित्ते काष्ठे घुणादीनामुत्पद्यमानानां सचित्ताचित्ता। एवमन्येषामपि भावनीयम् ॥ ३५९ ॥

अधुना शीतोष्णादिभेदतो योनिविशेषमाह—

**सीउसिणजोणीआ, सव्वे देवा य गब्भवक्कंती । उसिणा य तेउकाए, दुह नरए तिविह सेसाणं ॥३६०॥**

व्याख्या—सर्वे देवा भवनपत्यादयः सर्वे च गर्भव्युत्क्रान्तयो—गर्भोत्पत्तिकास्तिर्यङ्मनुष्याः शीतोष्णयोनयः—शीतोष्णरूपोभयस्वभावयोनयः, उष्णयोनिस्तेजस्काये । "दुह नरए त्ति" द्विधा—द्विप्रकारा योनिर्नरके, तद्यथा—आद्यासु तिसृषु पृथिवीषु नारकाः शीतयोनयः, चतुर्थ्यां तु पृथिव्यां केषुचिन्नरकावासेषु शीतयोनयः, केषुचिदुष्णयोनयः । पञ्चम्यां तु प्रभूतेषूष्णयोनयः, स्तोकेषु शीतयोनयः । अन्त्ययोर्द्वयोः पृथिव्योरुष्णयोनय एव । शीतयोनिकानां ह्युष्णवेदनाऽधिका भवति, उष्णयोनिकानां तु शीतवेदना, ततो वेदनाक्रमप्रातिकूल्येन योनिक्रमसंभव । अन्ये तु व्याचक्षते—आद्ये पृथिवीत्रय उष्णयोनयः, चतुर्थ्यां क्वचिदुष्णयोनयः क्वचिच्छीतयोनयः अन्त्यपृथिवीत्रये तु शीतयोनय इति । तच्च नातिश्लिष्टमित्युपेक्ष्यते । "तिविह सेसाणं त्ति" शेषाणां देवनारकतेजोगर्भजतिर्यङ्मनुष्यव्यतिरिक्तानां त्रिविधा—त्रिप्रकारा योनिर्भवति, तद्यथा—केषाञ्चिच्छीता केषाञ्चिदुष्णा केषाञ्चिन्मिश्रा ॥ ३६० ॥

प्रसङ्गत एव मनुष्ययोनिविशेषानाह—

**संखावत्ता जोणी, कुम्मुन्नय वंसपत्त जोणी अ । संखावत्ताइ तहिं, नियमाउ विणस्सए गब्भो ॥ ३६१ ॥**

कुम्मुन्नयजोणीए, तित्थयरा डुविह चक्कवट्टी य। रामा वि य जायंते, सेसाए सेसगजणो य ॥ ३६२ ॥

व्याख्या—त्रिविधा योनिर्मनुष्याणां, तद्यथा—शङ्खावर्ता कूर्मोन्नता वंशीपत्राकारा च। तत्र शङ्खावर्तायां नियमाद्गर्भो विनश्यति न निष्पत्तिं यातीत्यर्थः। कूर्मोन्नतायां तु योनौ तीर्थकरा द्विविधाश्चक्रवर्तिनः—षट्खण्डत्रिखण्डभरतभोक्तारो रामाश्च जायन्ते। शेषायां तु वंशीपत्रायां शेषकजन—इतरजनो जायते ॥ ३६१–३६२ ॥

सम्प्रति यावत्सङ्ख्याः पर्याप्तयो भवन्ति यावत्यश्चैकेन्द्रियादीनां तदेतन्निरूपयति—

आहारसरीरिंदियपज्जत्ती आणपाणभासमणे। चत्तारि पंच छप्पिअ, एगिंदिअ विगलसन्नीणं ॥ ३६३ ॥

व्याख्या—पर्याप्तिर्नाम शक्तिः सामर्थ्यविशेष इत्यर्थः, सा च पुद्गलद्रव्योपचयादुपजायते, किमुक्तं भवति? उत्पत्तिदेशमागतेन प्रथमं ये गृहीताः पुद्गलास्तेषां तथाऽन्येषामपि प्रतिसमयं गृह्यमाणानां तत्संपर्कतस्तद्रूपतया जातानां यः शक्तिविशेष आहारादिपुद्गलखलरसादिरूपतापादनहेतुः, यथोदरान्तर्गतानां पुद्गलविशेषाणामाहारपुद्गलग्रहणखलरसरूपतापरिणमनहेतुः शक्तिविशेषः पर्याप्तिः, ताश्च षट्, तद्यथा—आहारपर्याप्तिः शरीरपर्याप्तिरिन्द्रियपर्याप्तिः प्राणापानपर्याप्तिर्भाषापर्याप्तिर्मनःपर्याप्तिश्च। तत्र यया शक्त्या करणभूतया भुक्तमाहारं खलरसरूपतया कर्तुं समर्थो भवति, साऽऽहारपर्याप्तिः। यया रसीभूतमाहारं रसासृग्मांसमेदोऽस्थिमज्जाशुक्रलक्षणसप्तधातुरूपतया परिणमयति, सा शरीरपर्याप्तिः। यया धातुरूपतया परिणमितादाहारादेकस्य द्वयोस्त्रयाणां चतुर्णां पञ्चानां वेन्द्रियाणां प्रायोग्याणि द्रव्याण्युपादायैकद्वित्र्यादीन्द्रियरूपतया परिणमय्य स्वस्वविषयेषु परिज्ञानसमर्थो भवति सेन्द्रियपर्याप्तिः। यया पुनरुच्छ्वासप्रायो-

ग्यवर्गणाद्दलिकमादायोच्छ्वासरूपतया परिणमय्यालम्ब्य च मुञ्चति, सोच्छ्वासपर्याप्तिः। यया तु भाषाप्रायोग्यदलिकमादाय भाषात्वेन परिणमय्यालम्ब्य च मुञ्चति सा भाषापर्याप्तिः। यया पुनर्मनोयोग्यवर्गणादलिकमादाय मनस्त्वेन परिणमय्यालम्ब्य मुञ्चन्ति, सा मनःपर्याप्तिः। एताश्च यथाक्रममेकेन्द्रियाणां संज्ञिवर्जानां द्वीन्द्रियादीनां संज्ञिनां च चतुःपञ्च-षट्सङ्ख्या भवन्ति। उत्पत्तिप्रथमसमय एव च यथायथं सर्वा अपि युगपन्निष्पादयितुमारभ्यंते, क्रमेण च निष्ठामुपयांति। तद्यथा—प्रथममाहारपर्याप्तिस्ततः शरीरपर्याप्तिस्तत इन्द्रियपर्याप्तिरित्यादि, आहारपर्याप्तिश्च प्रथमसमय एवारभ्यते प्रथमसमय एव निष्पत्तिमुपपद्यते, शेषास्तु प्रत्येकमन्तर्मुहूर्त्तेन कालेन। अथाहारपर्याप्तिः प्रथमसमय एव निष्पद्यत इति कथमवसीयते? उच्यते—इह भगवताऽऽर्यश्यामेन प्रज्ञापनायामाहारपदे द्वितीयोद्देशके सूत्रमिदमपाठि—"आहारपज्जत्तीए अपज्जत्तएणं भंते किं आहारए अणाहारए? गोयमा नो आहारए, अणाहारए" इति। तत आहारपर्याप्त्या-ऽपर्याप्तो विग्रहगतावेवोपपद्यते नोपपातक्षेत्रमागतोऽपि, उपपातक्षेत्रमागतस्य प्रथमसमय एवाहारकत्वात्, तत एकसामयिक्याहारपर्याप्तिनिर्वृत्तिः। यदि पुनरुपपातक्षेत्रमागतोऽप्याहारपर्याप्त्याऽपर्याप्तः स्यात्तत एवं सति व्याकरणसूत्रमित्थं पठेत्—"सिय आहारए सिय अणाहारए" यथा शरीरादिपर्याप्तिषु "सिय आहारए सिय अणाहारए" इति। सर्वासामपि च पर्याप्तीनां परिसमाप्तिकालोऽन्तर्मुहूर्त्तप्रमाणः। यथोक्तपर्याप्तिस्वरूपप्रतिपादिकेयं प्रक्षेपगाथा—"आहारसरीरिंदियऊसासवउमणोभिनिवत्ती। होइ जओ दलिआओ, करणं पइ सा उ पज्जत्ती ॥ १ ॥" आहारशरीरेन्द्रियोच्छ्वासवचोमनसामभिनिर्वृत्तिरभिनिष्पत्तिर्यतो दलिकाद्दलभूतात् पुद्गलसमूहात्तस्य दलिकस्य स्वस्वविषये परिणमनं प्रति यत्

करणं शक्तिरूपं सा पर्याप्तिः ॥ उक्तपर्याप्तिसङ्ख्यादिप्रतिपादिका इमास्तिस्रः प्रक्षेपगाथाः—"आहारे अ सरीरे, तहिंदिए आणपाणभासाए । हुंति मणो वि अ कमसो, पज्जत्तीउ जिणक्काया ॥ १ ॥ एगिंदिएसु चत्तारि, आइउ आइउ य पंच भवे । बेइंदियाइयाणं, पज्जत्तीउ असन्नीणं ॥ २ ॥ छप्पिअ पज्जत्तीउ, बोधबा हुंति सन्निजीवाणं । एआहिं अणिवत्ता, ते उ अपज्जत्तया भणिया ॥ ३ ॥" सुगमाः ॥ ३६३ ॥

इदानीं सकलशास्त्रोपसंहारमाह—

**एसा संखेवत्था, भवाण हियट्ठयाइ समयाउ । कहिया भे संघयणी, संखित्तयरी इमा वन्ना ॥ ३६४ ॥**

व्याख्या—एषाऽनन्तरोदितस्वरूपा सङ्ग्रहणिः संक्षेपार्था भे भवतां भव्यानां हितार्थं समयादागमात् प्रज्ञापनादिरूपादुद्धृत्य कथिता प्रतिपादिता । संक्षिप्ततरा चान्या सङ्ग्रहणिरियं वक्ष्यमाणा ॥ ३६४ ॥

तामेव प्रतिपादयति—

**सरीरोगाहणसंघयणसंठाणकसाय हुंति सन्नाउ । लेसिंदियसमुग्घाए, सन्नी वेए अ पज्जत्ती ॥ ३६५ ॥**

**दिट्ठी दंसणनाणे, जोगुवउगे तहा किमाहारे । उववायठिई समुग्घाय, चवणं गइरागई चेव ॥ ३६६ ॥**

व्याख्या—अत्र प्रथमगाथायामाद्येऽर्धे प्रथमतृतीयगणौ पञ्चमात्रौ, गाथान्तरत्वात् । एतानि शरीरादीनि चतुर्विंशतिसङ्ख्यानि द्वाराणि संक्षिप्ततरा सङ्ग्रहणिः । तत्र शीर्यत इति शरीरं, तच्च पञ्चप्रकारं, तद्यथा—औदारिकं वैक्रियमाहारकं तैजसं कार्मणं च । अमीषां च शब्दव्युत्पत्तिरन्यत्रानेकशः कृतेति ततोऽवधार्या, केवलं स्वामिविषयप्रयोजनप्र-

माणावगाहनास्थित्यल्पबहुत्वकृतो भेदः शास्त्रान्तरेऽभिधीयते, स विनेयजनानुग्रहाय दर्श्यते—तत्र स्वामिकृतो भेदो यथा—तिर्यग्मनुष्याणामौदारिकं शरीरं, वैक्रियं देवनारकाणां मनुष्यतिरश्चां च केषाञ्चित्तल्लब्धिमतां, आहारकं चतुर्दशपूर्वविदां, तैजसकार्मणे सर्वसंसारिणां। विषयकृतो भेदो यथा—विद्याधरानधिकृत्यानन्दीश्वरादौदारिकस्य विषयः, जङ्घाचारणान् प्रत्यारुचकवरपर्वतात्, ऊर्ध्वमुभयान् प्रत्यापाण्डुकवनात्, वैक्रियमसङ्ख्यद्वीपसमुद्रविषयः, आहारकस्य यावन्महाविदेहक्षेत्राणि विषयः, तैजसकार्मणयोः सर्वलोकः। प्रयोजनकृतो भेदो यथा—औदारिकस्य धर्माधर्मसुखदुःखकेवलज्ञानावाप्त्यादि प्रयोजनं, वैक्रियस्य स्थूलसूक्ष्मैकानेकत्वव्योमगमनक्षितिगमनाद्यनेकलक्षणा विभूतिः, आहारकस्य सूक्ष्मार्थविषयसंशयविच्छेदः, तैजसस्याहारपाकः शापानुग्रहप्रदानसामर्थ्यं च, कार्मणस्य भवान्तरे गमनं। प्रमाणकृतो भेदो यथा—उत्कर्षतः सातिरेकयोजनसहस्रमानमौदारिकं, योजनलक्षप्रमाणं वैक्रियं, हस्तप्रमाणमाहारकं, लोकायामप्रमाणे तैजसकार्मणे। स्थितिकृतो भेदो यथा—औदारिकं जघन्येनान्तर्मुहूर्त्तस्थितिकमुत्कर्षतस्त्रिपल्योपमस्थितिकं, वैक्रियं जघन्येनान्तर्मुहूर्त्तस्थितिकमुत्कर्षतस्त्रयस्त्रिंशत्सागरोपमस्थिति, आहारकं जघन्यत उत्कर्षतो वाऽन्तर्मुहूर्त्तस्थिति, तैजसकार्मणे प्रवाहतः सर्वेषामनादिनी भव्यानां सपर्यवसानेऽभव्यानामपर्यवसाने। अल्पबहुत्वकृतो भेदो यथा—सर्वस्तोकमाहारकं, तद्धि कदाचित्संभवति कदाचिन्न, कियत्प्रमाणं पुनस्तस्यान्तरमिति चेदुच्यते—जघन्यत एकः समयः, उत्कर्षतः षण्मासाः, यदापि संभवति तदापि जघन्येनैकं द्वे वा, उत्कर्षतो नव सहस्राणि। आहारकशरीरेभ्यो वैक्रियशरीराण्यसङ्ख्येयगुणानि, नारकदेवानामसङ्ख्येयत्वात्, तेषां चावश्यं वैक्रियशरीरत्वात्। तेभ्य औदारिकशा-

रीराण्यसङ्ख्येयगुणानि, सकलतिर्यङ्मनुष्याणां तत्संभवात्। ननु तिर्यञ्चोऽनन्तास्तत्कथमानन्त्ये सत्यसङ्ख्येयानि शरीराणि
स्युः? उच्यते—इह द्विविधास्तिर्यञ्चस्तद्यथा—प्रत्येकशरीराः साधारणशरीराश्च, तत्र ये प्रत्येकशरीरास्तेषां जीवं जीवं
प्रत्येकं शरीरं, ये साधारणशरीरास्तेषामनन्तानामेकं शरीरं, ततो यद्यप्यनन्तास्तिर्यञ्चस्तथाप्यसङ्ख्येयानि शरीराणीति न
कश्चिद्दोषः। तेभ्योऽप्यनन्तगुणानि तैजसकार्मणानि, स्वस्थाने च परस्परं तुल्यानि, प्रति संसारिजीवं तेषामवश्यंभावात्
। १ । अवगाहना शरीरप्रमाणलक्षणा, सा च नारकादीनां प्राग्वर्णिता। २। संहननं वज्रर्षभनाराचादि षोढा, तच्च
प्रागेवोक्तं। ३। "संठाण त्ति" संतिष्ठन्त्यनेनेति संस्थानं तच्च द्विधा—जीवानामजीवानां च, तत्र जीवानां षोढा समच-
तुरस्रादि, तच्च प्रागुक्तं। अजीवानां पञ्चधा, तद्यथा—परिमण्डलं वृत्तं त्र्यस्रं चतुरस्रमायतं च। तत्र परिमण्डलं वहि-
र्वृत्तावस्थितप्रदेशमन्तःशुषिरं यथा वलयस्य। वृत्तमप्येवंभूतमेव, केवलमन्तः शुषिरहीनं यथादर्शमण्डलस्य। त्र्यस्रं
त्रिकोणं। चतुरस्रं चतुष्कोणं। आयतं दीर्घं। एतानि सर्वाणि घनप्रतरभेदेन द्विविधानि, पुनः परिमण्डलमपहाय शेषा-
ण्योजःप्रदेशजनितानि युग्मप्रदेशजनितानि चेति द्विधा। तत्रौजःप्रदेशं प्रतरवृत्तं पञ्चप्रदेशं पञ्चप्रदेशावगाढं च, तद्यथा—
एकः परमाणुर्मध्ये, चत्वारः क्रमेण पूर्वादिषु चतसृषु दिक्षु, स्थापना—∴। युग्मप्रदेशं प्रतरवृत्तं द्वादशप्रदेशं द्वादश-
प्रदेशावगाढं च तत्र निरन्तरं चतुर्ष्वाकाशप्रदेशेषु चत्वारोऽणवः ततस्तत्परिक्षेपेण शेषा अष्टौ—∷। ओजःप्रदेशं घन-
वृत्तं सप्तप्रदेशं सप्तप्रदेशावगाढं च, तच्चैवं—तत्रैव पञ्चप्रदेशे प्रतरवृत्ते मध्यस्थितस्य परमाणोरुपरिष्टादधस्ताच्चैकैकोऽणु-
रवस्थाप्यते, तत एवं सप्तप्रदेशं भवति ∴। युग्मप्रदेशं द्वात्रिंशत्प्रदेशं, तच्चैवं—पूर्वोक्तस्यैव द्वादशप्रदेशात्मकस्य प्रतर-

वृत्तस्योपरि द्वादश तत उपरिष्टादधस्ताच्च चत्वार इति । ओजःप्रदेशं प्रतरत्र्यस्रं त्रिप्रदेशं त्रिप्रदेशावगाढं च, तच्चैवं—पूर्वं तिर्यगणुद्वयं न्यस्यते, तत आद्यस्याध एकोऽणुः, स्थापना—ः° । युग्मप्रदेशं प्रतरत्र्यस्रं षट्प्रदेशं षट्प्रदेशावगाढं च, तत्र तिर्यङ्निरन्तरं त्रयः परमाणवः स्थाप्यन्ते, तत आद्यस्याध उपर्यधोभावेनाणुद्वयं, द्वितीयस्याध एकोऽणुः ⁘° । ओजःप्रदेशं घनत्र्यस्रं पञ्चत्रिंशत्प्रदेशं, तच्चैवं—तिर्यग्निरन्तराः पञ्च परमाणवः स्थाप्यन्ते, तेषां चाधोऽधः क्रमेण तिर्यगेव चत्वारस्त्रयो द्वावेकश्चेति पञ्चदशप्रदेशात्मकः प्रतरो जातः, ततस्तस्योपरि सर्वपङ्क्तिष्वन्त्यान्त्यपरित्यागेन दश, तथैव तदुपरि षट् त्रय एकश्चेत्यणवः स्थाप्याः, तत एवं पञ्चत्रिंशत्प्रदेशात्मकं स्थापना—⁙ ⁘ ∴ · । युग्मप्रदेशं घनत्र्यस्रं चतुष्प्रदेशात्मकं, तद्यथा—पूर्वोक्तस्य त्रिप्रदेशात्मकस्य त्र्यस्रस्य संबन्धिन एकस्याणोरुपर्येकोऽणुरवस्थाप्यते । ओजःप्रदेशं प्रतरचतुरस्रं नवप्रदेशं नवप्रदेशावगाढं च, तत्र तिर्यग्निरन्तरं त्रिप्रदेशास्तिस्रः पङ्क्तयः स्थाप्यन्ते, स्थापना ⁝⁝⁝ । युग्मप्रदेशं प्रतरचतुरस्रं चतुःप्रदेशं चतुःप्रदेशावगाढं च । तत्र तिर्यग्द्विप्रदेशे द्वे पङ्क्ती स्थाप्येते ⁞ । ओजःप्रदेशं घनचतुरस्रं सप्तविंशतिप्रदेशं, तत्र नवप्रदेशात्मकस्यैव पूर्वोक्तस्य प्रतरस्याध उपरि च नव प्रदेशाः स्थाप्यन्ते । तत ओजःप्रदेशं घनचतुरस्रं भवति, स्थापना । सैव युग्मप्रदेशं घनचतुरस्रमष्टप्रदेशात्मकं, तच्चैवं—चतुःप्रदेशात्मकस्य पूर्वोक्तस्य प्रतरस्योपरि चत्वारोऽन्ये परमाणवः स्थाप्यन्त इति । ओजःप्रदेशं श्रेण्यायतं त्रिप्रदेशं त्रिप्रदेशावगाढं, च तत्र तिर्यग्निरन्तरं त्रयः स्थाप्यन्ते ००० । युग्मप्रदेशं श्रेण्यायतं द्वाभ्यां तिर्यक् स्थिताभ्यां ०० । ओजःप्रदेशं प्रतरायतं पञ्चदशप्रदेशावगाढं, तत्र पञ्चप्रदेशात्मिकास्तिस्रः पङ्क्तयः तिर्यक् स्थाप्यन्ते ⁝⁝⁝⁝⁝ । युग्मप्रदेशं प्रतरायतं षट्प्रदेशं षट्प्रदेशावगाढं च, तत्र त्रिप्रदेशं पङ्क्तिद्वयं तिर्यक् स्थाप्यते ⁞⁞⁞ ।

ओजःप्रदेशं घनायतं पञ्चचत्वारिंशत्प्रदेशं, तत्र पूर्वोक्तस्यैव पञ्चदशप्रतरायतस्याध उपरि च तथैव पञ्चदश पञ्चदशाणवः स्थाप्यन्ते । युग्मप्रदेशं घनायतं द्वादशप्रदेशं, तत्र प्रागुक्तस्य षट्प्रदेशस्य प्रतरायतस्योपरि तथैव तावन्तोऽणवः स्थाप्यन्ते । प्रतरपरिमण्डलं विंशतिप्रदेशं, तच्चैवं—प्राच्यादिषु चतसृषु दिक्षु प्रत्येकं चत्वारश्चत्वारोऽणवः स्थाप्यन्ते, विदिक्षु च प्रत्येकमेकैकोऽणुः, स्थापना—⁘ । घनपरिमण्डलं चत्वारिंशत्प्रदेशं, तत्र तस्या विंशतेरुपरि तथैवान्या विंशतिरवस्थाप्यते । इत्थं चैषां प्ररूपणं, इतोऽपि न्यूनप्रदेशतायां यथोक्तसंस्थानासंभवात् । एतत्सङ्ग्राहिकाश्चेमा उत्तराध्ययननिर्युक्तिगाथाः—"परिमण्डले य वट्टे, तंसे चउरंस आयए चेव । घणपयरपढमवज्जं, ओजपएसे य जुम्मे य ॥ १ ॥ पंचग बारसगं खलु, सत्तग बत्तीसगं च वट्टम्मि । तिय छक्कग पणतीसा, चत्तारि य होंति तंसम्मि ॥ २ ॥ नव चेव तहा चउरो, सत्तावीसा य अट्ठ चउरंसे । तिग दुग पन्नरसेव य, छच्चेव य आयए होंति ॥ ३ ॥ पणयाला बारसगं, तह चेव य आययम्मि संठाणे । वीसा चत्तालीसा, परिमंडलए य संठाणे ॥ ४ ॥" "कसाय त्ति" कष्यन्ते प्राणिनोऽस्मिन्निति कषः संसारस्तस्याया लाभाः प्राप्तयः कषायाः क्रोधमानमायालोभाः । ते च प्रत्येकमनन्तानुबन्ध्यप्रत्याख्यानप्रत्याख्यानसंज्वलनभेदाच्चतुर्धा । तेषां च स्वरूपमिदं—"जलरेणुपुढविपव्वयराइसरिसो चउव्विहो कोहो । तिणसलयाकट्ठट्ठिय, सेलत्थंभोवमो माणो ॥ १ ॥ मायावलेहिगोमुत्तिमिंढसिंगघणवंसमूलसमा । लोहो हलिद्दखंजणकद्दमकिमिरागसारिच्छो ॥ २ ॥ पक्खचउमासवच्छरजावज्जीवाणुगामिणो कमसो । देवनरतिरियनारयगइसाहणहेयवो भणिया ॥ ३ ॥" "सन्नाउ त्ति" संज्ञानं संज्ञा, सा

चतुर्विधा, तद्यथा—आहारसंज्ञा भयसंज्ञा मैथुनसंज्ञा परिग्रहसंज्ञा च । "लेस त्ति" लिश्यते श्लिष्यते कर्मणा सहान-येति लेश्या कृष्णादिद्रव्यसाचिव्यादात्मनः शुभाशुभरूपः परिणामविशेषः । तदुक्तं—"कृष्णादिद्रव्यसाचिव्यात् परिणामोऽयमात्मनः । स्फटिकस्येव तत्रायं लेश्याशब्दः प्रवर्तते ॥ १ ॥" सा च षोढा, तद्यथा—कृष्णलेश्या नीललेश्या कापोतलेश्या तेजोलेश्या पद्मलेश्या शुक्ललेश्या । आसां च स्वरूपं जम्बूफलखादकषट्पुरुषदृष्टान्तेनैवमवसेयं—"जह जंबुपायवेगो, सुपक्कफलभारनमियसाहग्गो । दिट्ठो छहिं पुरिसेहिं, ते बिंती जंबु भक्खेमो ॥ १ ॥ किह पुण बिंतेगो, आरुहणे होज जीवसंदेहो । तो छिंदिऊण मूलाउ, भक्खिमो ताणि पाडेउं ॥ २ ॥ बीयाह किमम्हाणं, तरुणा छिन्नेण एमहंतेण । साला महल्ल छिंदह, तइउ बेइ पसाहाउ ॥ ३ ॥ गोच्छे चउत्थउ पुण पंचमगो बेइ गिण्हह फलाइं । छट्ठो बेई पडिया एए च्चि य खायहा घेत्तुं ॥ ४ ॥ दिट्ठंतस्सोवणउ, जो बेई एय छिंदिमो मूला । सो वट्टइ किण्हाए, साल-महल्ला उ नीलाए ॥ ५ ॥ हवइ पसाहा काऊ, गोच्छा तेऊ फला य पम्हा ए । पडिया य सुक्कलेसा, अहवा अन्नं इमा-हरणं ॥ ६ ॥ चोरा गामवहत्थं, विणिग्गया एगु बेइ घाएह । जं पासह तं सव्वं, दुपयं चउप्पयं वावि ॥ ७ ॥ बीउ माणुस पुरिसे, य तइअउ साउहे चउत्थो य । पंचमउ जुझंते, छट्ठो पुण तत्थिमं भणइ ॥ ८ ॥ इक्कं ता हरह धणं, बीयं मारेह मा कुणह एयं । केवल हरह धणं ता, उवसंहारो इमो तेसिं ॥ ९ ॥ सव्वे मारेह त्ती, वट्टइ सो किण्हलेसपरि-णामे । एवं कमेण सेसा, जा चरिमो सुक्कलेसाए ॥ १० ॥ आइल्लतिन्नि इत्थं, अपसत्था उवरिमा पसत्थाउ । आइल्ला परिहरिउं, जइयव्वं उवरिमासुं तु ॥ ११ ॥" "इंदिय त्ति" इन्द्रियाणि स्पर्शनादीनि "स्पर्शनरसनघ्राणचक्षुःश्रोत्राणीन्द्रि-

याणि" इति वचनात्। तानि च पृथ्वीकृमिपिपीलिकाभ्रमरमनुष्यादीनामेकैकवृद्धानि द्रष्टव्यानि। अमीषां च स्वरूपं द्रव्यत्वावच्छेदनिशं नन्द्यध्ययनटीकातोऽवसेयं। "समुग्घाए त्ति" समुद्घातः स च सप्तप्रकार—"वेयणकसायमरणंतिए य वेउविए समुग्घाए। तेयाहारे तह केवली य इइ सत्त नायवा ॥ १ ॥" अमीषां च स्वरूपं पञ्चसङ्ग्रहटीकातो वेदितव्यं। "सन्नि त्ति" संज्ञाऽस्य विद्यत इति संज्ञी पञ्चेन्द्रियो मनःपर्याप्त्या पर्याप्तः, इतरे त्वसंज्ञिनः पृथिवीकायादयः संमूर्छिमपञ्चेन्द्रियपर्यवसानाः। अथवा संज्ञी त्रिविधः—दीर्घकालिक्युपदेशेन हेतुवादोपदेशेन दृष्टिवादोपदेशेन च। तत्र दीर्घकालिक्युपदेशेन करोम्यहं कृतवानहं करिष्याम्यहमित्येवं त्रिकालविषयसंज्ञः संज्ञी, इतरस्त्वसंज्ञी। हेतुवादोपदेशेन संज्ञी कारणमधिकृत्य, यथा कृम्यादयोऽपि घर्माद्यभिभूतास्तन्निराकरणाय प्रयतन्ते, तस्मात्तेऽपि संज्ञिनः प्रतिपत्तव्याः, केवलं तेषां दीर्घकालिकी संज्ञा नास्ति। तथा चोक्तं—"जे पुण संचिंतेउं, इट्ठाणिट्ठेसु विसयवत्थूसुं। वट्टंति नियत्तंति य, सदेहपरिपालणाहेउं ॥ १ ॥ पाएण संपइ च्चिय, कालम्मि न यावि दीहकालम्मि (न्ना)। ते हेउवायसन्नी, निच्चिट्ठा होंति अस्सन्नी ॥ २ ॥" दृष्टिवादोपदेशेन सम्यग्दृष्टिरेव संज्ञी, शेषास्त्वसंज्ञिनः. हिताहितप्राप्तिपरिवर्जनलक्षणसंज्ञिसाध्यप्रयोजनाकरणात्। उक्तं च—"सम्मद्दिट्ठी सन्नी, संते नाणे खओवसमियम्मि। अस्सन्नी मिच्छत्तंमि, दिट्ठिवाओवएसेणं ॥ १ ॥" "वेयत्ति" वेद्यते इति वेदः, स च त्रिधा, तद्यथा—स्त्रीवेदः पुरुषवेदो नपुंसकवेदश्च ११। "पज्जत्ति त्ति" पर्याप्तयस्ताश्च प्रागेवोक्ताः १२। "दिट्ठि त्ति" दृष्टिस्त्रिधा, तद्यथा—सम्यग्दृष्टिर्मिथ्यादृष्टिः सम्यग्मिथ्यादृष्टिश्च १३। "दंसणे त्ति" दर्शनं, तच्चतुर्धा, तद्यथा—चक्षुर्दर्शनमचक्षुर्दर्शनमवधिदर्शनं केवलदर्शनं १४। "नाण त्ति" ज्ञानं, तच्च

पञ्चप्रकारं, तद्यथा—मतिज्ञानं श्रुतज्ञानमवधिज्ञानं मनःपर्यवज्ञानं केवलज्ञानं चेति १५। "जोग त्ति" योगा मनोवाक्कायाः १६। "उवजोग त्ति" उपयोगः, स च द्विविधः—साकारोऽनाकारश्च १७। "किमाहार त्ति" किमाहारकोऽनाहारको वा जीव इति प्रश्ने "विग्गहगइमावन्ना" इत्याद्युक्तमेव १८। "उववाउ त्ति" उपपतनमुपपातः प्रसूतिर्देवनारकाणां, स च प्रागेवोक्तः १९। "ठिइ त्ति" स्थितिरायुष्कं, सा च देवनारकादीनां प्रागेवोक्ता २०। "समुग्घाए त्ति" समुद्घातः खल्वयमचित्तमहास्कन्धसमुद्घातः, स च केवलिसमुद्घातक्रमेण द्रष्टव्यः २१। च्युतिश्चवनं, तच्चामरादीनामधस्तादुक्तं २२। "गइ त्ति" गमनं गतिर्मनुष्यादीनां विबुधादिषु २३। "आगइ त्ति" आगमनमागतिः, विबुधानां मनुष्यादिषु, द्वारत्रयस्याप्यर्थो न्यक्षेणाधः प्रतिपादित एव ॥ २६५–२६६ ॥

तदेवं संक्षिप्तां संक्षिप्ततरां च सङ्ग्रहणिमभिधाय सम्प्रत्याचार्योऽनुद्धतत्वमात्मनो दर्शयन्नाह—

**जं उद्धियं सुयाउ, पुव्वायरियकयमहव समईए। खमियव्वं सुयहरेहिं, तहेव सुयदेवयाए य ॥ २६७ ॥**

व्याख्या—अथवा प्रकरणाभिहितोऽर्थो विशिष्टश्रमणपर्यायप्राप्यः सन् कृपया सर्वेषामासन्नीकृत इत्यात्मनोऽपराधस्थानमाशङ्क्याह—"जं उद्धियं" इत्यादि, यदुद्धृतं श्रुतात् प्रज्ञापनादेः कालान्तरे प्राप्यं पूर्वाचार्यकृतं वा यदुद्धृतमथवा स्वमत्या तत्क्षन्तव्यं श्रुतधरैः, तथैव श्रुतदेवतयेति ॥ २६७ ॥

सङ्ग्रहण्यां मतेर्दोषाद्व्याख्यातं यो यदन्यथा। श्रुतज्ञैर्नः समस्तं तत् क्षन्तव्यं बालबोधवत् ॥ १ ॥

सङ्ग्रहणेर्विवृत्तिमिमां कृत्वा यदवापि मलयगिरिणेह। कुशलं तेन लभन्तां श्रुत्वा सर्वेऽपि जिनवचनम् ॥ २ ॥

